**ण पराणु॰** गाहा । वस्तुधर्मं वाऽऽकारमनिच्छतो यदभिमतं तदवस्तु । कुतः ? अनाकारत्वात् खपुष्पवत् । इतश्च नाऽनाकारं वस्त्वस्ति, सर्वथानुपलब्धेः, संव्यवहाराभावाच्च, खपुष्पवदिति ॥६५॥

**दव्वपरिणाम[1]मेत्तं मोतू[2]णागारदरिसणं किं तं ? ।**
**उप्पाद[3]व्वयरहितं[4] दव्वं चिय [5]णिव्वियारं तं ॥६६॥**

**दव्वपरि॰** गाहा । द्रव्यनयोऽभिमन्यते—कोऽयमाकारः( र )ग्राहो नाम ? द्रव्यमेवेदमुत्पाद-व्यय-विकारशून्यम्, कारणमात्रमेवेत्यर्थः ॥६६॥

**आविब्भावतिरोभावमेत्तपरिणामकारणमचिंन्तं ।**
**[7]णिच्चं बहुरूवं पि य णडो[8] व्व वेसन्तरावण्णो[9] ॥ ६७ ॥**

**आविब्भाव॰** गाहा । आह—प्रत्यक्षादिविरुद्धमिदमुच्यते 'कारणमात्रमेवेदम्' इति । ननु घटाकारादि कार्यं प्रत्यक्षमुपलभ्यते, कार्याभावे च कारणव्यपदेशोऽप्ययुक्त एवेति । उच्यते—इह वस्तुनोऽवस्थितस्य तमसि घटस्येवाऽऽविर्भावतिरोभावमात्रपरिणामो यस्तत्र कार्यमित्युपचारः क्रियते, परमार्थतस्तु द्रव्यमेव तत् परिणमति कारणमचिन्त्यमवस्थितम्, अनेकरूपस्वभावनटवत् ॥६७॥

**पिंडो कारणमिट्ठं पयं व परिणामतो[10] तधा[11] सव्वं ।**
**आगाराइ[12] ण वत्थुं [13]णिक्कारणतो[14] खपुप्फं व्व ॥ ६८ ॥**

**पिंडो कार॰** गाहा । मृत्पिण्डः कारणमिष्टः । कुतः ? परिणामात् । तथाहि—'सर्वं' कारणमात्रं द्रव्यमित्यर्थः । न च परानुमतमाकारादि वस्त्वस्ति, निष्कारणात्, खपुष्पवदिति ॥६८॥

**भावत्थन्तरभूतं[15] किं दव्वं णाम[16] भाव एवायं ।**
**भवणं [17]पतिक्खणं[18] चिय भावावत्ती विवत्ती य ॥ ६९ ॥**

**भावत्थन्तर॰** गाहा । भावनयमतमिदम्—भावादर्थान्तरभूतं किं तदुच्यते नाम [ द्रव्यम् ] ? भावमात्रमेवेदम् । यदि हि किञ्चिदवस्थितं भवेद् वस्त्वन्तरारम्भे वा व्याप्रियते अतो द्रव्यं परिकल्प्येत । ननु( ? न ) च तदस्ति यतः प्रतिक्षणभवनात् प्रतिक्षणविनाशाच्च ॥६९॥

---

१ °मित्तं को हे । २ मुत्तू° त । ३ °प्पाय° को हे । ४ °हिअं को हे । ५ नव्वि° त । निव्वि° को हे । ६ °चिंतं को । ७ नि° को हे । ८ णरो जे । ९ °न्नो-को हे । १० °मओ को हे । ११ तहा को हे । १२ °राति ण जे । १३ नि° जो हे । १४ °णओ को हे । १५ °भूअं को हे । १६ नाम को हे । १७ °नं को हे । १८ पइक्ख° को हे ।

**ण[1] य भावो भावंतरमवेक्खं[2]ते[3] किंतु हेतुं[4]णिरवेक्खं ।**
**उप्पज्जति[5] तद[6]णंतरमवेति[7] तमहेतुतो[8] चेव ॥७०॥**

**ण य भावो** गाहा । आह—कथं तर्हि कार्यस्य प्रतिक्षणं भवनं यदि कारणमसदुच्यते ? न च भावाद् भावो भवद्भावभावा-( भवन् भावा )न्तरं कारणाख्यमपेक्ष्य( क्ष )ते, किन्तु सन्तानमनु प्रत्ययोपष्टम्भाद्धेतुनिरपेक्ष्य(क्ष)मेवोपपद्यते कार्यम्, उत्पत्त्यनन्तरं वाऽहेतुत एवोपरमतीति ॥७०॥

**पिण्डो कज्जं प[9]तिसमयभा[10]वंतो जध[11] दधिं तधा सव्वं ।**
**कज्जाभावातो[12] णत्थि कारणं खरविसाणं व ॥७१॥**

**पिंडो कज्जं** गाहा । पिण्डः कार्यमात्रमेवेति कुतः ? प्रतिसमयभवनात् द्रव्यदधिवत् । तथाहि—सर्वं कार्यमात्रं भाव एवेत्यर्थः । न च पराभिमतं कारणाख्यं वस्त्वस्ति, कार्याभावात्, प्रतिसमयभवनाभावादित्यर्थः, खरविषाणवत् ॥७१॥

**[13]एवं वि[14]वदंति ण[15]या मिच्छाभिणिवेसतो[16] परोप्परतो[17] ।**
**इद[18]मिह सव्वण[19]यमयं जिणमं[20]तमणवज्जमच्चंतं ॥७२ ॥**

**एवं विव०** गाहा । एवमेते नामादयो नयविशेषाः परस्परतो विवदन्तो मिथ्याभिनिवेशादेकान्तग्राहिणो मिथ्यादृष्टयः । कुतः ? अयथार्थग्राहात्, [21]जात्यन्धवत् । इदमिह सर्वनयसमूहमयं जैनमनवद्यं दर्शनम्, समस्तवस्तुपर्यायग्राहात्, समस्तहस्तिदर्शनवत् ॥७२॥

**[22]णामादिभेदसद्दत्थबुद्धिपरिणामभा[23]वंतो णियतं ।**
**जं वत्थुमत्थि लोए चतुं[24]प[ध-द्वि०]ज्जायं तयं सव्वं ॥ ७३ ॥**

**णामादि०** गाहा । इह यल्लोके वस्त्वस्ति तत् सर्वं नामादिचतुष्पर्यायम् । कुतः ? नामादिभेदेषु शब्दार्थबुद्धीनां परिणामसद्भावात् । इह च नामादिचतुष्टयमतिक्रम्य शब्दार्थबुद्धीअत्यन्त( ? द्धीनामन्य )विषयो न दृष्टः । यत्र च ( यच्च ) शब्दादिविषयस्तच्चतुष्पर्यायं दृष्टम्, यथा घटः, यच्चेह चतुष्पर्यायं न भवति न तत्र शब्दादिपरिणामः, यथा खरविषाणे ॥७३॥

---

१ न को हे । २ °मवक्ख° जे । ३ °क्खए को हे । ४ हेउनि° को हे । ५ °ज्जइ को हे । ६ तयणं को हे । ७ °वेइ को हे । ८ °तुअं त । उअं को हे । ९ पइ° को हे । १० °भावाओ को । भावाउ हे । ११ जह दहिं तहा को हे । १२ °वाओ न° को । भावाउ न° हे । १३ आ० एवं जे । १४ °वयं° को हे । १५ नया को हे । १६ °भिनिवेसओ को हे । १७ °रओ को हे । १८ इयमि° को हे । १९ °नयमयं जे । °नयमियं त । २० जिणवयम° त । जिणमय° को हे । २१ °हाद्धस्तान्ध° इति प्रतौ । अत्र '°ग्राहात् हस्त्यन्धवत्'–इत्यपि स्यात् सम्यग् । २२ नामाइमेअ° हे । नामाइ° को सं । २३ °वओ निययं को हे त । २४ चउप° को हे ।

**इय सव्वभे[1]असंघात[2]कारिणो भिण्ण[3]लक्खणा एते ।**
**उप्पाया[4]इतियं पिव ध[5]म्मा प[6]तिवत्थुमा[7]योज्जा ॥ ७४ ॥**

**इय सव्व०** गाहा । 'इति' एवम् 'एते' नामादयः सर्वभेदकारिणः सर्वसङ्घातकारिणश्च । कथम् ? यस्मादिन्द्र इत्याकारिते प्रतिवस्तु अभिधानादिभेदानामानन्त्यं इष्यताऽध्यवसीयते क्वचित् समस्तवस्तुकलापाध्यारोपादेकत्वमिति । भिन्नलक्षणाश्चैते, तत्प्रत्ययादिभावात्, घटादिवत् । सर्वत्र चोत्पाद-व्यय-ध्रौव्यत्रयवदायोजनीयाः, तल्लक्षणत्वाद् वस्तुनः ॥७४॥

**णामाइ[8]तियं दव्वट्ठियस्स भावो य पज्जवण[9]यस्स ।**
**संगहववहारा पढमगस्स सेसा य इत[10]रस्स ॥ ७५ ॥**

**णामादिति०** गाहा । अत्र च नाम-स्थापना-द्रव्यनिक्षेपत्रयं द्रव्यास्तिकस्यैवा[11]भिमतम्, न पर्यायास्तिकस्य, तदर्थशून्यत्वात् । पर्यायास्तिकस्य तु भाव एव । द्रव्यास्तिकनयावलम्बिनौ संग्रहव्यवहारौ, ऋजुसूत्रादयस्तु पर्यायनयमतानुसारिण[12] आचार्य**सिद्धसेना**भिप्रायात्; अन्यथा हि सूत्रेऽभिहितम्—"उज्जुसुतस्स एगे अणुवयुत्ते आगमतो एगं दव्वावस्सयं, पुधत्तं णेच्छति' [अनु० १४] इति, अतस्स द्रव्यमिच्छन्[13] कथं भावमात्रग्राहिणं पर्यायनै[14]यमालम्बति ? ॥७५॥

**[15]जं सामण्ण[16]ग्गाही संगिण्हति[17] तेण संगहो निय[18]यं ।**
**जेण विसेसग्गाही ववहारो तो विसेसेति[19] ॥ ७६ ॥**

**जं सामण्ण०** गाहा । सामान्यमात्रग्राहित्वात् संग्रहः सर्वनामान्येकमिच्छति, तथा स्थापनां द्रव्यं चेति । व्यवहारस्तु विशेषग्राहित्वात् तान्येव प्रतिभेदमिच्छतीति ॥७६॥

**सद्दु[20]ज्जुसुता पज्जायवायगा भा[21]वसंगहं बेंति ।**
**उवरिमया विवरीता[22] भावं [23]भिन्दन्ति तो [24]णियतं ॥ ७७ ॥**

**सद्दुज्जुसुता** गाहा । ऋजुसूत्र-शब्दौ शक्रेन्द्र-पुरन्दरादिपर्यायशब्दग्राहाद् भावेन्द्रा( न्द्रः? )संग्रहमिच्छतः । समभिरूढैवम्भूतौ तु प्रतिशब्दार्थग्राहात् प्रतिशब्दं भिन्नमिति ॥७७॥

---

१ मेत° जे । २ °घाय° को हे । ३ °न्न° को हे । ४ °प्पातातिं° जे । ५ धम्मी त । ६ पई को हे ७ °माउज्जा को हे । ८ नामाति° जे । ९ °नय° को हे । १० इयर° को हे । ११ °स्यैवभिमते न इति प्रतौ १२ °सारेणइतिप्रतौ । १३ °च्छन्न कथंइतिप्रतौ । १४ प्रर्यायनान्यमा–इतिप्रतौ । १५ आ० जं जे । १६ °न्न° को हे १७ °ण्हइ को हे । १८ नियय जे । १९ °सेइ को हे । २० सुद्दउ° त । २१ °गा तेण संगहं–त । २२ °रीआ को हे । २३ भिंदंति को हे । २४ नियय को हे ॥

**मंगलमधवा[1] णन्दी चतुव्विधा[2] मंगलं व सा [3]णेया ।**
**दव्वे तूरसमुदयो[4] भावम्मि य पंच णाणाइं ॥ ७८ ॥**

**मंगलमधवा** गाहा। अथवा मङ्गले(लं) नन्दी, साऽपि हि चतुर्विधैव नामादिभेदान्मङ्गलवदेव ज्ञेया । द्रव्यनन्दी नानातूर्यसंघातः । भावनन्दी पञ्चज्ञानानि ॥७८॥

[ ज्ञानपञ्चकम् ]

**आभिणिबोहियणाणं[5] सुतणाणं[6] चेव [7]ओधिणाणं च ।**
**तध[8] मणपज्जवणाणं[9] केवलणाणं[10] च पंचमयं ॥ १ ॥ ७९ ॥**

**अत्थाभिमुहो [11]णियतो बोधो[12] जो सो मतो[13] अभिणिबोधो[12] ।**
**सो चेवाभिणिबोधियं[14]मधव[15] जधा[16]जोग[17]माओज्जं[18] ॥ ८० ॥**

**आभिणिबोहि** गाहा । [**अत्थाभि०** गाहा ।] अर्थाभिमुखो नियतो बोधोऽभिनिबोधः । स एव स्वार्थिकप्रत्ययोपादानादाभिनिबोधिकः । अथवा यथायोगमायोजनीयम्, तद्यथा—अभिनिबोधे भवं तेन निर्वृत्तं तन्मयं तत्प्रयोजनं वेत्या भिनिबोधिकम् ॥७९–८०॥

**तं तेण ततो[19] तम्मि व सो वाभिणिबुज्झए तओ वा तं ।**
**तं तेण ततो[19] तम्मि व सुणेति[20] सो [७-प्र०] वा सुतं[21] तेणं[22] ॥८१॥**

**तं तेण ततो०** गाहा । तं तेन वा तस्माद्वा [तस्मिन् वा] स एव वाऽभिनिबुध्यत इत्याभिनिबोधिकम् । तेन वा तस्माद्वा तस्मिन् वा शृणोतीति श्रुतम् । आत्मैव वा श्रुतोपयोगपरिणामानन्यत्वात् शृणोतीति श्रुतम् ॥८१॥

**तेणाव[23]धीयते तम्मि वावधा[24]णं ततो[25]ऽवधी सो य[26] ।**
**[27]मज्जाया जं [28]तीए दव्वाइं[29] परोप्परं मुणति[30] ॥८२॥**

**तेणाव०** गाहा । अवधीयते तेन तस्मिन् वेत्यवधिः । अवधानं वा अवधिः, मर्यादा इत्यर्थः । तया हि परस्परोपनिबन्धना द्रव्यादयोऽवधीयन्त इत्यवधिः ॥८२॥

१ °महवा न° को हे खं । २ चउव्विहा को हे । ३ नेया को हे । ४ ° मुदओ को हे त । °दया जे । ५ °नाणं को हे । ६ सुय° को हे । ७ ओहि° को हे । ८ तह को हे । ९ °नाणं को हे । १० णाणं पं० जे । ११ नियओ हे । निअओ को । १२ बोहो को हे । १३ मओ को हे । १४ बोहिअ को हे । १५ °महव को हे । १६ जहा को हे । १७ जोग्ग त । १८ °माउज्जं को हे । १९ तओ को हे । २० °णेइ को हे । २१ सुअं को हे । २२ तेण को । २३ °वहीयए को हे । २४ °हाणं को हे । २५ °णं वतो जे । तओवही त को हे । २६ सो य मज्जया । जं हे । सो य । मज्जाया जं को । २७ मज्जता जे । २८ ताए जे । २९ °व्वाइ प्प° त । °व्वाति प° जे । ३० °णइ को । °णइ तओऽवहि त्ति ॥ हे ।

**पज्जवणं पज्जयणं पज्जायो[1] वा मणम्मि मणसो वा ।**
**तस्स व पज्जायादी[2] णाणं मणपज्जवं[3]णाणं ॥८३॥**

**पज्जवणं** गाहा । परिः—सर्वतो भावे अवनं—गमनं पर्यवः, मनसि मनसो वा पर्यवः मनःपर्यवः स एव ज्ञानं मनःपर्यवज्ञानम् । तथा पर्ययणं पर्ययः, मनसि मनसो वा पर्ययः मनःपर्ययः, स एव ज्ञानं मनःपर्ययज्ञानम् । तथा आयः प्राप्तिर्लाभ इत्यनर्थान्तरम्, सर्वतः आयः पर्यायः, मनसि मनसो वा पर्यायः मनः–पर्यायः, स एव ज्ञानं मनःपर्यायज्ञानम् । अथवा मनसि मनसो वा पर्यवाः तेषां तेषु वा ज्ञानं मनःपर्यवज्ञानम् । तथा मनसि मनसो वा पर्ययाः पर्याया वा तेषां तेषु वा ज्ञानं [मनःपर्ययज्ञानं] मनःपर्यायज्ञानते(नं वे)त्यर्थः ॥८३॥

**केवलमेगं सुद्धं सकलमसाधारणं[4] अणंतं च ।**
**पायं च [5]णाणसद्दो [6]णामसमाणार्धिकरणोऽयं[7] ॥८४॥**

**केवल०**गाहा । केवलम्—एकं शुद्धं सकलमसाधारणं चेत्यर्थः । ज्ञानशब्दश्च सर्वत्राभिनिबोधिकादिनामभिः समानाधिकरणो द्रष्टव्यः । तद्यथा—आभिनिबोधिकं च तद् ज्ञानं चेति, एवं सर्वत्र । प्रायोग्रहणादन्योऽपि समासः स्यान्मनःपर्याय-ज्ञानेऽन्यत्र वा सम्भवतः ॥८४॥

**जं सामिकालकारणविसयपरोक्खत्तणेहि[10] तुल्लाइं ।**
**तब्भावे सेसाणि य तेणा[11]इए मतिसुताइं[12] ॥८५॥**

**जं सामि०** गाहा । इह समानस्वामित्वात् सर्वकालानुच्छेदात् समानस्थितित्वाद् इन्द्रियानिन्द्रियनिमित्तत्वात् क्षयोपशमकारणत्वात् सर्वद्रव्यादिविषयसामान्यात् परोक्ष-त्वसामान्यात् तद्भावे च शेषज्ञानसद्भावादादौ मति-श्रुते ॥८५॥

**[13]मतिपुव्वं जेण सुतं[14] तेणादीएं[15] मती[16] विसिट्ठो वा ।**
**[13]मतिभेओ[17] चेव सुतं[18] तो [13]मतिसमणंतरं भणितं[18] ॥८६॥**

**मतिपुव्वं** गाहा । तयोरपि च "श्रुतं मतिपूर्वम्"[तत्त्वार्थ० १.२०]इति वचनात् तत्पूर्वकत्वाच्छ्रुतस्य आदौ मतिः । अथवेन्द्रियानिन्द्रियनिमित्तत्वादुभयमप्यविशिष्टा मतिः, किन्तु परोपदेशमात्रभेदोऽ(दाद)र्हद्वचनकारणत्वाच्च तद्विशेष एव श्रुतमिति, अतो मत्यनन्तरमिति ॥८६॥

---

१ °ज्जाओ को हे २ °दिन्नाणं को हे त । ३ °वं नाणं को हे । ४ सग° को हे । ५ °साहा° को हे । ६ नाण° को हे । ७ नाम° को हे । ८ °णाहिगर° को हे । ९ °णो य जे । १० °हिं को हे । ११ °णातीए जे । १२ मइसुयाइं को हे । १३ मइ को हे । १४ सुयं को हे । १५ °णाईए को हे । १६ मई को हे । १७ मेतो जे । १८ °यं को हे ।

कालविवज्जंयसामित्तलाभसाधंम्मतोवधी तत्तो ।
माणसमेत्तो छउँमत्थविसयभावादिसामण्णा ॥८७॥

**कालवि०** गाहा । मति-श्रुतसमानकालत्वाद् मिथ्यादर्शनपरिग्रहाच्च तद्विपर्ययसाधर्म्यात् स्वामिसाधर्म्यात् कचिल्लाभकालैकत्वाच्च ताभ्यां समनन्तरोऽवधिरिति । ततश्छद्मस्थस्वामिसामान्यात् पुद्गलमात्रविषयसामान्यात् क्षायोपशमिकभावसामान्यात् प्रत्यक्षादिसामान्याच्च मानसमिति गाथार्थः ॥८८॥

अंते केवलमुत्तमजइसामित्तावसाणलाभाओ ।
एत्थं च मतिंसुताइं परोक्खमितरं च पच्चक्खं ॥८८॥

**अंते** गाहा । अन्ते केवलम्, उत्तमत्वात् सर्वशुद्धत्वादित्यर्थः, तथा यतिस्वामिसाम्यात् सर्वावसानलाभाच्चेति । अत्र च मति-श्रुते परोक्षम्, इतरत् प्रत्यक्षम् ॥७८ ॥

जीवो अक्खो अत्थव्वावण-भोयणगुणण्णितो[10] जेणं ।
तं पति[11] वट्टति[11] णाणं जं पच्चक्खं तयं तिविधं[13] ॥८९॥

**जीवो अक्खो** गाहा । इह जीवोऽक्षः । कथम् ? "अशू व्याप्तौ" इत्यस्य ज्ञानात्मनाऽश्नुते—व्याप्नुतेऽर्थानिति अक्षः, व्याप्नोतीत्यर्थः । "अश भोजने" इत्यस्य वाऽश्नाति सर्वार्थानिति अक्षः, पालयति भुङ्क्ते चेत्यर्थः । अक्षं प्रति वर्त्तत इति प्रत्यक्षम्, अवध्यादि, अतीन्द्रियमित्यर्थः ॥८९॥

अक्खस्स पोग्ग[७-द्वि०]लकता जं दव्विन्दियमणा परा तेणं ।
तेहिंतो जं णाणं परोक्खमिह तमणुमाणं व ॥९०॥

**अक्खस्स** गाहा । इहाक्षस्य द्रव्येन्द्रियाणि द्रव्यमनश्च पुद्गलमयत्वात् पराणि, पृथगित्यर्थः । 'तेभ्यः' परेभ्योऽक्षस्य यद् ज्ञानमुत्पद्यते तत् परोक्षम्, इन्द्रिय-मनोनिमित्तमित्यर्थः । परोक्षम् इन्द्रिय-मनोनिमित्तम्, आत्मनः परनिमित्तत्वात्, अनुमानवत् ॥९०॥

केसिंचि इन्दियाइं अक्खाइं तदुवलद्धिपच्चक्खं ।
[17]तं णो ताइं जमचेतणाइं जाणंति ण[19] घडो व्व ॥९१॥

---

१ °ज्जि° त । २ साहम्मओवही को हे । ३ मित्तो को हे । ४ छतु° जे । ५ °तो जे । ६ मइसुया° को हे । ७ °यरं को हे । ८ अक्खो जीवो त । ९ भाय° जे । १० °ओ जेण हे । ओ जे° को । ११ °इ को हे । १२ ना° को हे । १३ ° हं को हे । १४ °क्या को हे । १५ नाणं को हे । १६ °आइं को हे । १७ तन्नो को हे । १८ °अणा° को हे । १९ न को हे ।

**केसिंचि** गाहा । इह 'केषाञ्चिद्' **वैशेषिकादीनां** अक्षाणि इन्द्रियाणि, तदुपलब्धिः प्रत्यक्षम् । तदिहोच्यते—नोपलब्धिमन्तीन्द्रियाणि, अचेतनत्वात्, घटवत्, तथा मूर्त्तिमत्त्वात् स्पर्शवत्त्वादित्यादि ॥९१॥

**उवलद्धा तत्थाता तव्विगमे तदुवलद्धसरणातो[२] ।**
**गेहगवक्खोवरमे वि तदुवलद्धाणुसरिता वा ॥९२॥**

**उवलद्धा** गाहा । आह—प्रत्यक्षविरुद्धमिदमुच्यते—'नोपलब्धिमन्तीन्द्रियाणि' साक्षादुपलब्धेः । उच्यते—उपलब्धा तत्राऽऽत्मा, नेन्द्रियाणि । कुतः ? तदुपरमेऽपि तदुपलब्धार्थानुस्मरणात् । इह यो हि येषूपरतेष्वपि यदुपलब्धानर्थान् स्मरति स तत्रोपलब्धा दृष्टः । तद्यथा—गवाक्षोपलब्धानामर्थानामनुस्मर्त्ता देवदत्तः । यदि पुनरिन्द्रियाण्युपलम्भकानि स्युः तदुपरमेऽनुस्मरणं न स्यात् । अस्ति च तत् । तस्माद् नोपलब्धिमन्तीन्द्रियाणि । आह—कस्यायं पक्षः 'स्वतन्त्राणीन्द्रियाण्युपलम्भन्ते, नात्मा इति' ? किन्तु यदीन्द्रिय-मनोनिमित्तमात्मनस्तत् प्रत्यक्षं ब्रूमः । उच्यते ननूक्तं 'परोक्षम्, इन्द्रिय-मनो[निमित्तम्, आत्मनः पर]निमित्तत्वात्, अनुमानवद्, इति । ॥९३॥

**इंदियमणोणिमित्तं परोक्खमिह संसयाईभावाओ ।**
**तक्कारणं परोक्खं जहेह साभासमणुमाणं ॥९३॥**

**इंदियमणो०** गाहा । इतश्चेन्द्रिय-मनोनिमित्तमात्मनः परोक्षम् । कुतः? संशयादिसद्भावात् । इह यत्र संशय-विपर्ययानध्यवसायानिर्णयाः सम्भवन्ति तत् परोक्षं तु दृष्टम्, यथाऽनुमानमनुमानाभासाश्चासिद्धविरुद्धानैकान्तिकाः, यच्च प्रत्यक्षं न तत्र संशयादयः, यथाऽवध्यादिषु ॥९३॥

**होन्ति परोक्खाइं मईसुयाइं जीवस्स परणिमित्ताओ ।**
**पुव्वोवलद्धसंबन्धसरणओ वाणुमाणं व ॥९४॥**

**होंति परो०** गाहा । इदानीं विशेष्यपक्षः क्रियते—मति-श्रुते परोक्षम्, आत्मनः परनिमित्तत्वात्, अनुमानवत् । तथा पूर्वोपलब्धसम्बन्धानुस्मरणात्, इह यत् पूर्वोपलब्धसम्बन्धानुस्मरणाद् विज्ञानमुत्पद्यते तत् परोक्षं दृष्टम्, यथा धूमदर्शनादग्निधूमसम्बन्धानुस्मरणेमनुमानमग्नाविति ॥९४॥

**एगंतेण परोक्खं लिंगियमोहाइयं च पच्चक्खं ।**
**इंदियमणोभवं जं तं संववहारपच्चक्खं ॥९५॥**

---

१ °या को हे । २ °ओ को हे । ३ °या को हे । ४ °नि° को हे । ५ °यादि° को हे । ६ मई° त । ७ °सुता° जे । ८ °नि° को हे । ९ ०माणाओ त । १० '°रणाम° प्रतौ' ।

एगंतेण गाहा । आह—उच्छास्त्रमुच्यते 'परोक्षमिन्द्रियनिमित्तम्' इति । ननु सूत्रोपदिष्टं "पच्चक्खं दुविधं पण्णत्तं, तं जहा—इंदियपच्चक्खं च णोइंदियपच्चक्खं च" [नन्दी १०] । उच्यते—सत्यमिदम्, अत्र तु यदिन्द्रिय-मनोभिर्बाह्यलिङ्गप्रत्ययमुत्पद्यते तदेकान्तेनैवेन्द्रियाणामात्मक(न)श्च परोक्षम्, अनुमानत्वात्, धूमादग्निज्ञानवत् । यच्चावध्यादि तदेकान्तेनैव प्रत्यक्षमात्मनः, अलिङ्गत्वात्, इन्द्रियाणामलिङ्गज्ञानवत् । यत् पुनः साक्षादिन्द्रिय-मनोनिमित्तं तत् तेषामेव प्रत्यक्षम्, अलिङ्गत्वात्, आत्मनोऽवध्यादिवत्, न त्वात्मनः, आत्मनस्तु तत् परोक्षमेव, 'परनिमित्तत्वात्, अनुमानवत्' इत्युक्तम् । तेषामपि च तत् संव्यवहारत एव तत्प्रत्यक्षम्, न परमार्थतः । कस्मात् ? 'अचेतनत्वात्, घटवत्' इत्युक्तम् । आह—न सूत्रे विशेषितम् 'इन्द्रियनिमित्तं संव्यवहारतः प्रत्यक्षम्, न परमार्थतः' इति । उच्यते—ननु सूत्रोपदिष्टं "परोक्खं दुविहं, तं जहा—आभिणिबोहियणाणं सुयणाणं च" [नन्दी४३] इति । न च मति-श्रुताभ्यामिन्द्रियनिमित्तमन्यदस्ति यत् प्रत्यक्षमञ्जसा भवेत् । आह—नन्वेतदेवेन्द्रियनिमित्तं प्रत्यक्षमञ्जसा भविष्यति यदलैङ्गिकम्, मति-श्रुते तु यल्लैङ्गिकमिन्द्रियनिमित्तमिति । उच्यते—न, लैङ्गिकस्य ऐन्द्रियनिमित्ताभावाद्, इन्द्रियस्य प्रत्युत्पन्नमात्रविषयत्वात्, न मति-श्रुतयोश्च, इन्द्रियानिन्द्रियनिमित्तत्वात्; इन्द्रियप्रत्यक्षस्य च मति-श्रुताभ्यामन्यत्वे षष्ठज्ञानप्रसङ्गात् । आह—इन्द्रियनिमित्तं परोक्षम् इति श्रद्दध्महे, मनोनिमित्तं तु कथम् ? उच्यते—ननूक्तं 'परनिमित्तत्वात्, अनुमानवत्' इति । आह—न सूत्रे विशेष्याभिहितं 'परोक्षं मनोनिमित्तम्' इति । उच्यते—तत् प्रत्यक्षमपि नैवोक्तम् । आह—ननूक्तं "इंदियपच्चक्खं च नोइंदियपच्चक्खं च" [नन्दी१०] इति । नोइन्द्रियं च मन इति । उच्यते—न, सर्वनिषेधमात्रवचनत्वाद् नोशब्दस्य । कथम् ? अवध्यादिविशेषणात्, अवध्यादित्रयस्य च मनोनिमित्त्वा(त्त)प्रसङ्गात्, ततश्च मनःपर्याप्तिशून्यस्यावधिज्ञानोपयोगाभावः स्यात्; अनिष्टं चैतत्, यस्मादुक्तं "चुतेमि त्ति जाणति"[कल्प० ३]सिद्धस्य चाज्ञानि[त्व]प्रसङ्गः, अमनस्कत्वात् । तस्माद् यथेन्द्रियज्ञान(नं ?) प्रत्यक्षमप्युक्तं मति-श्रुतयोः परोक्षवचनात् परोक्षमिति गम्यते तथा मति-श्रुतपरोक्षवचनादेव मनोनिमित्तमनुक्तमपि गम्यते तदन्तर्भाव(वात्) परोक्षमिति, अष्टाविंशतिभेदत्वाच्च मतेरिति, अन्यथाऽस्यापि षष्ठज्ञानप्रसङ्गः स्यादिति ॥९५॥

[2]सामित्ताइ[3]विसेसाभावातो[4] मतिसुतेगता णाम ।
[5]लक्खणभेऔ[6]दिकतण्णाणत्तं तँ[7]दविसेसे वि ॥९६॥

---

१ 'बुधेमित्ति जाणति' इति प्रतौ । २ चोत० सामि° जे । ३ °त्ताति° जे । ४ °वाओ मइसुएगया को हे । ५ आ० लक्ख° जे । ६ मेतातिक° जे । °कयं नाणत्तं को हे । ७ तयवि° को हे ।

**सामित्ताइ०** गाहा । आह— मति-श्रुतयोः स्वामि-काल-कारणादिसाम्यादवधि-वदेकत्वमेव, द्वयपरिकल्पनं कुतः ? उच्यते—यथा घटाकाशयोः सत्तादिसामान्येऽपि लक्षणभेदादन्यत्वं तथा मति-श्रुतयोः स्वाम्याद्यविशेषेऽपि लक्षणादिभेदान्नानात्वं वक्ष्यामः । किं वा तद् वस्त्वस्ति यस्य केनचित् सामान्यं नास्ति इति ॥९६॥

**[ लक्खणभेआ हेउफलभावओ भेय इंदियविभागा ।**
**वागक्खरमूगेयरभेआ भेओ मइसुयाणं ॥९६॥१॥ ]**
**[1]जमभिणिं[2]बुज्झति[3] तमभिणिं[2]बोधो[4] जं सुणति[3] तं सुअं[5] भणितं[6] ।**
**सद्दं सुणति[3] जति[3] तओ णाणं[7] [९-प्र०] तो णात[8]भावो[9] तं ॥९७॥**

**जमभिणि०** गाहा । इह यतः सूत्रेऽपदिष्टम् "अभिणिबुज्झइइ आभिणिबोहियं, सुणेईति सुयं" [नन्दी ४४] इति अतस्तयोरन्यत्वमिति । आह—यदि श्रृणोत्यात्मा तदिति श्रुतमित्यतः शब्दं श्रृणोति । यद्यसौ श्रुतमित्यतो न नात्मात्मस्व-[°तोऽनात्मस्व]भावः श्रुतमिति ॥९७॥

**सुतं[10]कारणं जतो[11] सो सुतं[12] व्व तक्कारणं ति तो तम्मि ।**
**कीरति[13] सुतो[14]वयारो सुतं[15] तु परमत्थोत[16] जीवो ॥९८॥**

**सुतकारणं** गाहा । इह यतः श्रुतस्य कारणं शब्दः श्रुतं वाऽस्य कारणं इत्यतस्तत्र श्रुतोपचारः, परमार्थतस्त्वात्मैव श्रुतमिति । आह—श्रृणोतीति श्रुतमात्मस्वभावश्चेति विरुद्धमुच्यते । ननूक्तमात्मैव श्रुतोपयोगपरिणामानन्यत्वात् श्रृणोतीति श्रुतमात्मस्वभाव एव कर्तृसाधनपक्षे, कर्मसाधनपक्षे तु सर्वत्र द्रव्यश्रुतमात्रमित्यदोषः ॥९८॥

**इंदियमणो[17]णिमित्तं जं विण्णाणं सुता[18]णुसारेणं ।**
**[19]णिअयत्थु त्ति समत्थं तं भावसुतं[20] मती[21] सेसं ॥९९॥**

**इंदिय०** गाहा । इह यदिन्द्रिय-मनोनिमित्तमात्मनो विज्ञानं श्रुतग्रन्थानुसारेणाविर्भवति तदर्थाभिधानसमर्थं च तत् श्रुतम्, 'शेषम्' इन्द्रिय-मनोनिमित्तं विज्ञानं मतिरिति । आह—किमिहान्यत् स्वार्थाभिधानसमर्थं न भवत्यपि, यतो विशेष्यते ?

---

१ अस्याः गाथायाः पूर्वं श्रीहेमचन्द्राचार्यवृत्तौ 'लक्खणभेया' इत्यादि गाथा मूलत्वेनोल्लिखिता किन्तु कोट्याचार्यैः 'उक्तं च पूर्वाचार्यैः' इति उक्त्वा सा टीकायामेव उद्धृता वर्तते ॥ २ °नि° को हे। ३ °इ को हे । ४ °बोहो को हे । ५ सुयं को हे । ६ °यं को हे । ७ नाणं को हे । ८ नायभा° को हे । ९ भावं तो त । १० सुयं को हे । ११ जओ को हे। १२ सुयं व को हे। सुयं च त। १३ °रइ को हे। १४ सुयो° को हे। १५ सुयं को हे। १६ °त्थओ को हे। १७ °मणोनि° को हे। १८ सुया° को हे। १९ नियअ° को हे। २० °सुयं को हे। २१ मई को हे।

दव्यं ते (व्यवच्छेदे) नैवेदं विशेषणम् । किं तर्हि ? तत्त्वाख्यानमात्रमिदम् । एतदुक्तं भवति—नित्यमेव हि तत् स्वार्थाभिधानसमर्थम्, अभिलाप्यविषयमित्यर्थः ॥९९॥

[1]जति सुतं[2]लक्खणमेतं[3] तो ण[4] तमेगिन्दि[5]याण संभवति[6] ।
द[7]व्वसुता[8]भावम्मि वि भावसुतं[9] सुत्तजं[10]तिणो व्व ॥१००॥

**जति सुत०** गाहा । यदि यत् श्रुतग्रन्थानुसारेण विज्ञानमुत्पद्यते तत् श्रुतम्, एवमेकेन्द्रियाणां तन्न प्राप्नोति । उच्यते—द्रव्यश्रुतस्य—शब्दाख्यस्याभावेऽपि भावे(व)-श्रुते(तं) विज्ञानमयमस्त्येव, तदावरणक्षयोपशमसद्भावात्, सुप्तयतेरिव । आह—ननु शृणोतीति श्रुतमुक्तम्, सुप्तस्य च यतेर्न द्रव्यश्रुतम्, तदभावे च श्रुतोपयोगपरिणामाभावोऽपीति । उच्यते—न, इष्टतो विग्रहात् । शृणोत्यसौ तेन तस्मिन् वेति तदावरणक्षयोपशमसान्निध्यमात्रं तु श्रुतमाश्रीयते, नोपयोगमात्रमित्यदोषः ॥१००॥

[11]भावसुतं भासासोतलद्धिणो जुज्जते ण इतरस्स ।
भासाभिमुहस्स जयं सोऊण वे[12] जं हवेज्जा हि ॥१०१॥

**भावसुतं** गाहा । आह—युक्तं भावश्रुतमृषेरभाषमाणस्याशृण्वतोऽपि च, उभयलब्धिसम्पन्नत्वात्, नैकेन्द्रियस्य, उभयविरहात् ॥१०१॥

[13]जह सुहुमं भाविन्दियणाणं दव्वेन्दियावरोधे वि ।
तह दव्वसुताभावे भावसुतं पत्थिवादीणं ॥१०२॥

**जह सुहु०** गाहा । उच्यते—यथेह संसारिणामकेवलिनां लब्धीन्द्रियपञ्चकावरणक्षयोपशमसद्भावाद् द्रव्येन्द्रियविरहेऽपि या च यावती च तद्विज्ञानशक्तिरस्ति, बाह्येन्द्रियसान्निध्ये नु सैव भूयसी भवति, वनस्पतयोऽपि केचित् पञ्चापीन्द्रियविषयानुपलभन्तेऽशोकबकुलादयः, तथेह द्रव्यश्रुताभावेऽप्यावरणक्षयोपशमसद्भावा[14]द् भावश्रुतमेकेन्द्रियाणामिति ॥१०२॥

[15]एवं सव्वपसंगो ण[16] तदावरणाणमक्खओवसमा ।
मतिसुअणाणावरणक्खयोवसमतो मतिसुताइं ॥१०३॥

---

१ चो० जति जे । जइ को हे । २ सुय° को हे । ३ °मेयं को हे । ४ न को हे । ५ °गिंदि° को हे । ६ °वइ को हे ॥ ७ आ० दव्व° जे । ८ °सुया° को हे । ९ °सुयं को हे । १० °जइ° को हे । ११ चो० भाव जे । १२ य हे त । १३ आ० जह जे । १४ °मसद्भावासद्भावश्रु° इति प्रतौ । १५ चो० एवं जे । १६ आ० ण जे ।

**एवं सव्व०** गाहा । आह—एवं तर्हि सर्वज्ञानप्रसङ्गस्तेषाम्। उच्यते—न, तदावरणक्षयोपशमाद्यभावात् । किन्तु मति-श्रुतावरणक्षयोपशमान्मतिश्रुते एवं एतेषामित्यागमः । इतश्च मति-श्रुतयोर्विशेषः, यतः सूत्रेऽभिहितम्—॥१०३॥

**मतिपुव्वं सुतमुत्तं ण मती सुतपुव्विया[2] विसेसो यं ।**
**पुव्वं पूरणपालणभावातो जम्मती तस्स ॥१०४॥**

**मतिपुव्वं सुतं** ति गाहा । ननु मतिः श्रुतपूर्वेति "पॄ पूरण-पालनयोः" इत्यस्य पूर्यते पाल्यते चानेनेति, पूर्व(श्रुत)स्य च मतिः पूर्व( पूर्वम् ) कारणमित्यर्थः ॥१०४॥

**पूरिज्जति पाविज्जति दिज्जति वा जम्मतीयँ[3] णामतिणा ।**
**पालिज्जति य मतीए गहितं इधरा पणस्सेज्जे ॥१०५॥**

**पूरिज्जति** गाहा । श्रुतं मत्या पूर्यते प्राप्यते स्वयमित्यत्र वेति (?), न मतिमन्तरेण प्रापयितुं वा शक्यत इत्यर्थः, पाल्यते च तया, प्रत्यावर्त्तयते(तो) न प्रणश्यतीत्यर्थः ॥१०५॥

**णाणाणण्णाणाणि य समकालाइं जतो मतिसुताइं ।**
**तो ण सुतं मतिपुव्वं मतिणाणे वा सुतं[5] णाणं ॥१०६॥**

**णाणाण०** गाहा । आह—यतो मति-श्रुतयोर्युगपदुत्पत्तिः प्रलयश्च पृथग् ज्ञानयोरज्ञानयोश्च अतः श्रुतं न मतिपूर्वं युक्तम्, तत्पूर्वकत्वेनोत्पन्नायां मतावनुत्पन्नस्य श्रुतज्ञानस्य श्रुताज्ञानप्रसङ्गः ॥१०६॥

**इह लद्धिमतिसुताइं समकालाइं ण तूवयोगो सिं ।**
**मतिपुव्वं सुतमिध पुण सुतोवयोगो मतिप्पभवो ॥१०७॥**

**इह लद्धि०** गाहा । उच्यते—यतो लब्धिमति-श्रुते समकाले भवतः, इह तु श्रुतं मतिपूर्वमित्युपयोगोऽधिक्रियते, यतो नासञ्चिन्त्य मत्या श्रुतग्रन्थानुसारिविज्ञानोत्पत्तिरस्ति ॥१०७॥

**[6]सोऊण जा भई भे सा सुयपुव्वँत्ति[7] तेण न विसेसो ।**
**सा दव्वसुयप्पभवा भावसुयाओ मई नत्थि ॥१०८॥**

**सोऊण** गाहा । आह—या हि श्रुत्वा मतिरुत्पद्यते सा पि हि श्रुतपूर्वेति कृत्वोभयमन्योऽन्यपूर्वमित्यविशेषः । उच्यते—द्रव्यश्रुतपूर्वाऽसौ, शब्दमात्रपूर्वेत्यर्थः, इह तु भावश्रुतमधिक्रियते यदि तत्पूर्वस्यास्योदयविशेषः, न च तत्पूर्वाऽस्ति ॥१०८॥

---

१ एव तयामि° इति प्रतौ । २ "मतिपुव्वयं सुयं ण मती सुयपुव्विया"—नन्दी ४४ । ३ °इए को हे । ईए त । ४ °ज्जा को हे । पणब्भिज्जा त । ५ सुयन्नाणं को हे । ६ नास्ति एषा गाथा जेप्रतौ । ७ पुव्वित्ति त ।

[1]कज्जतया न उ कमसो कमेण को वा मइं निवारेइ।
जं तत्थावत्थाणं [2]सुयस्स सुत्तोवओगाओ ॥१०९॥

**कज्जतया** गाहा। आह— यदि श्रुतं मतिपूर्वम्, न तु श्रुतपूर्वा मतिः, अतो मति-श्रुतज्ञानिनो न भूयो [मत्युपयोगो ?] मत्युपयोगोत्पत्त्यनन्तरमेव श्रुतोपयोगः स्यात्। उच्यते—न श्रुतोपयोगानन्तरं मत्युपयोगो निवार्यते। किं तर्हि ? श्रुतपूर्वा न भवतीति श्रुतकारणो(णा न) भवतीति, श्रुतस्य कार्यं न भवतीत्यर्थः ॥१०९॥

[3]दव्वसुतं मतिपुव्वं भासति जं णाविचिंतिअं केइ।
भावसुतस्साभावो पावति तेसिं ण य विसेसो ॥११०॥
दव्वसुतं बुद्धीतो सा वि तओ जमविसेसतो तम्हा।
भावसुतं मतिपुव्वं दव्वसुतं लक्खणं तस्स ॥१११॥
सुतविण्णाणप्पभवं दव्वसुतमितं जतो विचिंतेउं।
पुव्वं पच्छा भासति लक्खिज्जति तेण भावसुतं ॥११२॥

**दव्वसुयं** गाहा। **दव्व०** गाहा। **सुय०** गाहा। इह केचिन्मन्यन्ते—श्रुतं मतिपूर्वमिति द्रव्यश्रुतमेतत्, शब्दमात्रमित्यर्थः, यतः किल नासञ्चिन्त्य मत्या भाषते इति। तेषां च मत्यनन्तरं शब्दमात्रोत्थानाद् भावश्रुतस्याभाव एव प्राप्नोति। तदभावे च मति-श्रुतयोः कुतो विशेषावसरः ?, ज्ञानाधिकारे च किं शब्दमात्रविशेषेण ?। एषोऽपि विशेषो न घटते। कथम् ? यथा मतिपूर्वं द्रव्यश्रुतं तथा मतिरपि द्रव्य-श्रुतपूर्वेत्यविशेषः। तस्माद् भावश्रुतमेव हि मतिपूर्वम्, यस्मात् "नासञ्चिन्त्य मत्या श्रुतग्रन्थानुसारिविज्ञानोत्पत्तिरस्ति" इत्युक्तम्। द्रव्यश्रुतं श्रुतस्योपलक्षणमात्रं भवेत्, तत्पूर्वकत्वात्। कुतः ? यस्मान्नासञ्चिन्त्य भाषते तस्मादस्ति तत् श्रुतविज्ञानं यत्पूर्व-कमिदमिति ॥११०-११२॥

अविसेसिता मति च्चिय सम्मद्दिट्ठिस्स सा [4]मतीणाणं।
मतिअण्णा[९-प्र०]णं मिच्छद्दिट्ठिस्स सुतं पि एमेव ॥११३॥
सदसदविसेसणातो भवहेतु[5]जतिच्छियोवलंभातो।
णाणफलाभावातो मिच्छद्दिट्ठिस्स अण्णाणं ॥११४॥

**अविसेसि०** गाहा। **सदसद०** गाहा। इदमिदानीमानुषङ्गिकम्—यथा मति-श्रुतयोः कार्य-कारणभेदाद् भेदनं तथा मतेरपि दर्शनपरि[ग्रहा-ऽपरि ?]ग्रहात् सम्यगं-

१ नास्त्येषा गाथा जेप्रतौ। २ सुय° को। ३ चो० दव्व° जे। ४ मइण्णाणं। ५ जतिच्छयो जे।

मिथ्याविशेषः श्रुतस्यापीति । तत्रेदं सूत्रम्—"अविसेसिया मई मइणाणं च मइ-अण्णाणं च" [नन्दी ४५ ]इत्यादि सर्वमुच्चारणीयम् । आह—कथं पुनर्मिथ्यादृष्टे-रज्ञान(नं) मति-श्रुते ? ननु मिथ्यादृष्टयोऽपि केचिद् घटादिवस्तुस्वरूपनिरूपणं तत्संव्य-वहारक्रियां च कुर्वते । उच्यते—मिथ्यादृष्टेरज्ञानं मति-श्रुते, सदसतोरविशेषात्, उन्मत्तवत् । इतश्च मिथ्यादृष्टेरध्यवसायो न ज्ञानम्, संसारहेतुत्वात्, मिथ्यादर्शना-दिवत् । इतश्च न ज्ञानम्, यदृच्छोपलब्धेः, उन्मत्तकवत् । इतश्च न ज्ञानम्, ज्ञानक(फ)लाभावात्, प्रदीपहस्तान्धवदिति ॥११३-११४॥

**भेदकतं च विसेसणमट्ठावीसतिविधंगभेदा[1]दि ।**
**इन्दियविभागतो वा मतिसुतभेओ जतोऽभिहितं ॥११५॥**

**भेदकतं०** गाहा । भेदकृतं वा विशेषणं मति-श्रुतयोः, यतोऽष्टाविंशत्यादिभेदा मतिः, अङ्गादिभेद(दं) श्रुतमिति । अथवेन्द्रियविभागान् भेदस्तथा(योः) ॥११५॥

**सोतिन्दियोवलद्धी होति सुतं सेसयं तु मतिणाणं ।**
**मोत्तूणं दव्वसुतं अक्खरलंभो य सेसेसु ॥११६॥**

**[2]सोतुवलद्धि जति सुतं ण णाम सोतो[3]ग्गहादयो बुद्धी ।**
**अह बुद्धी तो ण सुतं अधोभयं संकरो णाम ॥११७॥**

**सोइंदिओवलद्धी** गाहा । **सोतुवलद्धि** गाहा । आह—यदि श्रोत्रेन्द्रिया-वग्रहादयो [न] मतिः अतोऽष्टाविंशतिभेदता मतेर्हीयते । अथ मतिः । अतो न श्रुतम्, अथोभयम्, संकरस्तदेकता वेति, विशेषश्चायं प्रस्तूयते मति-श्रुतयोः; एवं च नितराम-विशेषः प्रसजति ॥११६–११७॥

**केइ बेन्तस्स सुतं सद्दो सुणतो मति त्ति तं ण भवे ।**
**जं सव्वो च्चिय सद्दो दव्वसुतं तस्स को भेतो ॥११८॥**

**केइ बेन्त०** गाहा । तत्र केचिन्मन्यन्ते—श्रोत्रेन्द्रियोपलब्धिः शब्दः, स च ब्रुवाणस्य श्रुतम्, शृण्वतो मतिरित्युभयमुपपन्नं भवतीति । तच्च न, द्रव्यश्रुतमात्र त्वाच्छब्दस्याविशेषो वक्तुः श्रोतुर्वेति ॥११८॥

**किं वा णाणेधिकते[4] सद्देणं जंति व सद्दविण्णाणं ।**
**गहितं तो को भेतो भणतो सुणतो व जो तस्स ॥११९॥**

१ °भेयाइं को । °भेयाइ हे । २ चो० सोतु° जे । ३ सोउग्ग° को । °ग्गहातयो जे । ४ णाणधि° त । ५ [illegible] को हे त ।

**किं वा** गाहा । मति-श्रुत[ज्ञान ?]विशेषेऽधिकृते कः पुद्गलपर्यायस्य शब्दस्यावसरः स्यात् ? श्रोत्रेन्द्रियोपलब्धिरिति शब्दविज्ञानमात्रं गृह्यते । ततो वक्तुः श्रोतुश्चाविशिष्टश्रुतज्ञानयोः कः प्रतिविशेषः ? श्रोतुश्च सति अनन्तरमेव ब्रुवाणस्य सैवाविशिष्टा मतिः श्रुतमित्येकत्वं मति-श्रुतयोः । यदि च सर्वदैवा(व) श्रोतुर्मतिरतो यदाचार्यपारम्पर्येण श्रुतमायातमित्युच्यते तदसत् [ स्यात् इत्ये ? ]कत्वं मतिश्रुतयोरिति ॥११९॥

**भणतो सुणतो व सुतं तं जमिह सुताणुसारि[1] विण्णाणं ।**
**दोण्हं पि सुत्ताईयं[1] जं विण्णाणं तयं बुद्धी ॥१२०॥**

**भणतो** गाहा । तस्माद् ब्रुवाणस्य शृण्वतो[2] वा यच्छ्रुतग्रन्थानुसारि विज्ञानं तच्छ्रुतमित्युक्तम् । शेषं मतिरिति ॥१२०॥

**सोतिन्दिओवल[९-द्धि०]द्धी चेव सुतं ण तु तई सुतं चेव ।**
**सोतिन्दियोवलद्धी वि काइ जम्हा मतिण्णाणं ॥१२१॥**
**तुसमुच्चयवयणाओ व्व[3] काई[4] सोतिन्दियोवलद्धी वि ।**
**मतिरेवं सति [5]सोतोग्गहा[6]दिओ होन्ति मतिभेदा ॥१२२॥**

**सोतिन्दियो०**गाहा । **तुसमुच्च०** गाहा । इह श्रोत्रेन्द्रियेणोपलब्धिर्यस्य स श्रोत्रेन्द्रियोपलब्धिः शब्दः द्रव्यश्रुतमित्यर्थः । तथा लम्भनमुपलब्धिः, श्रोत्रेन्द्रियेण श्रोत्रेन्द्रियस्य वोपलब्धिः, श्रोत्रेन्द्रियविनं(याधीनं) भावश्रुतमित्यर्थः । एवमुभयरूपाऽपि इयं श्रोत्रेन्द्रियोपलब्धिरेव श्रुतम् न तु श्रोत्रेन्द्रियोपलब्धिः श्रुतमेवेति कृतं भवति, श्रोत्रेन्द्रियोपलब्धिः श्रुतं मतिश्चेत्युक्तं भवति । अथवा "सेसयं तु मतिणाणं" [गा० ११६] अयं तुशब्दः समुच्चयवचनो द्रष्टव्यः । किमुक्तं भवति ? शेषं च मतिज्ञानं श्रोत्रेन्द्रियोपलब्धिश्चेति । सति एवं श्रुतं च श्रोत्रेन्द्रियोपलब्धिस्तदवग्रहादयश्च मतिरित्युपपन्नं भवति । आह—ननु मति-श्रुतयोः स एवाविशेषः । उच्यते—श्रुतग्रन्थोपलब्धिर्या तच्छ्रुतम्, शेषशब्दोपलब्धिस्तु मतिरित्यस्ति विशेषः ॥१२१–१२२॥

**पत्ताइगतं सुतकारणं ति सद्दो व्व तेण दव्वसुतं ।**
**भावसुतमक्खराणं लाभो सेसं मतिण्णाणं १२३॥**

**पत्ताइ०** गाहा । 'शेषेन्द्रियोपलब्धिर्मतिज्ञानम्' इति अतिप्रसक्तेरपवादः "मोत्तूणं दव्वसुतं" [गा० ११६]ति द्रव्यश्रुतं यत् पुस्तकादिन्यस्तम्, भावश्रुतकारणत्वात्, शब्दवत् । तद् मुक्त्वा शेषं मतिज्ञानमिति । अक्षरलाभः अक्षरोपलब्धिरित्यर्थः ।

१ सुतादीतं जे । सुयाईयं हे को । २ °तो तथा वा–इति प्रतौ । ३ व्व हे । व–नास्ति को ।
४ काति जे ५ सोउग्ग° को हे । ६ °हात° जे ।

यश्चाक्षरलाभः शेषेष्विन्द्रियेषु स श्रुतं श्रोत्रेन्द्रियोपलब्धिश्चेति सम्बध्यते, अन्यथा हि "मोत्तूणं दव्वसुतं अक्षरलाभं व(च)"इति स्यात् ॥१२३॥

[1]जति सुतमक्खरलाभो ण णाम सोतोवलद्धिरेव सुतं ।
सोतोवलद्धिरेवक्खराइं सुतिसंभवाउ[2]त्ति ॥१२४॥

**जति सुय०** गाहा । आह—यदि शेषेन्द्रियाक्षरलाभोऽपि श्रुतमिति, यदपदिश्यते 'श्रोत्रेन्द्रियोपलब्धिरेव श्रुतम्' इत्येतदव[3]धारणमनर्थकम् । उच्यते—नानर्थकम्, यतः शेषेन्द्रियाक्षरलाभोऽपि श्रोत्रेन्द्रियोपलब्धिरेव । कुतः ? यदा च यत्र च श्रुत(ति ?)-सम्भवात्, श्राव्यत्वादित्यर्थः ॥१२४॥

**सो वि हु[4] सुतक्खराणं जो लाभो तं सुतं मती सेसा ।**
**जति वा अणक्खर च्चिय सा सव्वा ण[5] प्पवत्तेज्जा ॥१२५॥**

**सो वि हु** गाहा । असावपि च यः श्रुताक्षरलाभः स श्रुतम्, शेषाक्षर-लाभस्तु मतिरेव, अन्यथा हि मतिरनक्षरैव प्राप्नोति, तथा चावग्रहमात्रमेव स्यात्, नेहादयः प्रवर्त्तेर[6]न्नित्युच्यतेऽनभिलाप्यत्वात् ॥१२५॥

**दव्वसुतं भावसुतं उभयं वा किं कधं व होज्ज त्ति ।**
**को वा भावसुतंसो दव्वाइसुतं परिणमेज्जा[7] ॥१२६॥**

**दव्वसुयं०** गाहा । इदं (इह ?) **सोइंदिओवलद्धीत्ति** एतस्यां गाथायां 'मोत्तूणं दव्वसुतं' पुस्तकादिन्यस्तं द्रव्यश्रुतमुक्तं, अक्खरलाभवचनाद्भावश्रुतम्, श्रोत्रेन्द्रियोपलब्धिव-चनाच्छब्दस्तद्विज्ञानं [8]चेत्युभयमुक्तम् । इह तदेव चिन्त्यते किं तत् कथं चेति कियान् वा भावश्रुतस्यांशः द्रव्यश्रुतमुभयश्रुतं भावं वा परिणमेदिति ॥१२६॥

**बुद्धिद्दिट्ठे अत्थे जे[9] भासति तं सुतं मतीसहितं ।**
**इतरत्थ वि भोज्ज[10] सुतं उवलद्धिसमं जइ भणेज्जा[11] ॥१२७॥**

**बुद्धिद्दिट्ठ०** गाहा । केचिन्मतिश्रुतयोर्विशेषोऽधिकृत इत्येतां गाथां तदर्थ एव व्याचक्षते नान्यत्र । वयं तत्रापि वक्ष्यामः । इह तावदस्तु ॥१२७॥

**जे सुतबुद्धिद्दिट्ठे सुतमतिसहितो पभासं[12]ते भावे ।**
**[१०-प्र०] तं उभयसुतं भण्णति दव्वसुतं जे अणुवयुत्तो ॥१२८॥**

---

१ चो० जति जे २ °वातोत्ति जे । ३ °दपवार° इति प्रतौ । ४ वि य को । ५ ण तु पवत्तेज्ज जे । ६ °रन्न वक्ष्यते इति प्रतौ । ७ °ज्ज जे त । ८ चेतुपुरुषमु° इति प्रतौ । ९ जो जे । १० होज्ज को हे । ११ भणेज्ज जे । १२ °सई को हे । °सइ त ।

**जे**[1] **सुत०** गाधा । बुद्ध्या दृष्टाः बुद्धिदृष्टाः बुद्धिरिति श्रुतबुद्धिरधिक्रियते, श्रुतविज्ञानमित्यर्थः । तया दृष्टा येऽर्थाः प्रत्यालोचिताः । तत्र यांस्तन्मतिसहित एव भाषते तच्छ्रुतं भवति मतिसहितमिति, श्रुतविज्ञानसहितमुभयश्रुतमित्यर्थः । यान् पुनस्तद्विज्ञानालोचितानप्यनुपयुक्तो भाषते तत् द्रव्यश्रुतं शब्दमात्रमेवेत्यर्थः । यान्नैव भाषते तद्भावश्रुतमित्येतद् द्वयमप्यर्थाद्गम्यते ॥१२८॥

**इतरत्थ वि भावसुते होज्ज तयं**[2] **तस्समं जति भणेज्जा**[3] **।**
**ण य तरति तत्तियं सो जमणेगगुणं तयं तत्तो ॥१२९॥**

**इतरत्थ वि** त्ति[?] [गाहा] । यद् भाषते तदुभयश्रुतं द्रव्यश्रुतं वेत्युक्ते 'इतरत्थ' इति भावश्रुतं गम्यते । तत्रापि हि द्रव्यश्रुतमुभयश्रुतं वा भवेत् । यदि तदुपलब्धिसमं भाषेत् , न तु तच्छक्नोति, यतस्तु बहूपलभतेऽल्पं भाषते ॥१२९॥

**सह उवलद्धीए वा उवलद्धिसमं तया व जं तुल्लं ।**
**जं तस्समकालं वा ण सव्वधा तरति वोत्तुं जे ॥१३०॥**

**सह** गाथा । यदुपलब्ध्या सह प्राकृतशैल्या तदुपलब्धितुल्यं चोपलब्धिसमं उपलब्धिसमकालं चोपलब्धिसमं सर्वथा यावदुपलभते न तावद् भाषत इति ॥१३०॥

[4]**केयी बुद्धिदिट्ठे मतिसहिते भासतो सुतं तत्थ ।**
**किं सद्दो मति**[5] **उभयं भावसुतं सव्वधाऽजुत्तं ॥१३१॥**
**सद्दो ता दव्वसुतं मतिराभिणिबोधियं ण वा उभयं ।**
**जुत्तं उभयाभावे भावसुतं कत्थ तं किं वा ॥१३२॥**

**केयी बुद्धि०** गाहा । **सद्दो** गाहा । इह केचिन्मन्यन्ते—'बुद्धिदिट्ठे'त्ति बुद्धिरित्याभिनिबोधिकं तदालोचितानर्थान् भाषमाणस्योपयुक्तस्य श्रुतमिति । तत्र च न विद्मः किं श्रुतमिति ? किं शब्दो मतिरुभयं चे(वे)ति ? सर्वथा च भावश्रुतमयुक्तम् । कथम्? शब्दस्तावद् द्रव्यश्रुतम् । या मतिस्तदाभिनिबोधिकम् । उभयमप्युभयस्वभावत्वादेवायुक्तम् । तदुभयाभावाच्च न ज्ञायते भावश्रुतं कुत्र किं वेति ॥१३१॥१३२॥

**भासापरिणतिकाले मतीयं**[6] **किमधियमधणधत्तं वा ।**
**भासासंकप्पविसेसमेत्ततो वा सुतमयुत्तं ॥१३३॥**

**भासाप०** गाहा । अविशिष्टस्य वा मतिज्ञानस्य भाषापरिणतिमात्रात् किमधिका(कं)मन्यथात्वं वा भवेद्, यतः श्रुतव्यपदेशः स्यात् ? अ[न्]तर्विज्ञानस्य वाऽविशिष्टस्य बाह्यक्रियाभेदादत्यन्तजातिभेदाभ्युपगमे धावनपठनादिक्रियाभेदा[दा]नन्त्यम् ॥१३३॥

---

१ जो सं । २ तय हे । ३ °ज्ज जे । ४ अत्र जेप्रतौ । प्रथमं 'केयि' इति लिखित्वा पश्चात् 'केयी' इति संशोधितम् । केई हे को । ५ मइरुभयं को हे । ६ मईए को हे ।

**इतरत्थ वि मतिणाणे [1]भोज्ज सुतं ति किध तं सुतं होति ।**
**किध व सुतं [१०-द्वि०] होति मती सलक्खणावरणभेतातो ॥१३४॥**

**इतर०** गाधा । इतरत्रेति मतिज्ञानमेव सम्बन्धयन्तः प्रभाषन्ते । तत्रापि किल श्रुतं भवेत् यद्युपलब्धिसमं भाषे[ते]ति । तत् विरुद्धमुच्यते—यदि मतिः, कथं श्रुतम्? अथ श्रुतम्, न मतिरिति । मतिः श्रुतत्वमापद्यते— इति विरुद्धं लक्षणभेदादावरणभेदाच्चावधिवदिति ॥१३४॥

**अध व मती दव्वसुतत्तमेतु भावेण सा विरुज्झेज्जा[3] ।**
**जो असुतक्खरलाभो तं मतिसहितो पभासेज्जा[3] ॥१३५॥**

**अध व** गाहा । अथवा मतिर्द्रव्यश्रुतमात्रपरिणामेनोपचर्येत, न दोषः । भावश्रुतसमुत्थानत्व[म]स्या विरुद्ध्येत । शब्दस्यापि वा श्रुतग्रन्थात्मकस्योत्थानं भवेन्नेतरस्य ॥१३५॥

**इतरम्मि वि मतिणाणे होज्ज तयं तस्समं जति भणेज्जा ।**
**ण य[4] तरति तत्तियं सो जमणेगगुणं तयं तत्तो ॥१३६॥**

**इतर०** गाहा । इतरत्रापि मतिज्ञाने द्रव्यश्रुतमात्रकं भवेत् यद्युपलब्धिसमभाषिने(ते)ति पूर्ववत् ॥१३६॥

**[5]किध मतिसुतोवलद्धा तीरंति ण भासितुं बहुत्तातो ।**
**सव्वेण जीवितेण वि भासति जमणंतभागं सो ॥१३७॥**

**किध मति०** गाहा । आह—कथं मतिश्रुताभ्यामुपलब्धा न सर्वे शक्यन्ते भाषितुं? उच्यते—परिमितत्वादायुषः क्रमवर्णवर्त्तिनीत्वाच्च वाचः ॥१३७॥

**तीरंति ण वोत्तुं जे सुतोवलद्धा बहुत्तभावातो ।**
**सेसोवलद्धभावा सभा[6]व्वबहुत्ततोभिहिता ॥१३८॥**

**तीरंति** गाहा । अत्र पुनः श्रुतोपलब्धा बहुत्वादेव न शक्यन्ते भाषितुम् । शेषज्ञानोपलब्धास्तु स्वाभाव्या[7]देवास्मद्भिरनभिलाप्यत्वादित्यर्थः । ननु मत्याद्युपलब्धा अपि केचिदभिलप्यन्त इत्युक्तम् । उच्यते—तेऽपि मतिश्रु(°पि श्रु)तविषयान्तर्भाविन एवेत्यदोषः ॥१३८॥

---

१ होज्ज को हे । २ 'मतिः श्रुतं वा पद्यते' इति प्रतौ । ३ °ज्ज जे । ४ ण तर° त । ५ कह हे । ६ सभ° त । ७ °व्यादेवाशक्तिभिरभिला° इति प्रतौ ।

**कत्तो एत्तियमेत्ता भावसुतमतीण पज्जया जेसिं ।**
**भासति अणंतभागं भण्णाति जम्हा सुतेऽभिहितं ॥१३९॥**

**कत्तो** गाहा । आह—कुत इयन्तो भावश्रुतस्य मत्याश्च पर्याया येषामनन्तभागमात्रं भाषते इति ? उच्यते—यस्मादभिहितम् ॥१३९॥

**पण्णवणिज्जा भावा अणंतभागो[1] तु अणभिलप्पाणं ।**
**पण्णवणिज्जाणं पुण अणंतभागो[1] सुतणिबंद्धो[2] ॥१४०॥**

**पण्णवणिज्जा** गाहा । अनभिलाप्यानामनन्तभागा(गः) प्रज्ञापनीयाः(यः), तदनन्तभागश्च श्रुतोपनिबद्धः ॥१४०॥ कथं पुनः ?—

**जं चोद्दसपुव्वधरा छट्ठाणगता परोप्परं होन्ति ।**
[११–प्र०]**तेण तु अणंतभागो[3] पण्णवणिज्जाण जं सुत्तं ॥१४१॥**

**जं चोद्दसपुव्वधरा** [गाहा] । यस्माच्चतुर्दशपूर्वेवि(पूर्व्यपि) चतुर्दशपूर्वविदोऽनन्तभागहीनोऽनन्तगुणहीनोऽभ्यधिको वेति(°धिको वा वेत्ति), अतः प्रज्ञापनीयानामनन्तभागा(गः) श्रुतोपनिबद्ध इति ॥१४१॥ आह—यदि चतुर्दशपूर्वविदः, कथमनन्तगुण-भागहीनाधिक्यं च इति ? उच्यते—

**अक्खरलंभेण समा ऊणधिया होन्ति मंतिविसेसेहिं ।**
**ते वि य मतीविसेसे सुतणाणब्भंतरे जाण ॥१४२॥**

**अक्खर०** गाहा । अक्षरलाभसामान्यमात्रतश्चतुर्दशपूर्वविदः, तन्मतिविशेषात् न्यूनाधिकत्वं तेषाम् । मतिविशेषग्रहणाद् 'मतिज्ञानविशेषा एव' इति मा भूवन्, अतो विशेष्यते—तेऽपि हि श्रुतज्ञानान्तर्भाविन एवेति । आह—यद्येवं श्रुतज्ञानमेवेति किं नोच्यते त(कु)तोऽभ्यन्तर इति ? न, विशेषाद[ज्ञा]भ्यन्तरादिव्यपदेशवत् । अथवा श्रुतज्ञानमिति चतुर्दशपूर्वाक्षरलाभमधिकुरुते, चतुर्दशपूर्वाक्षरलाभाभ्यन्तरान् जानीहीत्युक्तं भवति ॥१४२॥

**जे अक्खराणुसारेण मंतिविसेसा तयं सुतं सव्वं ।**
**जे पुण सुतणिरवेक्खा सुद्धं चिय तं मतिण्णाणं ॥१४३॥**

**जे अक्खरा०** गाहा । जे(ये) हि श्रुताक्षरानुसारेणैव मतिविशेषा जायन्ते तच्छ्रुतमन्ये मतिरिति ॥१४३॥

**केयि अभासिज्जंता सुतमणुसरतो वि जे मंतिविसेसा ।**
**मण्णन्ति ते मति च्चिय भावसुताभावतो तण्णं ॥१४४॥**

---

१ °भागा जे । २ °बद्धा जे । ३ °भागा जे । ४ मईवि° हे को । ५ मईवि° को हे । ६ मईनाणं को । ७ मईवि° को । ८ तं ण्ण जे । तन्नो हे को त ।

**केयि** गाहा। केचिन्मन्यन्ते श्रुतानुसारिणोऽपि हि मतिविशेषा मतिज्ञानमेवेति। तच्च न, भावश्रुतस्याभावप्रसङ्गात् पूर्ववत् ॥१४४॥

**किध मतिसुतणाणवितो[1] छट्ठाणगता परोप्परं होज्जा[2]।**
**भासिज्जंतं मोत्तुं जति सव्वं सेसयं बुद्धी ॥१४५॥**

**किध म०** गाहा। षट्स्थानपतितता च मतिश्रुतयोर्न स्यात्। यदि भाष्यमाणमात्रकमेव श्रुतम्, तस्य मतिज्ञानान्नित्यहीनतैव स्यात्, मतेश्च नित्याधिकत्वमेवेति। न च श्रुतज्ञानिनोऽन्यस्माच्छ्रुतज्ञानिनः षट्स्थानसम्भवोऽस्ति तन्मात्रश्रुतत्वे सतीति ॥१४५॥

**सामण्णा वा बुद्धी मतिसुतणाणाइं तीयँ[3] जे दिट्ठा।**
**भासति[4] संभवमेत्तं गहितं ण तु भासणामेत्तं ॥१४६॥**

**सामण्णा** गाहा। अथवा 'बुद्धिदिट्ठे अत्थि'त्ति सामान्यैव मतिश्रुतात्मिका बुद्धिरधिक्रियते, तया दृष्टानर्थान् या न भाषत एव कदाचिदपीति सम्भवमात्रमङ्गीक्रियते नावश्यं भाषमा(भाष)णमेव ॥१४६॥

**मतिसहितं भावसुतं तण्णियतमभासतो वि मतिरण्णा।**
**मतिसहितं ति जमुत्तं सुतोवयुत्तस्स भावसुतं ॥१४७॥**

**मति०** गाहा। तदिह मत्यनुगतं भाषमाणस्याऽभाषमाणस्य वा भावश्रुतमतोऽन्या मतिं(तिः)। मतिसहितमिति श्रुतविज्ञानसहितमुपयुक्तस्येति यावत् ॥१४७॥

**जे भासति चेयँ[5] तयं सुतं तु ण तु भासतो सुतं चेयँ[6]।**
**केई[7] मतीए वि दिट्ठा जं दव्वसुतत्तमुवयन्ति ॥१४८॥**

**जे भास०** गाहा। यान् भाषत एवाव(एवा)स्य कदाचिदपि तच्छ्रुतम्, ननु(तु) भाषमाणस्य श्रुतमेवेति, यस्मान्मतिज्ञानालोचिता अपि केचिद् द्रव्यश्रुतेनोच्यन्तेऽवध्यादिज्ञानालोचिताश्च ॥१४८॥

**एवं धणिपरिणामं सुतणाणं उभय[११–द्वि]धा मतिण्णाणं।**
**जं भिण्णसभावाइं ताइं तो भिण्णरूवाइं ॥१४९॥**

**एवं** गाहा। एवं सर्वमेव हि श्रुतं शब्दपरिणामम्, मतिज्ञानं चोभयस्वभावमित्युक्तं भवति भिन्नस्वभावत्वाच्च भिन्नरूपताऽनयोरिति ॥१४९॥

**ईतरं[8] ति मतिण्णाणं ततो वि जति होति सद्दपरिणामो।**
**तो तम्मि वि किण्ण सुतं भासति जण्णोवलद्धिसमं ॥१५०॥**

---

१ विऊ हे को। २ होज्ज जे। ३ तीए को। ४ °तिजं भव° त। ५ चेव को। ६ चेव को हे त। ७ केइ मतीअ वि जे। केई मती वि त। केई मइए वि को। केई मईए वि हे। ८ आ० इत° जे। ९ इयरत्ति को हे। १० जं ण्णो° जे।

**इतरं** गाहा । "इतरत्थ वि भोज्ज सुतं"[गा० १२७]ति । इतरद् मतिज्ञा-नमभिसम्बध्यते । आह—यदि तस्मादपि शब्दपरिणामा(मो जा)यतेऽतस्तत्रापि किं न श्रुतम् ? उच्यते—"उवलद्धिसमं (जइ भ)णेज्जा"[१२७] । न चोपलब्धिसमं भाषते ॥१५०॥ कथम् ?

**अभिलप्पाणभिलप्पा उवलद्धा तस्समं च णो भणति ।**
**तो[1] होतुं[2]भयरूवं उभयसभावं ति कातूणं ॥१५१॥**

**अभिल०** गाहा । यस्मादभिलाप्यानभिलाप्याश्चोपलभते न तान् भाषते । किं तर्हि ? अभिलाप्यानेव भाषते, नानभिलाप्यानिति । आह—एवं मात(मते)रुभयरूपताऽऽप्नोति—मतिः श्रुतं चेत्यर्थः ॥१५१॥ अथ नैवम्, यानुपलभते भाषते च तद्वि-ज्ञानमस्याः(स्य) श्रुतमेवास्तु, किं तत्र मत्या ? उच्यते—

**जं भासति तं पि जतो ण सुतादेसेण किंतु समतीए ।**
**ण सुतोवलद्धितुल्लं ति वा जतो णोवलद्धिसमं ॥१५२॥**

**जं भास०** गाहा । इह यदपि किञ्चिदसौ भाषते तदपि न श्रुतग्रन्थानुसारे-णोपलभ्य । किं तर्हि ? स्वमत्या- स्वमतिविज्ञानेनोपलभ्य भाषत इत्यर्थः । अतस्तदुप-लब्धिसमं न भवति । केन ? श्रुतेन । किमुक्तं भवति ? अन्यथा श्रुतेनोपलभतेऽन्यथा मत्या । श्रुतविज्ञानेन जैनग्रन्थानुसारेणोपलभते, मत्या तु स्वविज्ञानतै(नेनै)वेति ॥१५२॥

**अण्णे मण्णंति मती वैं[3]यसमा सुंबें[4]सरिसयं सुत्तं ।**
**दिट्ठन्तोयं जुत्तिं जधोवणीतो न संसहति ॥१५३॥**

**अण्णे** गाहा । अन्ये मन्यन्ते वल्कप्रतिमा मतिः । सैव शब्दतया संदर्भिता सती सूत्रमुच्यते । शुम्बवत् यथा चायं दृष्टान्तस्तैरुपनीयते तथा न युक्तं(क्तिं) संस हते, अन्यथा न(च) संसहत इत्यर्थः ॥१५३॥

**भावसुताभावातो संकरतो णिव्विसेसभावातो ।**
**पुव्वुत्तलक्खणातो सलक्खणावरणभेतातो ॥१५४॥**

**भावसुता०** गाहा । कथं पुनर्न संसहते ? शब्दमात्रस्य श्रुतस्याभावप्रसङ्गात्, मतिश्रुतयोः संकरात्, अविशेषात्, स्वलक्षणभेदात्, आवरणभेदात् पूर्वोक्तलक्षणा एवैते तथेहाप्यायोज्याः ॥१५४॥

१ आ० तो जे । २ तो होज्ज उभ° को । तो होउ उभ° हे । ३ वग्ग° को हे । ४ सुब त ।

**[1]कंप्पिज्जेज्ज व सो भावदव्वसुत्तेसु तेसु वि ण जुत्तो।**
**मतिसुतभेतावसरे जम्हा किं सुतविसेसेणं ॥१५५॥**

**कपिज्जे०** गाहा। भावद्रव्यश्रुतयोर्वाऽसौ दृष्टान्तः परिकल्पेत श्रुतविज्ञानपूर्वकत्वाच्छब्दस्य। तयोरपि वाऽसावयुक्तः, यतो मतिश्रुतयोर्विशेषोऽधिकृतः, किमिह द्रव्यभावश्रुतविशेषेणेति ॥१५५॥

**असुतक्खरपरिणामा व जा मती [2]वायकप्पणा तम्मि।**
**दव्वसुतं सुंबसमं किं पुण तेसिं विसेसेणं ॥१५६॥**

**असुत०** गाहा। अश्रुताक्षरपरिणामा वा मतिरन्यशब्दपरिणामात्मिकेत्यर्थः। तस्यां वल्कपरिकल्पनमास्थीयते। तत्पूर्वकं तु द्रव्यश्रुतं शुम्बवत्। न चानयोर्विशेषणार्थः ॥१५६॥ कुतः ?

**[4]इधइं जेणाधि[3][१२–प्र०]गतो णाणविसेसो ण दव्वभावाणं।**
**[4]ण य दव्वभावमेत्ते वि जुज्जते सोऽसमंजसतो ॥१५७॥**

**इधइं०** गाहा। इह हि ज्ञानाधिकारान्मतिश्रुतज्ञानयोर्विशेषोऽधिक्रियते, न मतेर्द्रव्यश्रुतस्य च। मतिद्रव्यश्रुतयोरपि चायं न युज्यतेऽसमञ्जसतः ब्रूमः ॥१५७॥ कथम् ?

**जह [5]वाया सुंबत्तणमुवेन्ति सुंबं च तं ततोऽणण्णं।**
**ण [6]तधा मती धणित्तणमुवेति जं जीवभावो सा ॥१५८॥**

**जह** गाहा। इह यथा वल्का एव शुम्बपर्यायापन्नाः शुम्बमित्युच्यते ततस्तेभ्योऽनर्थान्तरमेकान्तेन, [न] तथा मतेः शब्दपरिणामोऽस्ति जीवानन्य(न्य)त्वात् ॥१५८॥

**[7]अध उवयारो कीरति पभवति अत्थन्तरं पि जं [8]जत्तो।**
**तं तम्मयं ति भण्णति तो मतिपुव्वं जतो भणितं ॥१५९॥**
**भावसुतं तेण मती [9]वायसमा सुंबसरिसयं तं च।**
**जं [10]चिंतेऊण तया तो सुतपरिवाडिमणुसरति ॥१६०॥**

**अध** गाहा। **भावसुतं** गाहा। अथोपचारः क्रियते। यद्यस्मात् प्रभवति तत्तदर्थान्तरभूतमपि सत्तन्मयमित्यतः मतिपूर्वमेवोक्तम्, यतो भावश्रुतमतो मतिर्वल्काभासा भावश्रुतं शुम्बाभासम्, यतो नासंचिन्त्य मत्या तद्विज्ञानप्राप्तिरस्तीत्युक्तम् ॥१५९॥१६०॥

---

१ कप्पेज्ज° **त**। कप्पे° **हे**। २ वग्गाक° **को हे**। ३ °हिकओ **को हे**। ४ नियद° **जे**। ५ वग्गा **को हे**। ६ न मई तहा **को हे**। ण मती तधा **त**। ७ आ० अध **जे**। ८ तत्तो **को**। ९ वग्गस° **को हे**। १० चिंति° **हे**।

**अण्णे अणक्खरक्खरविसेसतो मतिसुताइं भिन्दन्ति ।**
**जं मइणाणमणक्खरमक्खरमितरं च सुतणाणं ॥१६१॥**

**अण्णे** गाहा । अन्येऽक्षरवदनक्षरं च श्रुतम्, अनक्षरैव मतिरित्ययमनयोर्भेद इति ॥१६१॥ तच्च न, मतेरप्युभयरूपत्वात्, अन्यथा हि—

**जंति मतिरणक्खर[1] च्चिय हवेज्ज णेहातयो णिरभिलप्पे[2] ।**
**थाणुपुरिसातिपज्जायविवेको किध णु होज्जंत्ति[3] ॥१६२॥**

**जति म०** गाहा । यदि मतिरनक्षरैव स्यात्ततोऽनभिलाप्येऽर्थे नेहादयोऽन्न(नु)प्रवर्त्तेरन् । ततः स्थाणुरयं पुरुषो वेत्यादि पर्यायविवेको न स्यात्, [न] परिच्छेद इत्यर्थः ॥१६२॥

**[4]सुतणिस्सितवयणातो अध सो सुततो मतो ण बुद्धीतो ।**
**जति सो सुतवावारो ततो किमण्णं मतिण्णाणं ॥१६३॥**

**सुतणि०** गाहा । स्यान्मतिः—श्रुतनिसृतमप्युक्तं मतिज्ञानमित्यतः श्रुतात् करिष्यते स विवेको न बुद्धेरिति । तच्च न । कुतः ? यदीहादयः श्रुतव्यापारोऽतः कान्या मतिर्नामेति ॥१६३॥

[११–द्वि०]**अध सुततो वि विवेगं कुणतो ण तयं सुतं सुतं णत्थि ।**
**जो जो सुतवावारो अण्णो पि तओ मती जम्हा ॥१६४॥**

**अध०** गाहा । अथ श्रुता[त्] चासौ विवेकः, न च तच्छ्रुतम् । किं तर्हि ? मतिचे(मतिरेवे)त्यतः श्रुतस्याभावप्रसङ्गः स्यात्, यस्मान्नेहादिव्यापारादन्यद्धर्मविज्ञानमस्ति तच्चेन्मतिर्न श्रुतमस्ति ॥१६४॥

**मतिकाले वि जति सुतं तो जुगवं मतिसुतो[5]वओगा ते ।**
**अध णेवं एकतरं पवज्जतो[6] जुज्जते ण सुतं ॥१६५॥**

**मतिका०** गाहा । मतिव्यापारकालेऽपि च यदि श्रुतव्यापारस्ततो युगपन्मतिश्रुतोपयोगप्रसङ्गः । अथ नैवम्; अनयोरेकतरं प्रपद्यमानस्य श्रुतं न युज्यते, मतिरेव तु युज्यत इत्युक्तं भवति । कथं ? मतेरेव(वाऽ)नवकाशत्वात् । श्रुतस्य तु श्रुतग्रन्थानुसारित्वादन्यत्रावकाशोऽस्तीति ॥१६५॥

**जति सुतणिस्सितमक्खरमणुसरतो तेण मतिचउक्कम्पि ।**
**सुतणिस्सितमावण्णं तुह तं वि जमक्खरप्पभवं ॥१६६॥**

---

१ आ० जति **जे** । २ मतिमण° **जे** । ३ °लप्पा **त** । ४ °ज्जाहि **को हे त** । ५ आ० सुत° **जे** । ६ पज्जवतो **त** ।

**जति०** गाहा। यदि च श्रुतनिश्रितं भवतो यदक्षरानुसरणाद्भवत्यतो यदौत्पत्तिक्यादि मतिचतुष्टयं तदपि हि श्रुतनिश्रितमापन्नम् यतस्तदपि नेहादिविरहाद्भवति, ईहादयश्च न वर्णविज्ञानादृते भवन्तीति ॥१६६॥

**जति तं ण[1] सुतेण तओ जाणति सुतणिस्सितं[2] कधं भणितं।**
**जं सुतकतोवयारं पुव्वं एण्हिं[3] तदणवेक्खं ॥१६७॥**

**जति तं** गाहा। आह—यदि न श्रुतोपष्टम्भेन स्थाणुपुरुषादिपरिच्छेदः, कथं तर्ह्यवग्रहादिश्रुतनिश्रितमुक्तम्। उच्यते—भवानेव प्रष्टव्यो य एवमाह—यच्छ्रुतमनुधावते तच्छ्रुतनिश्रितमिति। क्वचिद्विज्ञाय ते ब्रूमः—इह यत्पूर्वमेव श्रुतोपकारकमिदानीं पुनस्तदनुपेक्ष्या(नपेक्ष?)मेवानुप्रवर्त्तते तच्छ्रुतनिश्रितमित्युच्यते ॥१६७॥

कथं पुनः पूर्वमेव श्रुतं कृतोपकारकम्? उच्यते—

**पुव्वं सुतपरिकम्मितमतिस्स जं संपतं सुतातीतं।**
**तं णिस्सितमितरं पुण अणिस्सितं मतिचउक्कं[4] तं ॥१६८॥**

**पुव्वं** गाहा। इह यत् पूर्वमेव श्रुतपरिकर्मितमतेरिदानीं श्रुतातीतमेवोत्पद्यते तन्निश्रितमवग्रहादि, औत्पत्तिक्यादि अनिश्रितमिति। आह—ननु "तिवग्गसुत्तत्थगहिय-पेयाला" इत्यादि वचनात् तत्रापि किञ्चिच्छ्रुतोपकारादेवेति कथमश्रुतनिश्रितं तत(त्)? उच्यते—अवग्रहादीनां श्रुतनिश्रिताभिधानादौत्पत्तिक्यादिचतुष्टयेऽपि वा(चा)वग्रहादिसद्भावात् यथायोगमश्रुतनिश्रितम्। तन्न सर्वमेव। किं तर्हि? बाहुल्यमङ्गीकृत्याश्रुतमुक्तं तदिति ॥१६८॥

**उभयं भावक्खरतो अणक्खरं होज्ज वंजणक्खरतो।**
**मतिणाणं सुत्तं पुण उभयं पि अणक्खरक्खरतो ॥१६९॥**

**उभयं** गाहा। भावाक्षरं विज्ञानात्मकं च तत् अक्षरवदनक्षरवच्च मतिज्ञानम्, द्रव्याक्षरं तु पुस्तकादिन्यस्तं शब्दो वेति। तस्यात्यन्तमेव द्रव्यश्रुतत्वान्मतेरसम्भवः। सूत्रे तूभयमप्य[नक्षरम्, अ]क्षरं वेति पृथक् द्रव्यश्रुतं भावश्रुतं चेत्यर्थः। एवं कृत्वा मतेर्भावश्रुतस्य चाक्षरवदनक्षरकृतो न विशेषः। न द्रव्याक्षरमतेरियता विशेषः स्यात्[5] परिलक्ष्यमेतदिति ॥१६९॥

**सपरप्पच्चायणतो भेओ मूएतराण वाभिहितो।**
**जं मूगं मतिणाणं सपरप्पच्चायगं सुत्तं ॥१७०॥**

---

१ तं सुएण न तओ हे। २ °णिम्मितं ज। ३ इण्हि को हे त। ४ °क्कं पि जे।
५ स्यात् परिखलखेतदिअि—इति प्रतौ।

**सपर०** गाहा । अन्ये मन्यन्ते—स्वात्मप्रत्यायकमेव हि मतिज्ञानम्, स्व-पर-प्रत्यायकं तु सूत्रमिति, अयं विशेषः ॥१७०॥

**[1]सुतकारणं ति सद्दो सुतमिह सो[2] य परबोधणं कुणति ।**
**मतिहेतवो वि हि परं बोधेन्ति करा[१३-प्र]तिचेट्ठाओ ॥१७१॥**

**सुत०** गाहा । इह शब्देऽक्षरविन्यासे वा तत्कारणत्वाच्छ्रुतोपचारं कृत्वोच्यते परप्रत्यायकं श्रुतमिति । मतिहेतवोऽपि हि वक्त्रकरसंयोगादिचेष्टाः भुजिक्रियादि-मतिकारणत्वात् परबोधिकाः ॥१७१॥

**ण परप्पबोधयाइं जं दो वि सरूवतो मतिसुताइं ।**
**तक्कारणाइं दोण्ह वि बोधेन्ति ततो ण भेतो[3] सिं ॥१७२॥**

**ण पर०** गाहा । एवं न स्वरूपतो मति-श्रुतेऽप्य(°ते पर)प्रबोधके भवतः, विज्ञान-रूपत्वात्, अवधिवत् । कारणानि चोभयस्यापि परप्रबोधकादीन्यतो न विशेषः ॥१७२॥

**दव्वसुतमसाधारणकारणतो परविबोधकं होज्जा[4] ।**
**रूढन्ति व दव्वसुतं सुतं ति रूढा ण दव्वमती ॥१७३॥**

**दव्व०** गाहा । इह द्रव्यश्रुतमसाधारणकारणत्वात् परविबोधकं भवेत् । श्रुतमात्रकारणत्वादेवेत्यर्थः, [न ?] करादिव्यापाराद्यन्यकारणा अपीति(मतिरिति) । अथवा निर्वाणसाधनमसाधारणं यद्विज्ञानं तत्कारणत्वाज्जैनशब्दराशेर्द्रव्यश्रुतस्य परप्रबोधनत्वमिष्टं न करादिव्यापाराणाम्, रूढितो वेति ॥१७३॥

**सा वा सद्दत्थो च्चिय तया वि जं तम्मि पच्चओ होति ।**
**कत्ता वि हु तदभावे तदभिप्पायो कुणति चेट्ठं ॥१७४॥**

**सा वा** गाथा । अथवा सापि हि द्रव्यमनःचेष्टात्मिकार्थ(?) एव । कुतः ? यतस्तस्यास्तस्मिन्नैव शब्दार्थे प्रत्यय उत्पद्यते । तस्याश्च यः कर्त्ता असावपि हि तदभाव इति शब्दाभाव इत्यर्थः । तदभिप्राय इति तच्छब्दार्थद्योतनाभिप्रायश्चेष्टां करोतीति ॥१७४॥

**मतिसुतणाणविसेसो भणितो तल्लक्खणातिभेतेणं ।**
**पुव्वं[5] आभिणिबोधियमुद्दिट्ठं[6] तं परूवेस्सं ॥१७५॥**

---

१ चो० श्रुत° जे । २ °मिह स य परविबो° को । ३ भेते त । ४ होज्ज जे । ५ पुव्विं त । ६ °य अहिं° जे ।

**मतिसुत०** गाहा । उक्तो मतिश्रुतयोर्विशेषो लक्षणादिभेदतः । ज्ञानपञ्चकस्यादावुद्दिष्टमाभिनिबोधिकम् । इदानीं तं प्ररूपयिष्यामीति ॥१७५॥

**इन्दियमणोणिमित्तं तं सुतणिस्सितमधेतरं च पुणो ।**
**तत्थेक्केक्कं चतुभेदमो[1]ग्गहोप्पत्तियादीयं ॥१७६॥**

**इन्दिय०** गाहा । तदभिनिबोधिकमिन्द्रियमनोनिमित्तमेकैकशः श्रुतनिश्रितमश्रुतनिश्रितं चेति । तत्र श्रुतनिश्रितमवग्रहादिचतुर्भेदम्, औत्पत्तिक्याद्यश्रुतनिश्रितमिति ॥१७६॥ तत्र श्रुतनिश्रितमुच्यते—

**ओग्गहे[2] ईह अवाओ[3] य धारण एव होन्ति चत्तारि ।**
**आभिणिबोहियणाणस्स भेतवत्थू समासेणं ॥२॥१७७॥**

**अत्थाणं उग्गहणम्मि[4] ओग्गहो तध वियालणे[5] ईहा ।**
**ववसायम्मि[6] अवाओ धरणं पुण धारणं [7]बेन्ति ॥३॥१७८॥**

**सामण्णत्थावग्गहणं[8]मोग्गहो भेत[१३–द्वि]मग्गणं[9]महेहा ।**
**तस्सावगमोऽवायो अविच्चुती धारणा तस्स ॥१७९॥**

**ओग्गह ईह** गाहा । **अत्थाणं** गाहा । [**सामण्ण०** गाहा] । इह सामान्यस्यार्थस्य रूपादेरवग्रहणमवग्रहः सर्वविशेषनिरपेक्षस्यानिर्देश्यस्येत्यर्थः तदर्थभेदविचारणमीहा विशेषान्वेषणमित्यर्थः । तदर्थविशेषव्यवसायोऽवायस्तद्विशेषावगम इत्यर्थः । तदर्थविशेषधरणं धारणा अविच्युतिरित्यर्थः ॥१७७॥१७८॥१७९॥

**सामण्णविसेसस्स वि केयिं[10] ओग्गहणमोग्गहं बेन्ति ।**
**जं मतिरिदं तयं [11]ति य तं णो बहुदोसभावातो ॥१८०॥**

**सामण्ण०** गाहा । इह केचित् सामान्यविशेषस्याप्यवग्रहणमवग्रहमिच्छन्ति—इदं तदिति चेति या मतिः । तच्च न बहुदोषापत्तेरिति वक्ष्यामः ॥१८०॥

**ईहा संसयमेत्तं केयिं [12]ण तयं तओ जमण्णाणं ।**
**मतिणाणंसो[13] चेहा कधमण्णाणं तई जुत्तं ? ॥१८१॥**

---

१ °दमुग्ग° को हे । २ उग्गहु को । उग्गहो हे । ३ अवाय धा° त । ४ °णं अवग्गहं त हे । °णम्मि उग्ग° को । ५ °लणं ईहं त हे । ६ °सायं च अवायं त हे । ७ बिंति को । ८ °हणमु° को हे । ९ °ग्गणमवेहा जे । १० केई अग्ग° को हे त । ११ ति व तं जे । ति च तं को हे । १२ केई को हे त । १३ °णंसा चेहा को हे ।

**ईहा** गाहा । इह केचित् संशयमात्रमीहेति मन्यन्ते । तच्च न संशयस्याज्ञानवत्(°नत्वात्) । मतिज्ञानांशश्चेहा ॥१८१॥ आह—कस्तर्हि संशयेहयोः प्रतिविशेष इत्युच्यते—

**जमणेगत्थालंबणमपज्जुदासपरिकुंठितं चित्तं ।**
**सेयति व सव्वप्पयतो तं संसयरूवमण्णाणं ॥१८२॥**

**जमणे०** गाहा । इह यत्स्थाणुपुरुषादिविशेषाननेकानर्थानालम्बते, न च कञ्चन व्युदस्यति, तदव्युदासपरिकुण्ठितं च सर्वात्मना शेत इव चेतस्तत्संशयात्मकमज्ञानमुच्यते ॥१८२॥

**तं चिअ सदत्थहेतूववत्तिवावारतप्परममोहं ।**
**भूताभूतविसेसादाणच्चायाभिमुहमीहा ॥१८३॥**

**तं चिअ** गाहा । यत्पुनस्तदेव चेतः सदर्थे भूतेऽर्थे हेतूपपत्तिव्यापारपरम्—हेतुः साधनम्, उपपत्तिः सम्भवः, तदन्वेषणव्यापारपरमित्यर्थः । अमोघमविफलमर्थपरिच्छेदभावीत्यर्थः । सद्भूतार्थविशेषोपादानाभिमुखम्, असद्भूतार्थविशेषत्यागाभिमुखं च तदीहेत्युप(त्ययं) संशयेहयोर्विशेषः ॥१८३॥

**केई तदण्णविसेसावणयणमेत्तं अवायमिच्छन्ति ।**[1]
**सब्भूतत्थविसेसावधारणं धारणं बेन्ति ॥१८४॥**

**केई त०** गाहा । तदित्यनेन भूतार्थः सम्बध्यते । तस्मादन्यो यस्तत्प्रतियोगी तत्राभूतः पुरुषः स्थाणुर्वेति । तद्विशेषाश्चलनादयो वयोनिलयनादयश्च । तदपनयनमात्रं तद्व्युदासमात्रमपाय अपनयनमपाय इति मन्यमानाः । सद्भूतार्थविशेषावधारणा धारणेति सद्भूतार्थविशेषानुगमनमित्यर्थः ॥१८४॥ अत्रेदमुच्यते—

**कासयि तदण्णवइरेगमेत्ततोवगमणं भवे भूते ।**
**सब्भूतसमण्णयतो तदुभयतो कासइ ण दोसो ॥१८५॥**

**कासयि** गाहा । इह कस्यचिदसद्भूतस्य प्रतियोगिनोऽर्थस्य व्यतिरेकमात्रादेव भूतेऽर्थसम्प्रत्ययो भवेत् । तद्यथा—नात्र वयोनिलयनादयः, तस्मान्नायं स्थाणुः, पारिशेष्यात् पुरुष इति । तथा कस्यचिद् सद्भूतार्थविशेषसमन्वयमात्रादेव स्याच्चलनादिलिङ्गोपलम्भात् पुरुष इति । कस्यचिच्च स्थाणुविशेषव्यतिरेकात् पुरुषविशेषसमन्वयाच्चेति न दोषः ॥१८५॥

---

१ सेय इव को हे । २ °साविण° त । ३ आ० कास° जे । कासइ को हे ।

**सव्वो च्चियं सोऽवायो भेते व्वा होन्ति पंच वत्थूणि ।**
**आहेवं चिय चतुधा मती ति[१४–प्र०]धा अण्णधा होति ॥१८६॥**

**सव्वो च्चिय** गाहा । इह व्यतिरेकाद् अन्वयाद् उभयथा वाऽध्यवस्य तत् सर्वे एवासावपायः । अवायश्च बोधः परिच्छेद इत्यनर्थान्तरम् । न चायमपायोऽपादानलक्षणः । अपादानाऽवधारणभेदद्वये वा तृतीयवस्तुनः वस्तुपञ्चकमापद्यते मतेः । कथम् ? अवग्रहेहापायावधारणास्मृता (°तयः) इति । आह —अपाया-ऽवधारणाभेदादेव हि मतेश्चातुर्विध्यं भवत्यन्यथा हि द्विधिवै(त्रिधैवे)यं भवेत्। कुतः ? धृत्यभावात् ॥१८६॥ यतः–

**काणुवयोगम्मि धिती पुणोवयोगे य सा जतोऽवायो ।**
**तो णत्थि धिती[3] भण्णति इदं तदेवेति[4] जा बुद्धी ॥१८७॥**

**काणु०** गाहा । इह या तावत्सङ्ख्ये[यमसंख्ये]यं वा कालं धृतिः परिकल्प्यते धारणेत्यर्थः । सा नास्त्येव, अनुपयोगात् । प्रागुपयोगवत् पुनरुपयोगोऽयं भवन्मत्याऽवाय एव, अवबोधमात्रमित्यर्थः । अस्मन्मत्र(मते तु) तदवधारणेति। तस्मान्नावग्रहेहा-ऽपाया-ऽवधारणेभ्योऽन्या धृत्याख्या धारणा नामास्ति । उच्यते–पूर्वोपलब्धमर्थं पुनर्व्यवस्यतस्तदेवेदमिति येयं बुद्धिः ॥१८७॥

**णणु सावायब्भंहिया जतो य सा वासणाविसेसातो[5] ।**
**जा यावायाणन्तरमविच्चुती सा धिती णामं[6] ॥१८८॥**

**णणु** गाहा । नन्वियमपायाभ्यधिका अपायादन्येत्यर्थः । कुतः ? अपूर्वावाये तदभावात् , यतश्च वासनाविशेषादेवासौ भवति, तद्धि ज्ञानावरणक्षयोपशमसान्निध्यादित्यर्थः । नन्वसावप्यवायाभ्यधिकेति वर्त्तते, अर्थव्यवसायानन्तरं च येयमप्रच्युतिरूपा मतिः, इयं चापायाभ्यधिकत्वाद् धृतिर्नामेति, धारणेत्यर्थः ॥१८८॥

**[7]तं इच्छन्तस्स तुहं वत्थूणि[8] पञ्च णेच्छमाणस्स ।**
**किं होतु सा[9] अभावो भावो णाणं[10] व तं कतरं ॥१८९॥**

**तं इच्छ०** गाहा । तामेतां [11]धृतिमिच्छतो भवतोऽपायाऽवधारणभेदद्वयं च कल्पयतो वस्तुपञ्चकमापद्यते, अनिच्छतः पुनः किमसावभावो भवतु ?, भावत्वे वा ज्ञानान्तरपरिकल्पना, अष्टज्ञानप्रसङ्गः । तस्मान्न किञ्चिदेतत् ॥१८९॥

१ सव्वो विय को । २ चो० काणु° जे । ३ °ती आ० भण्ण° जे । ४ वे त्ति त । ५ °ब्भतिया को हे त । ६ णाम को हे जे । ७ तिं इच्छ° जे । ८ °णि य पञ्च को हे त । ९ साऽभा° को । १० °वो तो णं त । ११ °मिता धृत्ति इति प्रतौ ।

**[1]तुज्झं बहुतरभेता [2]भणति मती होति धितिबहुत्तातो ।**
**भणाति [3]न जातिभेतो इट्ठो मज्झं जधा तुज्झं ॥१९०॥**

**तुज्झं** गाहा । आह—यद्येवं भवतो बहुतरभेदा मतिरापद्यते, धृतिबहुत्वाद् धारणायास्त्रिभेदत्वादित्यर्थः । उच्यते—नेह जातिभेदोऽभिप्रेतो यथा भवतः ॥१९०॥ किं तर्हि ?

**सा भिण्णलक्खणा वि हु धितिसामण्णेण धारणा होति ।**
**जह [4]ओग्गहो[5] दुरूवोऽवग्गहसामण्णतो एक्को ॥१९१॥**

**सा भिण्ण०** गाहा । सा भिन्नलक्षणाऽपि यस्मान्न धारणासामान्यमतिवर्त्तते तस्माद् धारणैव । तद्यथा—द्विविधोऽप्यवग्रहोऽवग्रहमात्रसामान्यादेक एवेति ॥१९१॥

**तत्थोग्गहो [6]दुभेतो गहणं जं होज्ज[7] वञ्जणत्थाणं ।**
**वंजणतो य जमत्थो तेणातीए तयं वोच्छं ॥१९२॥**

**तत्थोग्गहो** गाहा । तत्र द्विविधोऽवग्रहः व्यञ्जनस्य, अर्थस्य च, अन्यस्यावग्राह्यस्याभावात् । यतश्च व्यञ्जनावग्रहपूर्वोऽर्थावग्रहस्तस्माद् व्यञ्जनावग्रहमेव तावद् वक्ष्यामः ॥१९२॥

**वंजिज्जइ जेणत्थो घडो व्व दीवेण वंजणं तं च ।**
**उवकरणिन्दियसद्दातिपरिणत[8]दव्वसंबन्धो ॥१९३॥**

**वंजि०** गाहा । इह व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनम्, तच्चोपकरणेन्द्रियस्य शब्दादिपरिणतद्रव्याणां च यः सम्बन्धः सम्पृक्तिरित्यर्थः । व्यञ्जनावग्रह इत्यत्र चोभयसमासाऽवधारणं द्रष्टव्यम्—व्यञ्जनेन—उपकरणेन्द्रियेण शब्दादिपरिणतद्रव्याणां व्यञ्जनानाम् अवग्रहो व्यञ्जनावग्रहः ॥१९३॥

**[9]अण्णाणं सो बधिरादिणं व तक्कालमणुवलंभातो ।**
**ण तदंते तत्तो च्चिय उवलंभातो [१४–द्वि०]तओ णाणं ॥१९४॥**

**अण्णाणं** गाहा । आह—स व्यञ्जनावग्रहः खल्वज्ञानम्, तत्कालानुपलम्भाद् बधिरादिकालानुपलम्भवत् । उच्यते—न, तदन्ते तज्ज्ञेयवस्तूपादानादेवोपलम्भात् । इह यस्य ज्ञेयवस्तूपादानविज्ञानस्यान्ते तत एवोपलम्भो भवति तद् ज्ञानं दृष्टम्, यथाऽर्थावग्रहपर्यन्ते तत एवेहासद्भावादर्थावग्रहे(हो) ज्ञानमिति ॥१९४॥

---

१ चो० तु° जे । तुब्भ त । २ भण्णति को । ३ भण्णति ते जति भेतो जे । ४ जह उग्ग° को हे । ५ °वो उग्ग° को हे । ६ दुरूवो को हे त । ७ होइ को हे । ८ °णतो द° जे । ९ चो० अण्णा° जे ।

**तक्कालम्मि वि णाणं तत्थत्थि तणुं ति तो तमव्वत्तं।**
**बधिरादीणं पुण सो अण्णाणं तदुभयाभावा ॥१९५॥**

**तक्का०** गाहा। व्यञ्जनादानकालेऽपि च तत्र ज्ञानमस्त्येव, सूक्ष्माव्यक्तत्वात्तु नोपलभ्यते, सुप्ताद्यव्यक्तविज्ञानवत्। अव्यक्तबधिरादिव्यञ्जनोपादानं पुनरकारणत्वाद् विज्ञानस्य तत्काले बाल्यसमोप(अल्पस्याप्य)भावादज्ञानमिति ॥१९५॥

**[1]कंधमव्वत्तं णाणं च सुत्तमत्तादिसुहुमबोधो व्व।**
**सुत्तातयो सयं [2]चिय विण्णाणं णावबुज्झंति ॥१९६॥**

**कध०** गाहा। आह—ज्ञानमव्यक्तं चेति विरुद्धमुच्यते, प्रकाशस्य तमोऽभिधानवत्। उच्यते—ननूक्तं सूक्ष्मत्वादेकतेजोऽवयवप्रकाशवत्, सुप्ताद्यव्यक्तबोधवच्च। सुप्तादयोऽतिसूक्ष्मत्वादात्मनीनमेव हि विज्ञाने(नं) नावबुध्य[न्]त इति ॥१९६॥ आह–यदि न तैरपि तदुपलभ्यते कथं तदुपलक्ष्यते 'अस्ति' इति? उच्यते —

**लक्खिज्जइ तं सिमिणायमाणवयण[3]दाणादिचिट्ठाहि।**
**जं णो[4]ऽमतिपुव्वाओ विज्जंते वयणचे[5]ट्ठाओ ॥१९७॥**

**लखिज्ज०** गाहा। इह सुप्तोऽपि कश्चित् स्वप्नायमानो भाषते, शब्दितश्च वाचं प्रयच्छति, सङ्कोच-विकोच-कण्डूयनादिक्रियाश्च करोति, न च तदा तान्युपलभते, विबुद्धोऽपि च न स्मरति, अवश्यं च मतिपूर्वाभिर्वाक्चेष्टाभिर्भवितव्यमित्यतस्तदनुमीयते 'अस्ति' इति ॥१९७॥

**जग्गंतो वि ण याणति च्छतुमत्थो हितयगोयरं सव्वं।**
**जं तज्झवसाणाइं जमसंखेज्जाइं दिवसेण ॥१९८॥**

**जग्गंतो** गाहा। इह जाग्रन्नपि तावच्छद्मस्थो न समस्तं हृदयगोचरं जानीते किन्नु सुप्तः? यतोऽन्तर्मुहूर्त्तेनाऽसंख्येयान्यध्यवसानान्तराण्यतिक्रामति, किमु समस्तेनाह्ना, न चोपलभते पृथक्, तद्वद् व्यञ्जनावग्रहविज्ञानमिति ॥१९८॥

**जति [6]वेऽण्णाणमसंखेज्जसमयसद्दातिदव्वसब्भावे।**
**[7]कंध चरिमसमयसद्दातिदव्वविण्णाणसामत्थं ॥१९९॥**

**जति** गाहा। यदि वा तदज्ञानमसंख्येयसमयोपचितशब्दादिद्रव्यसद्भावे संति कथमिह तच्चरमसमयोपात्तेषु शब्दादिद्रव्येष्वर्थावग्रहविज्ञानसामर्थ्यं सम्भाव्यते?

---

१ चो० कध°। २ विय हे। ३ °वयणादिदाणचे° जे। ४ जं णो मति° जे। ५ °चिट्ठा° को हे। ६ जति अण्णा° जे। ७ किह् चरम को हे। किह च° तं।

॥१९९॥ यच्चेहार्थावग्रहविज्ञानं तदसंख्येयसमयोपचितशब्दादिद्रव्यसमुदये वा सम्भाव्येत, चरमसमयोपात्तद्रव्येषु वा ? तत्र समुदये तावत्—

**जं सव्वधा ण वीसुं सव्वेसु वि तण्ण रेणुतेल्लं व ।**
**पत्तेयमणिच्छंतो [१]किधमिच्छसि समुदये णाणं ॥२००॥**

**जं सव्व०** गाहा । परमतमास्थायोच्यते–न समुदये विज्ञानमस्ति, पृथक् सर्वथाऽभावात्, रेणुतैलवत् ॥२००॥

**समुदाए जति• णाणं देसूणे समुदए कधं णत्थि ।**
**समुदाए वाऽभूतं [२]किध देसे होज्ज तं सयलं ॥२०१॥**

**समुदा०** गाहा । समस्तसमयद्रव्यसमुदाये वा यदि ज्ञानमिष्टं कथं तत् समुदायैकदेशान्त्यसमयद्रव्यविकले न स्यात् ? अथवा पक्षः क्रियते—व्यञ्जनादानैसमयेष्वपि ज्ञानम् अस्ति, ज्ञानोपकारिद्रव्योपादानसमयसमुदयैकदेशत्वात्, अर्थावग्रहसमयवत् । स्यात्–चरमसमयोपात्तद्रव्येषु सम्भाव्यते विज्ञानम्, अतः शेषसमयोपात्तद्रव्यसमुदाये सर्वथैवाभूतमन्त्यसमस्तद्रव्येषु कथं समस्तमेवं स्यात्? न, परस्यान्त्यसमयद्रव्येषु ज्ञानमस्ति, समयमात्रोपात्तत्वात्, व्यञ्जनावग्रहणैकसमयद्रव्यवत् । स्यात्–प्रत्यक्षाविरुद्धमिदमर्थावग्रहसमयेऽपि न ज्ञानमिति । तच्च न, तत्रैव समस्तप्रतिपत्तेः प्रत्यक्षविरोधात्, अन्त्यत[न्]तौ समस्तपटप्रतिपत्तिवत् । अनुमानविरोधश्च ज्ञानोपकारिद्रव्यसामान्यादर्थावग्रहसमयद्रव्यवदित्युक्तम् ॥२०१॥

**तंतू पडोवकारी ण समत्तपडो य समुदिता ते तु ।**
**सव्वे समत्तपडओ तध णाणं सव्वसमएसु ॥२०२॥**

**तंतू** गाहा । तस्माद्यथा तन्तुः पटैकदेशोपकारी न सर्वथैवापटो, न च समस्तपटः, किन्तु समस्तासमस्तपट इति । तद्वत् सर्वसमयद्रव्याणां तदुपकारित्वात् सर्वसमयेषु ज्ञानमिति ॥२०२॥

[१५–प्र०]**णयणमणोवज्जिन्दियभेतातो वंजणोग्गहो चतुधा ।**
**उवघाताणुग्गहतो जं ताइं पत्तकारीणि ॥२०३॥**

**णयण०** गाहा । स च व्यञ्जनावग्रहो नयनमनोवर्जैरिन्द्रियैर्भवति, तेषां प्राप्ति(प्त)कारित्वात् । तत्प्राप्तकारिता कथम् ? अनुग्रहोपघातदर्शनात् । त्वक्चन्दनादियोगवत् ॥२०३॥

---

१ कह त को हे । २ कह को हे त । ३. व्यञ्जनादातनयेष्यपि ज्ञानं नास्ति इति प्रतौ ।

[1]जुज्जति पत्तविसयता फरिसणरसणे ण सोत्त[2]घाणेसु ।
[3]गेण्हंति सविसय[4]मितो जं ताइं भिण्णदेसं पि ॥२०४॥

**जुज्जति** गाहा । आह स्पर्शन-रसनयोः प्राप्तविषयता युज्यते, न तु श्रोत्र-घ्राणयोर्यतस्ताभ्यां भिन्नदेशोऽपि विषयो गृह्यते ॥२०४॥ उच्यते—तथापि तयोः प्राप्तविषयतैव, यस्मात्—

पावंति सद्दगंधा ताइं गंतुं सयं ण [5]गेण्हन्ति ।
जं ते पोग्गलमइया सक्किरिया वायुवहणतो ॥२०५॥

**पावंति** गाहा । इह शब्द-गन्धौ प्राप्नुतः श्रोत्र-घ्राणे, ते त्वप्राप्ये । ते न प्राप्नुतः अबाह्यकरणत्वादात्मनः, स्पर्शनवत् । शब्दगन्धौ गच्छतः, पुद्गलमयत्वे सति सक्रियत्वात् । कथं सक्रियत्वं तयोरिति चेत्, वायुनोद्वहनाद् धूमवत् ॥२०५॥

धूमो [6]वे संहरणतो दाराणुविधाणतो विसेसे[7]णं ।
तोयं व णितंबातिसु पडिघातातो य वायु व्व ॥२०६॥

**धूमो०** गाहा । इतश्च गृहादिषु संहरणाद् धूमवदेव पिण्डीभवनादित्यर्थः । विशेषतश्च द्वारानुविधानात् तोयवत् । प्रतिघाताच्च नितम्बादिषु वायुवत् ॥२०६॥

[8]गेण्हन्ति पत्तमत्थं उवघाताणुग्गहोवलद्धीतो ।
बाधिज्जपूतिणासारिसातयो कधमसंबद्धे ॥२०७॥

**गेण्हन्ति** गाहा । प्राप्तकारिणी श्रोत्रघ्राणे, उपघातानुग्रहोपलब्धेः, स्पर्शनवत् । न च स्वविषयप्राप्तिमन्तरेण बाधिर्य-पूति-नासार्शोविकारादयः सम्भवन्ति ॥२०७॥

आह—नयनमनोभ्यां भिन्नो(किन्न) व्यञ्जनावग्रहः ? उच्यते—ज्ञेयद्रव्योपादानं व्यञ्जनावग्रह उक्तः । न च [नयन]मना(नो)भ्याम्, अप्राप्तकारित्वात् । कथमिति ? यदुच्यते—

लोअणमपत्तविसयं मणो व्व जमणुग्गहातिसुण्णं ति ।
[9]जलसूरालोगादिसु दीसंति अणुग्गहविघाता ॥२०८॥

**लोयण०** गाहा । इह लोचनमप्राप्तविषयम्, अनुग्रहोपघातशून्यत्वान्मनोवत् । मनः सिद्धं कृत्वोदाह्रियते । आह—ननु जलघृतवनस्पत्यालोकनादिष्वनुग्रहं सूर्यालोकनादिषूपघात इति ? ॥२०८॥ उच्यते—

१ चो० जु° जे । २ सोय° त । ३ गि° को हे । ४ °सयंमि उ ज्जं ताइं त । °सयमियं जं को । ५ गि° को हे । ६ व्व को हे । ७ °सेण जे । ८ गि हे । ९ चो० जल° जे ।

**दंज्झेज्ज पावितुं रविकरादिणा फरिसणं व को दोसो ।**
**मण्णेज्जणुग्गहं पिव उवघाताभावतो सोम्मे[2] ॥२०९॥**

**दज्झे०** गाहा । इह न ब्रूमः सर्वथैव चक्षुषोऽनुग्रहोपघातौ न स्तः । किं तर्हि ? विषयमप्राप्तमालम्बत इति ब्रूमः । प्राप्तेन तूपघातकेनोपहन्येत सूर्यरश्म्यादिना । यत् तु शीतरश्म्य(°श्म्युप)शान्तरश्मि वा तेनानुगृह्येत, अनुपघातकत्वाद्वानुग्रहमिव मन्येत । अन्यथा हि समानायां प्राप्तौ को हेतुर्यतो रश्मिमात्रकृतो भवत्युपघातोऽनुग्रहो वा नाग्निजलशूलाद्यालोकनाद्दहनक्लेदनपाटनादय इति ॥२०९॥

**गंतुं[3] ण रूवदेसं पासति पत्तं सयं व णिय[१५-द्वि०]मोऽयं ।**
**पत्तेण तु मुत्तिमता उवघाताणुग्गहा[4] होज्जा ॥२१०॥**

**गंतुं** गाहा । तस्मान्न रूपदेशं गत्वा पश्यति, प्राप्तं वाऽर्थमालम्बत इतीदं नियम्यते । मूर्त्तिमता तु प्राप्तेन अनुगृह्येतोपहन्येत वा तद्रश्मिभिर्वेति न दोषः ॥२१०॥

**जति पत्तं गेण्हेज्ज वँ तग्गतमंजणरओमलादीयं ।**
**पेच्छेज्ज जण्ण पासति अपत्तकारिं ततो चक्खुं ॥२११॥**

**जति** गाहा । यदि वा प्राप्तमर्थं गृह्णीयात् तद्गतमञ्जनरजोमलादिकं पश्येत् । न च पश्यति । तस्मादप्राप्तकारीति ॥२११॥

आह—प्राप्तविषयं नयनम्, आवरणाद् घ्राणवत् । न, अनैकान्तिकत्वात् मनोवत् । मनोऽप्यप्राप्तविषयं सद्विषयां सद्वि(°यं सद्विषादि)भिराव्रियत इति । रूपावरणेपि हि बाह्यानुग्रहाभावादग्राहकं चक्षुरनुग्रहशून्यं मनोवत् । मनोऽपि ह्यप्राप्तकारित्वे सत्यैन्द्रियकेष्वर्थेषु नेन्द्रियानुग्रहशून्यमनुप्रवर्त्तते क्वचित् । यस्य चाभिप्रायः खल्वप्राप्तकारिणा बाह्यानुग्रहनिरपेक्षेणानुप्रवर्त्तितत्वं(व्यं) तस्य मनसापीन्द्रियैः प्रकाशितेष्वप्रकाशितेषु वाऽविशेषेण सर्वार्थेष्वनुप्रवर्त्तितव्यम् । न चानुप्रवर्ततेऽत्यन्तमदृष्टाश्रुतादिष्विति ॥२११॥
आह—प्राप्तकारिता श्रद्धीयते चक्षुषो न तु मनसो यस्मात्—

**[6]गंतुं णेएण मणो संबज्झति जग्गतो व सिमिणे वा ।**
**सिद्धमिदं लोगम्मि वि अमुगत्थ गतो मणो मे त्ति ॥२१२॥**

**गंतुं** गाहा । इह ज्ञेयेनार्थेन यात्वा मनः सम्बध्यते जाग्रतः स्वप्ने वा । सिद्धमिदं लोकेऽपि—'अन्यत्र मे गतं मनः' इति ॥२१२॥ उच्यते—

१ आ० दज्झे° जे । डज्झे° त को हे । २ सोम्मं हे । ३ गंतू जे । ४ °हो त । ५ °ज्ज उ को हे । ६ चो० गंतुं जे ।

**णाणुग्गहोवघाताऽभावातो लोअणं व सो इधरा।**
**तोयजलणातिचिंतणकाले जुज्जेज्ज दोहिं पि ॥२१३॥**

**णाणु०** गाहा। न ज्ञेयेन मनः संबध्यतेऽनुग्रहोपघाताभावात्। अन्यथा हि तोय-चन्दनादिचिन्तनादनुगृह्येत, अग्नि-शस्त्रादिचिन्तनाच्चोपहन्येत इति ॥२१३॥

**[1]दव्वं भावमणो वा वयेज्ज जीवो य होज्ज[2] भावमणो।**
**देहव्वावित्तणतो ण देहबाहिं तओ[3] जुत्तो ॥२१४॥**

**दव्वं** गाहा। इह परस्य द्रव्यमनो भावमनो वा बहिर्निश्चरेत्? जीवश्च मननपरिणामक्रियापन्नो भावमनः। नासौ बहिर्युक्तरूपः, शरीरमात्र[व्यापि]त्वात् ॥२१४॥

**सव्वगतो[4] त्ति य बुद्धी कत्ताऽभावादिदोसतो तण्णं[5]।**
**सव्वासव्वग्गहणप्पसंगदोसादितो वा वि ॥२१५॥**

**सव्व०** गाहा। स्यान्मतिः—सर्वगतोऽसौ, ततश्च नित्यप्राप्त एवेति। तच्च न, अकर्तृत्वादिप्रसङ्गात्। कथमकर्त्तात्मापद्यते? सर्वगतत्वात्, आकाशवत्। एव[म]भोक्ता, असंसारी अज्ञो न सुखी न दुःखीत्यादि। यदि च प्राप्य गृह्णात्यतः सर्वगतत्वात् सर्वत्र प्राप्त इति सर्वग्रहणप्रसङ्गः। ततश्च सर्वसर्वज्ञप्रसङ्गः। न चेत् प्राप्नोति(प्राप्त-मपि) सर्वं गृह्णाति, अतः किञ्चिदपि मा ग्रहीत् [इति] सर्वाग्रहणप्रसङ्गः ॥२१५॥

**दव्वमणो विण्णाता ण होति गंतुं य किं तओ कुणतु।**
**अध करणभावतो तस्स तेण जीवो वियाणेज्ज ॥२१६॥**
**करणत्तणतो तणुसंठितेण जाणेज्ज[6] फरिसणेणं वं[7]।**
**एत्तो च्चिय हेतूतो ण णीति बा[१६–प्र०]हिं फरिसणं व ॥२१७॥**

**दव्व०** गाहा। **करण०** गाहा। अथ द्रव्यमनो निश्चरेदिति ब्रूमः। गतमपि सदकिञ्चित्करं तत्, अज्ञत्वादुपलवत्। अथ मतिः—करणत्वात् द्रव्यमनसस्तेन प्रदीपेनेव प्रकाशितमर्थमात्मा यदि जानीते को दोषः? तच्च न, यस्माच्छरीरस्थेनैवानेन जानीते, न बहिर्गतेनान्तःकरणात्। इह यदा मनोऽन्तःकरणं तेन शरीरस्थेनोपलभेत यथा स्पर्शनेन। प्रदीपस्तु नान्तःकरणमात्मनः तस्मादसमाधिः। 'अत एव हेतोः' बहिरपि न तन्निश्चरति स्पर्शनवत्। 'अत एव हेतोः' इत्यात्मनोऽन्तःकरणत्वादित्यर्थः। २१६-२१७॥ आह—यदुक्तमनुग्रहोपघाताभावादप्राप्तकारि मनस्तन्न, यस्मात्—

१ आ० दव्वं जे। २ होइ त को हे। ३ जओ त। ४ °गउ त्ति को हे। ५ तण्णु जे। ६ जाणिज्ज को हे। ७ वा जे।

**णज्जति[1] उवघातो से दुब्बल्लोरक्खतादिलिंगेहिं[2] ।**
**जमणुग्गहो य हरिसादिएहिं तो सो उभयधम्मो[3] ॥२१८॥**

**णज्ज॰** गाहा । इहोपघातोऽनुमीयते मनसोऽतिशोकात् दौर्बल्यम्, आर्तध्यानादुरोविघात इत्यादिना, हर्षादिभिश्च शरीरोपचयविशेषादनुग्रह इति ॥२१८॥ उच्यते—

**जँति[4] दव्वमणोऽतिबली पीलेज्जा[5] हिदि णिरुद्धवातो[6] व्व ।**
**तदणुग्गहेण हरिसातयो[7] व्व णेयस्स किं तत्थ ॥२१९॥**

**जति** गाहा । इह यदि द्रव्यमनोऽनिष्णा(ष्टा)तिप्रचितपुद्गलमयत्वादभिहन्या-[द् हृ]द्देशावरुद्धवायुवत् । इष्टातिप्रचितपुद्गलमयत्वाद्वाऽनुगृह्णीयाद् भेषजवत्, कस्तत्र ज्ञेयस्य मनसश्च सम्बन्धः ? ॥२१९॥

**इट्ठाणिट्ठाहारब्भवहारे होन्ति पुट्ठिहाणीओ ।**
**जध तध मणसो ताओ पोग्गलर्गुणतो[8] त्ति को दोसो ? ॥२२०॥**

**इट्ठा॰** गाहा । इह यथेष्टाहाराम्यवहारात् पुष्टिः, अनिष्टाहाराम्यवहाराच्च हानिः । एवं यदीष्टानिष्टपुद्गलद्रव्यमयत्वान्मनसो मन्तुरनुग्रहोपघातौ स्याताम्, को दोषः ? आह— कथं पुनरिदं गम्यते पौद्गलं द्रव्यमन इति ? उच्यते—अत एव—मन्तुरनुग्रहोपघातदर्शनादाहारवत् इति ॥२२०॥

**णीतुं आगसितुं वा ण णेयमालंबति त्ति णियमोऽयं ।**
**तं णेअकता जेऽणुग्गहोवघाता य ते णत्थि[9] ॥२२१॥**

**णीतुं** गाहा । इह न निर्गत्य शरीरात् ज्ञेयमर्थमालम्बते, शरीरस्थमपि न [10]ज्ञेयमाक्रम्याऽऽलम्बत इतीदं नियम्यते । तस्य च यावनुग्रहोपघातौ तज्ज्ञेयकृतावेव तौ न स्त इति ॥२२१॥

**सो पुण सयमुवघातणमणुग्गहं वा करेज्ज को दोसो ? ।**
**जमणुग्गहोववाता जीवाणं पोग्गलेहिंतो ॥२२२॥**

**सो पुण** गाहा । तत्पुनरिष्टानिष्टपुद्गलमयत्वाद् द्रव्यमनो मन्तुरनुग्रहमुपघातं वा कुर्यात् आहारवदिति को दोषः, यतः पुद्गलेभ्यः संसारिणामनुग्रहोपघाताविति ? ॥२२२॥ एवं तावज्जाग्रतो न मनो निश्चरतीत्युक्तम् । अथ स्वप्ने कथम् ? उच्यते—न तत्रापि बहिर्निश्चरति । यस्मात्—

---

१ चो॰ ण॰ **जे** । २ दोबल्लो॰ **त को हे** । ३ ॰धम्मा **जे** । ४ आ॰जति **जे** । ५ पीलि॰ **को हे** । ६ ॰वाउ व्व **को हे** । ७ ॰सादउव्व **को हे** । ८ ॰लगण॰ **त** । ॰गुणउत्ति **को हे** । ९ णत्थि भावा ॥ **त** । १० ज्ञेयं माक्रजुर्मालम्बत इति प्रतौ ।

[1]सिमिणो ण तधारूवो वभिचारातो अलातचक्कं व ।
वभिचारो य सदंसणमुवघाताणुग्गहाभावा ॥२२३॥

**सिमिणो** गाहा। इह यत्स्वप्नेन(°प्ने) देशगमनादिक्रियारूपं तदसद् , व्यभिचारादलातचक्रवत्। इह यथाऽलातं परिभ्रमच्चक्रवदुपलभ्यते भ्रमणोपरमे त्वलातमेवेति । एवं स्वप्नेऽपि व्यभिचारो दृष्टः, स्वरूपदर्शनादनुग्रहोपघाताभावाच्चेति ॥२२३॥ कथं पुनः—

इध पासुत्तो पेच्छति सदेहमण्णत्थ ण य तओ तत्थ ।
ण य तग्गतोवघाताणुग्गहरूवं विबुद्धस्स ॥२२४॥

**इध पा०** गाहा। इह यः सुप्तः स देशान्तरेऽपि स्वं रूपं पश्यति । न चासौ तत्र, यतः शयानमिहेनमनो (°मिहैवान्यः) पश्यति । न च विबुद्धस्य सतः तद्गतोपघातानुग्रहरूपमस्तीति ॥२२४॥ आह--

[१६-द्वि०]दीसंति कासइ फुडं हरिसविसादादयो विबुद्धस्स ।
सिमिणाणुभूतसुहदुक्खरागदोसादिलिंगाइं ॥२२५॥

**दीसंति** गाहा। इह कस्यचिद् बुद्धस्यापि सतो हर्षविषादादयो लक्ष्यन्ते स्वप्नानुभूतसुखदुःखरागद्वेषादिलिङ्गानि। अतः स्वप्नक्रिया सत्येति ॥२२५॥ उच्यते—

ण[3] सिमिणविण्णाणातो हरिसविसादादयो रुिज्झंवित ।
किरियाफलं तु तित्तीमदवधबंधादयो णत्थि ॥२२६॥

**ण सिमि०** गाहा। इह न स्वप्नविज्ञानात्तत्र विबुद्धस्य वा हर्षादयो [विरुद्धाः] लक्ष्यन्ते, स्वप्नस्य विज्ञानमयत्वात्, हर्षादीनां च विज्ञानधर्मत्वात्। जाग्रद्विज्ञानहर्षादितृप्त्यादिक्रियाफलं तु नेष्यते इति ॥२२६॥ आह

[5]सिमिणे वि सुरतसंगमकिरियासंजणितवंजणविसग्गो ।
पडिबुद्धस्स त्रि कासयि[6] दीसति[7] सिमिणाणुभूतफलं[8] ॥२२७॥

**सिमिणे** गाहा। स्वप्नेऽपि योषित्सङ्गमक्रियाविर्भूतः शुक्रविसर्गः कस्यचिद्विबुद्धस्यापि लक्ष्यते। तेनानुमीयते योषित्सङ्गमक्रियाप्यासीदिति ॥२२७॥

[9]सो अज्झवसाणकतो जागरतो वि जध तिव्वमोहस्स ।
तिव्वज्झवसाणातो होति विसग्गो तधा [10]सिमिणे ॥२२८॥

---

१ सुमि° को। २ °रागद्दोसा° त। ३ आ० ण जे। णसुमि° त। ४ °विसासादयो हे को। ५ सुमि° त। ६ कस्सइ त को हे। ७ सुमि° त। ८ भूइफ° को। ९ आ० सो जे। १० सुमि° त को हे।

**सो अज्झ०** गाहा । स योषित्सङ्गमाध्यवसायक्रियामात्रादेवाविर्भवति, यथेह तीव्रमोहस्य कस्यचिज्जाग्रतोऽपि तदध्यवसितमतेरिति ॥२२८॥

**सुरतपडिवत्तिरतिसुहगब्भाधाणाति इतरधा[1] होज्ज[2] ।**
**[3]सिमिणसमागमजुवतीए ण य जतो ताइं तो विफला[4] ॥२२९॥**

**सुरत०** गाहा । अन्यथा हि स्वप्नसमेतयुवतेरपि सुरतप्रतिपत्तिर्भवेत्, तत्सुखं च गर्भाधानादयश्च । न च भवन्ति । अतोऽनुमीयते न तत्क्रियाफलमस्तीति ॥२२९॥

**णणु [5]सिमिणओ वि कोयि[6] सच्चफलो फलइ जो जधा दिट्ठो ।**
**णणु [5]सिमिणम्मि णिसिद्धं किरिया किरियाफलाइं च ॥२३०॥**

**णणु** गाहा । आह—ननु स्वप्नोऽपि कश्चित् सत्यफलो भवेत्—यत्र यद्यथा दृष्टं विबुद्धस्यापि तत्तथा भवतीति । उच्यते—तच्चा(त्रा)स्माभिः क्रियामात्रं तत्फलं च निवार्यते ॥ २३०॥

**जं पुण विण्णाणं तप्फलं[7] च [8]सिमिणे विबुद्धमेत्तस्स[9] ।**
**[8]सिमिणयणिमित्तभावं फलं[10] य तं को णिवारेइ ? ॥२३१॥**

**जं पुण** गाहा । यत्पुनर्विज्ञानं तत्फलं च स्वप्नकाले, विबुद्धस्य च हर्षादि, स्वप्नस्य च यो निमित्तभावस्तत्फलं यदवश्यभावि केन तन्निवार्यते ? यस्मात् स्वगतमेव हि त्रिविधं निमित्तमात्मनः कायिकादि भाविनमर्थमावेदयति ॥२३१॥ तद्यथा—

**[१७–प्र०]देहप्फुरणं सहसोदितं च [11]सिमिणो य कायियादीणि ।**
**सगताइं णिमित्ताइं सुभासुभफलं णिवेतेन्ति ॥२३२॥**

**[12]सिमिणमिव मण्णमाणस्स थीणगिद्धिस्स[13] वंजणोग्गहता ।**
**होज्ज व ण तु सा मणसो सा खलु सोदिन्दियादीणं ॥२३३॥**

**देहप्फुरणं** गाहा । **सिमिण०** गाहा । भवेद्वा व्यञ्जनावग्रहः स्वप्नमिव मन्यमानस्य स्त्यानर्द्धिमतः । न त्वसौ स्वप्नो न चासौ मनसोऽवग्रहः । किं तर्हि ? स खलु श्रोत्र-घ्राण-रसन-स्पर्शनानामेव ॥ २३२ –२३३॥ तत्र चोदाहरणानि—

**पोग्गलमोतगदन्ते फरुसगवडसालभंजणे चेव ।**
**थीणिद्धियस्स[14] एते आहरणा[15] होन्ति णातव्वा ॥२३४॥**

---

१ इहरहा त को हे । २ होज्जा को हे । ३ सुमि° त को हे । ४ विफलो जे । ५ सुमि° त । चो० णणु जे । ६ कोई त को हे । ७ तं फलं जे । ८ सुमि त । ९ मेत्ते य जे । १० फले जे । ११ सुमि° । १२ सुमि° त । १३ गिद्ध° त । १४ थीणद्धि° त को हे । १५ आहा° हे ।

**जध देहत्थं चक्खुं जंप्पति चन्दं गतं ति ण य सच्चं ।**
**रूढं मणसो वि तधा ण य रूढी सच्चिया सव्वा ॥२३५॥**

**पोग्गल०** गाहा । **जध दे०** गाहा । यच्च लोकेऽपदिश्यते 'अमुत्र मे गतं मनः' इति तद्रूढिमात्रकमेव । यथेह देहस्थमपि चक्षुः 'चन्द्रमसं गतम्' इति व्यपदिश्यते । न च रूढिरवश्यं सर्वैव सत्येति ॥२३४॥ २३५॥

**[1]विसयमसंपत्तस्स वि संविज्जति वंजणोग्गहो मणसो ।**
**जमसंखेज्जसमयिओ उवयोगो जं च सव्वेसु ॥२३६॥**
**समएसु मणोदव्वाइं गेण्हते वंजणं च दव्वाइं ।**
**भणितं संबंधो वा तेण तयं जुज्जते मणसो ॥२३७॥**

**विसय०** गाहा । **समए०** गाहा । आह—यद्यपि विषयमसम्प्राप्य गृह्णाति मनस्तथाप्यस्य व्यञ्जनावग्रहो युज्यत एव, असंख्येयसमयत्वादुपयोगस्य, प्रतिसमयं च मनोद्रव्योपादानात्, द्रव्याणां च व्यञ्जनव्यपदेशात्, तत्सम्बन्धस्य वा, श्रोत्रेन्द्रियावग्रहवत् । यथेह श्रोत्रेन्द्रियेण शब्दद्रव्याणि प्रतिसमयमाददानस्य व्यञ्जनावग्रहो भवत्यसंख्येयसमयस्तदन्ते चार्थावग्रहः तद्वन्मनसोऽपीति ॥२३६–२३७॥

**देहा[3]ऽविणिग्गतस्स वि सकायहितयादियं विचिंतयतो ।**
**णेयस्स वि संबन्धे वंजणमेवं पि से जुत्तं ॥२३८॥**

**देहा०** गाहा । अथ अनिश्चरितस्यापि च स्वदेहात् स्वदेह[हृद्]देशमनुचिन्तयतः तज्ज्ञेयसम्बन्धे सति प्राप्तकारिता तावद् व्यञ्जनावग्रहश्चोभयमालक्ष्यत इति ॥२३८॥

**ग[4]ज्झस्स वंजणाणं जं गहणं वंजणोग्गहो स मतो ।**
**गहणं मणो ण [5]गज्झं को [१७ द्वि०] भागो वंजणे तस्स ? ॥२३९॥**

**गज्झस्स** गाहा । यत्तावदुक्तम्—अनुसमयं द्रव्योपादानात् व्यञ्जनावग्रह इत्यत्र ब्रूमः । ग्राह्यस्य [संबन्धिनां] व्यञ्जनानां यदुपादानं स व्यञ्जनावग्रहः, यथा शब्दादिद्रव्याणाम् । ग्रहणं च मनः, न ग्राह्यमित्यसमञ्जसम् । न च स्वदेह[हृद्]देशसम्बन्धमात्रात् प्राप्तकारिता युक्ता । किं हि स्वदेशे न सम्बद्धम् ? ज्ञानस्यात्मदेशसम्बन्धात् प्राप्तकारिता स्यात् । पारिशेष्याद् ग्राह्यार्थापेक्षया प्राप्तकारितेति ॥२३९॥ अतोऽपि हि व्यञ्जनावग्रहपरिकल्पनमयुक्तम्—

१ जंपइ् **को हे** । २ चो० वि° **जे** । ३ देहादणि° **को हे त** । ४ आं० गज्झ **जे** । गिज्झ **को हे** । ५ गिज्झं **को हे** ।

**तद्देसचिन्तणे होज्ज वंजणं जति तओ ण समयम्मि ।**
**पढमे चेय तमत्थं[1] गेण्हेज्ज ण वंजणं तम्हा ॥२४०॥**

**तद्देस०** गाहा । तद्देशसम्बन्धेऽपि च व्यञ्जनावग्रहो नास्ति, अनुपलब्धिकालासम्भवात् । इह यस्य ज्ञेयसम्बन्धे सत्यप्यनुपलब्धिकालो नास्ति, न तस्य व्यञ्जनावग्रहो दृष्टः, यथा चक्षुषः । यस्य च व्यञ्जनावग्रहो दृष्टः, यस्य च व्यञ्जनावग्रहोऽस्ति, न तस्य ज्ञेयसम्बन्धे सत्यप्यनुपलब्धिकालासम्भवो यथेह श्रोत्रस्य । यथेह श्रोत्रस्य ज्ञेयसम्बन्धे सत्यनुपलब्धिकालोऽस्ति तथा यदि मनसोऽपि स्यात्, स्याद् व्यञ्जनावग्रहः । यदि त्वेतन्न, प्रथमसमयादेवारभ्य सम्बन्धा(°न्ध)समकालमेवोपलभेत । उपलभते च लोचनवत् । तस्मान्नास्य व्यञ्जनावग्रहः ॥२४०॥

**समए समए गेण्हति दव्वाइं जेण मुणति य तदत्थं ।**
**जं चिन्दियोवओगे वि वंजणावग्गहेऽतीते ॥२४१॥**
**होति मणोव्वावारो[2] पढमातो चेव तेण समयातो ।**
**होति तदत्थग्गहणं तदण्णधा ण प्पवत्तेज्जा ॥२४२॥**

**समए** गाहा । **होति** गाहा । इह समये समय एव हि मनोद्रव्याणामादानं च भवति तदर्थोपलम्भश्चेत्यागमः । यच्चेन्द्रियोपयोगेऽपि हि व्यञ्जनावग्रहेऽतीतेऽर्थावग्रहसमय एव मनोव्यापारो दृष्टः । अन्यथा चेन्द्रियमिन्द्रियं प्रति मनोव्यञ्जनावग्रहोऽपि स्यात् । ततश्चेन्द्रियानिन्द्रियनिमित्तपरिकल्पनमनर्थकम्, अष्टाविंशतिभेदता चेति । तस्मात् प्रथमसमयादेवारभ्य मनोव्यापारो युक्तः । अन्यथा हि नैव तन्मनोनुप्रवर्त्तेत, संकल्पमयत्वादवधिज्ञानोपयोगवत् ॥२४१–२४२॥

**णेयातो[3] च्चिय जं सो लभति सरूवं पतीवसद्दो[4] व्व ।**
**तेणायुत्तं तस्साऽसंकप्पितवंजणोग्गहणं[5] ॥२४३॥**

**णेयातो च्चि०** गाहा । न मनसोऽनालोचनकालोस्ति प्रकाशनीयात्स्वरूपलाभात् । इह यत् प्रकाशनीयादर्थात् स्वरूपं लभते, न तस्यानालोचने(न)कालो दृष्टः, यथा शब्दप्रदीपयोः । यस्य चानालोचनकालोऽस्ति, न तत् प्रकाशनीयादर्थादात्मलाभं लभते, यथा श्रोत्रम् । एवं यस्मान्न संकल्पते न तद् द्रव्यग्रहणमस्ति । तस्मान्न तस्य व्यञ्जनावग्रह इति ॥२४३॥ इदानीं चोद्यशेषमाह परः—

**[6]जति णयणिन्दियमप्पत्तकारि सव्वं ण [7]गेण्हते कम्हा ? ।**
**गहणागहणं किंकतमपत्तविसयत्तसामण्णे ? ॥२४४॥**

---

१ तमत्थं को हे त । २ °णोवावा° त को हे । ३ णेयाउ को हे । ४ °सद्दव्व को हे ।
५ °जणग्ग° को हे । ६ चो० जति जे । ७ गिण्ह° को । हे ।

**जति** गाहा। इह यदि नयनमप्राप्तविषयमविशेषेण, कस्मात् सर्वार्थान्न गृह्णाति? अप्राप्तौ सत्यां ग्रहणमग्रहणं चेति किंकृतो विशेषः? ॥२४४॥

**विसयपरिमाणमणियतमपत्तविसयं ति तस्स मणसो व्व।**
**मणसो वि विसयणियमो ण क्कमति जतो स सव्वत्थ ॥२४५॥**

**विसय०** गाहा। पक्षः क्रियते—न चक्षुषो विषयपरिमाणं युक्तम् अप्राप्तविषयत्वाद्यथा मनसः। उच्यते—मनसोऽपि हि विषयनियमोऽस्त्येव। तदपि हि न सर्वत्र [क्रमति,] का(क्र)मनियमात् ॥२४५॥

**अत्थगेहणेसु[1] मुज्झति संतेसु वि केवलातिगम्मेसु।**
**तं किंकतमग्गहणं अपत्तकारित्तसामण्णे ॥२४६॥**

**अत्थग०** गाहा। इहार्थगहनेष्वागमादिगम्येषु केनचित् क्वचित्त्व(त्तु) मनसोऽपि विघातो दृष्टः। तदप्राप्तौ च सत्यां ग्रहणमग्रहणं वास्य किंकृतम्? ॥२४६॥

**कम्मोदयओ व्वे[2] सभावतो व्वे[3] णणु लोयणे वि तं तुल्लं।**
**तुल्लो व्वे[3] उवालंभो ए[१८-प्र०]सो संपत्तविसए वि ॥२४७॥**

**कम्मो०** गाहा। स्यात्—कर्मोदयविशेषात्स्वभावाद्वा तद्ग्रहणाग्रहणं भवेत्। ननु लोचनेऽप्येतत्समानम्। अथवा यस्यापि नयनमिह प्राप्तविषयं तस्यापि तुल्य एवायमुपालम्भः, यस्मान्न यावता सम्बध्यते तत्सर्वं गृह्णाति। न च मनोऽनवस्थानात्। न चाक्षिपक्ष्माञ्जनशलाकादिसत्यां प्राप्तौ किमेषामग्रहणम्? अथ स्वाभाव्याद्; अप्राप्तविषयेऽप्येतत् समानम् ॥२४७॥ अत उच्यते—

**सामत्थाभावातो मणो व्व विसयपरतो ण गेण्हाति[4]।**
**कम्मक्खयोवसमतो साणुग्गहतो य सामत्थं ॥२४८॥**

**सामत्था०** गाहा। न चक्षुर्विषयपरिणामात् परतो गृह्णाति, सामर्थ्याऽभावात् मनोवत्। कुतः पुनः सामर्थ्यमसामर्थ्यं चेति? उच्यते—तदावरणक्षयोपशमात् सामर्थ्यमुपयोगरूपाऽलोकानुग्रहाच्च। परतस्तत्क्षयोपशमाऽभावादेवाऽसामर्थ्यमिति ॥२४८॥

**तोएण मल्लयं पिव वंजणमापूरितं ति जं भणितं।**
**तं[5]द्दव्वमिन्दियं वा तस्संजोगो व ण विरुद्धं ॥२४९॥**

**तोएण** गाहा। इदानीं यत्सूत्रोपदिष्टं 'वंजणोग्गहस्स परूवणं करिस्सामि जाव जाहे तं वंजणं पूरितं भवति" [नन्दी ५६-५८]त्ति तद्[6] व्यञ्जनं द्रव्यमिन्द्रियं तत्सम्बन्धो वेति सर्वथा न विरोधः ॥२४९॥ कथं पुनः—

१ अत्थग्गह° को हे त। २ व को। ३ व को हे। ४ गिण्हेइ को हे। त। ५ तं दव्व° को हे। ६ तद्रव्यं जातं द्र° इति प्रतौ।

**दव्वं माणं पूरितमिन्दियमापूरितं तधा दोण्हं ।**
**अपरोप्परसंसग्गो जदा तदा [1]गेण्हति तद[2]त्थं ॥२५०॥**

**दव्वं** गाहा । तत्र यदा द्रव्यं व्यञ्जनमधिक्रियते तदाऽऽपूरितमिति प्रभूतीकृतं स्वप्रमाणमानीतं स्वविषयव्यक्तौ समर्थीकृतमित्यर्थः । यदा व्यञ्जनमिन्द्रियं तदाऽऽपूरितमित्यावृतं भृतं व्याप्तमित्यर्थः ।

यदा द्वयोरपि सम्बन्धोऽधिक्रियते तदाऽऽपूरितमित्यङ्गाङ्गिभावमानीतमनुषक्तमित्यर्थः । एवं यदाऽऽपूरितं भवति तदानीं तदर्थं गृह्णाति । तेषां व्यञ्जनानामर्थः तदर्थः शब्दादिरित्यर्थः । तद्ग्रहणमर्थावग्रहो भवति ॥२५०॥

**सामण्णमणिद्देसं सरूवणामातिकप्पणारहितं ।**
**ज[3]दि एवं जं तेणं गहिते सद्दे त्ति तं[4] किध णु ? ॥२५१॥**

**सामण्ण०** गाहा । तं च किंप्रकारमर्थं गृह्णाति ? सामान्यमनिर्देश्यं स्वरूप-नाम-जाति-द्रव्य-गुण-क्रियाविकल्पविमुखमनाख्येयमित्यर्थः । आह—यद्येवं तेन यत्सूत्रेऽभिहितं—"तेण सद्देत्ति ओग्गहिते ण पुण जाणति के वेस सद्दे" [नन्दी ५८] [त्ति] । तत्कथमिति ? ॥ २५१॥ उच्यते—

**स[5]द्दे त्ति भणति वत्ता तम्मत्तं वा ण सद्दबुद्धीए ।**
**जति होज्ज[6] सद्दबुद्धी तोऽवाओ चेव सो[7] होज्जा[8] ॥२५२॥**

**सद्दे त्ति** गाहा । इह 'तेन शब्दोवगृहीतः' इति वक्ताऽभिधत्ते सूत्रकार इत्यर्थः । इतिकरणनिर्देशाद्वा सर्वविशेषविमुखं शब्दमात्रमुक्तं भवति । न तु शब्दबुध्येति । कस्माद् ? एकसमयत्वादर्थावग्रहस्या[नेक]समयत्वाच्चार्थपरिच्छेदस्य । यदि वा 'शब्दोऽयम्' इति बुद्धिः स्यादवाय एव स्याद्रूपादिविशेषव्यवसायात् ॥२५२॥

**जति सद्दबुद्धिमेत्तयमवग्गहो तव्विसेसणमवायो ।**
**णणु सद्दो णा[9]सद्दो ण य रूवादी[10] विसेसोऽयं ॥२५३॥**

**जति** गाहा । यदि वा 'शब्दोऽयम्' इत्येषा बुद्धिरवग्रहः, तद्विशेषणम् 'इत्थं प्रकारोऽयम्' इत्यवायः । ननु शब्दोऽयं नाऽशब्दोयं न रूपादीनामन्यतम इति विशेषादयमेवापायः ॥२५३॥

---

१ गिण्हइ को हे । २ तमत्थं त को हे । ३ चो० जदि जे । ४ कध त । ५ आ० सद्दे जे । ६ होइ को हे । ७ सा त । ८ होज्ज जे । ९ णाम सद्दो त । १० रूवाइ हे ।

[1]थोवमितं णावायो संखायिविसेसणं अवायो त्ति ।
तब्भेतावेक्खातो[2] णणु थोवमितं पि णावायो ॥२५४॥

**थोव०** गाहा । स्यान्मतिरिति स्तोकमिदं शब्दोऽयमित्यतो नावायः । किं तर्हि ? शाङ्खः शार्ङ्गोऽवायमित्यादि विज्ञानमवाय इति । ननु तदेतदानन्त्यापेक्षया शङ्खशब्दादिविशेषविज्ञानमप्यतिस्तोकमिति कृत्वा नावाय इत्यवायाऽभावप्रसङ्गः ॥२५४॥

इय सुबहुणा वि कालेण सव्वभेतावधारणमसज्झं ।[3]
जत्थ[4] हवेज्जावायो सव्वो च्चिय उग्गहो णाम ॥२५५॥

इय गाहा । यस्मादेवं सर्वायुषापि वस्तुतः सर्वभेदावधारणमशक्यं यत्रावायव्यपदेशः स्यात् । अतोऽवायस्याऽभावात् सर्व एवायमवग्रह इति प्राप्नोति ॥२५५॥

[१८-द्वि]किं सद्दो किमसद्दो त्तऽणीहिते सद्द एव किध जुत्तं ।
अध पुव्वमीहितूणं सद्दे[5] त्ति मतं तई पुव्वं ॥२५६॥
किं तं पुव्वं गहितं जमीहतो[6] सद्द एव विण्णाणं ।
अध पुव्वं सामण्णं जमीहमाणस्स सद्दो त्ति ॥२५७॥

**किं सद्दो** गाहा । [**किं तं** गाहा ] किमयं शब्दोऽशब्द इत्यनीहितेऽन्वयव्यतिरेकविमुखस्य कथं शब्द एवेति विशेषविज्ञानं युक्तम् । अथ पूर्वं सामान्यमात्रं गृहीतम्, यदीहमानस्य विशेषविज्ञानं तत् शब्द इति ॥२५६–२५७॥

अत्थोग्गहतो पुव्वं होतव्वं तस्स गहणकालेणं ।
पुव्वं च तस्स वंजणकालो सो अत्थपरिसुण्णो ॥२५८॥

**अत्थोग्गह०** गाहा । ततोऽर्थावग्रहात्पूर्वं तस्य ग्रहणकालेन भवितव्यम् । अर्थावग्रहाच्च पूर्वो व्यञ्जनावग्रहः । स चार्थोपलब्धिशून्य इति न तत्रापि सामान्यग्रहणमस्ति । पारिशेष्यादर्थावग्रहसमय एव सामान्यग्रहणम् । अतोऽन्वयव्यतिरेकविवेचनमीहा । ततो विशेषज्ञानमवायः–शब्द एवेति ॥२५८॥

जइ[7] सद्दो त्ति ण गहितं ण तु जाणति जं क एस सद्दो त्ति ।
तमयुत्तं सामण्णे गहिते मग्गिज्जति विसेसो ॥२५९॥

**जइ** गाहा । आह—यद्यर्थावग्रहसमये शब्द एवेति नावगृहीतमतो यत्सूत्रेऽभिहितं "तेणं सद्दे त्ति उग्गहिए ण उण जाणइ के वेस सद्दे" त्ति तदयुक्तं ।

१ चो० थो° जे । थेव° त । २ °क्खाए त को हे । ३ सज्जं जे । ४ °जम्मि हवेज्ज अवाओ हे त । तम्मि हवेज्ज अवाओ को । ५ सद्दो त्ति को हे त । ६ °हते जे । °हओ को हे त । ७ चो० जइ जे ।

कुतो ? यस्माच्छब्दसामान्येऽवगृहीते सति बुद्ध्या तद्विशेषो मृग्यते । न चेत्, सूत्रमनर्थकम्—यन्न तु जानीते न(क) एष शब्द इति ॥२५९॥ उच्यते—

**सव्वत्थ देसयंतो सद्दो सद्दो त्ति भासओ भणति ।**
**इयरा ण समयमेत्ते सद्दो त्ति विसेसणं जुत्तं ॥२६०॥**

**सव्वत्थ** गाहा । इह ननूक्तं सर्वत्र देशेयत(देशयन्) सूत्रकारः शब्द इति ब्रूते । अन्यथा न समयमात्रेण शब्द इति विशेषविज्ञानमस्ति । स व्यवहारावग्रहाभिप्रायोऽवायमिति वक्ष्यामः ॥२६०॥

**अधव सुते च्चिय भणितं जध कोइ सुणेज्ज सद्दमव्वत्तं ।**
**अव्वत्तमणिद्देसं सामण्णं कप्पणारहितं ॥२६१॥**

**अधव** गाहा । अथवा सूत्र एवापदिष्टम् "से जहाणामए केइ अव्वत्तं सद्दं सुणेज्जा"[नन्दी५८]त्ति । तच्च(त्र) [अव्यक्तमिति] किमुक्तं भवति ? अव्यक्तमनिर्देश्यं सामान्यं विकल्पनारहितमित्यर्थः । अवग्रहस्याऽनाकारोपयोगान्तर्भावाद्, अनाकारोपयोगस्य चाव्यक्तविषयत्वात् सामान्यमात्रविषयत्वादित्यर्थः ॥२६१॥

**अधव मती पुव्वं चिय सो गहितो वंजणोग्गहे तेणं ।**
**जं वंजणोग्गहम्मि वि भणितं विण्णाणमव्वत्तं ॥२६२॥**

**अधव** गाहा । अथ मतिः—व्यञ्जनावग्रह एवाव्यक्तशब्दग्रहणमस्याभूत् । यस्माद्व्यञ्जनावग्रहेऽपि हि भवद्भिरव्यक्तं विषयविज्ञानमुक्तमिति ॥२६२॥

**अत्थि तयं अव्वत्तं ण उ तं गेण्हति सयं पि सो भणितं ।**
**ण य अग्गहितम्मि जुज्जति सद्दो त्ति विसेसणं बुद्धी ॥२६३॥**

**अत्थि** गाहा । उच्यते—अस्ति तदव्यक्तमुक्तं किन्तु तदतिसौक्ष्म्यात् स्वयमपि [न] गृह्णाति सुप्तमत्तमूर्च्छितोपयोगवदित्युक्तम् । न चागृहीते शब्द इति विशेषविज्ञानं युज्यत इति ॥२६३॥

**अत्थो त्ति विसयगहणं जति [१९-प्र०] तम्मि वि सो ण वंजणं णाम ।**
**अत्थोग्गहो च्चिय तओ अविसेसो संकरो वा वि ॥२६४॥**

**अत्थो** गाहा । इहार्थशब्देन विषयो गृह्यते । यदि च व्यञ्जनावग्रहेऽपि स विषयोऽस्ति, न नामासौ व्यञ्जनावग्रहः, अर्थावग्रह एवासौ । अविशेषो वार्थव्यञ्जनावग्रहयोः सङ्करोति ॥२६४॥

---

१ आ० सव्व° जे । २ इयरा त । ३ ण य जे । ४ गिण्हइ को हे । ५ न उ को हे । ६ अग्ग° को हे । ७ °यग्ग° हे ।

**जेणत्थोग्गहकाले गहणेहावायसंभवो णत्थि ।**
**तो णत्थि सद्दबुद्धी अधत्थि णावग्गहो णाम ॥२६५॥**

**जेण०** गाहा। इह ग्रहणेहावायत्रय(या)च्छब्द एवेति विज्ञानं न स्यात्[1] नान्यथा। यतश्चार्थावग्रहकाले ग्रहणेहावायसम्भवो नास्ति ततो न विशेषबुद्धिरस्ति। अथास्ति; न नामावग्रहोऽसाविति ॥२६५॥

**सामण्णतदण्णविसेसेहा[2]वज्जणपरिग्गहणतो से ।**
**अत्थोग्गहे[3]गसमओवयोगबाहल्लमावण्णं ॥२६६॥**

**सामण्ण०** गाहा। इह यच्छब्दादिविषयसामान्यम्, ये च तदन्यविशेषाः— तदित्यनेनोपात्तविषयग्रहणम्, अन्यवचनाच्छेषविषयग्रहणम्, तदन्येषां विशेषास्तदन्यविशेषास्तेषामीहा, उपात्तविषयविशेषाणामादानं परिग्रहणं, शेषविषयविशेषाणां वर्जनं त्यागः, तदस्य गृहीतुरर्थावग्रहैकसमयमात्रे उपयोगबाहुल्यमापद्यते। अनिष्टं चैतत् ॥२६६॥

**अण्णे सामण्णग्गहणमाहु बालस्स जातमेत्तस्स ।**
**समयम्मि चेव [4]परियितविसयस्स विसेसविण्णाणं ॥२६७॥**

**अण्णे** गाहा। अन्ये पुनराहुः— यदेतत्सर्वविशेषणविमुखमालोचनं सामान्यं नामैतज्जातमात्रस्य शिशोरपूर्वविषयसम्बन्धं(द्धम्), परिचितविषयस्य तु पुंसः समयमात्रमपि विशेषविज्ञानमिति ॥२६७॥ तच्च न, यस्मात्—

**तदवत्थमेव तं पुव्वदोसतो तम्मि चेव वा समए ।**
**संख[5]मधुरातिसुबहुअविसेसगहणं प[6]सज्जेज्ज[7] ॥२६८॥**

**तदव०** गाहा। तदवस्थमेवैतत्, पूर्वदोषापरिहारात्। तस्मिन्नेव चार्थावग्रहसमये शाङ्खः शाङ्गोऽवायं स्निग्धो मधुरो वेत्यादिसुबहुविशेषग्रहणप्रसङ्गः, सर्वविशेषणग्रहणप्रसङ्गो वा स्याद्। अनिष्टं चैतत् ॥२६८॥

**अत्थोग्गहो ण समयं अधवा समओवयोगबाहुल्लं ।**
**सव्वविसेसग्गहणं सव्वमतीऽवग्गहो ग[8]ज्झो ॥२६९॥**
**ए[9]क्को व्वाऽवायो च्चिय अहवा सो [10]अगहितेहिते पत्तो ।**
**उक्कमवतिक्कमा वा पत्ता धुवमोग्गहादीणं ॥२७०॥**

---

१ तस्यान्नान्यथा–इति प्रतौ। २ °सेस ईहवज्ज° जे। ३ °हेग्गसमयोगबा° जे। °हेगसमओवओगबाहु° को हे। ४ परिचय° को हे त। ५ संक्ख जे। ६ पव° जे। ७ °ज्जा को हे। ८ मई वोगहो गिज्झो को हे। ९ एगो को हे। १० सोऽगहियणोहिए को हे त।

**सामण्णं च विसेसो सो वा सामण्णमुभयमुभयं वा।**
**ण य जुत्तं सव्वमितं सामण्णालंबणं मोत्तुं ॥२७१॥**

**अत्थो०** गाहा। **एक्को** गाहा। **सामण्णं** गाहा। इह यदि समयमात्र एव हि विशेषविज्ञानम्, अतो यदपदिश्यते—अर्थावग्रहः समयमित्येतद्विहन्यते, असंख्येयसमयत्वात् विशेषग्रहणस्य। अथार्थावग्रहसमयविशेषविज्ञानमतः समयोपयोगबाहुल्यमुक्तं प्राक्। तस्मिन्नेव वा सर्वविशेषग्रहणप्रसङ्गः। अवग्रहमात्राच्च विशेषपरिच्छेदादीहादीनामनुत्थानम्, अतः सर्वमतेरवग्रहमात्रता—सर्वमतेरर्थावग्रह इति संज्ञा। अथवा यदि प्राक् समय एव हि [1]विशेषविज्ञानमस्ति—विशेषाध्यवसायमात्रमेवधार्यते, अवाय एवैकमतिः, अवग्रहादिकल्पनमनर्थकम्। यच्चापदिश्यते—अन्तर्मुहूर्त्तमवायस्तदसत्। अथवा प्रथमसमय एवावायसद्भावादवग्रहेहानुत्थानादनवगृहीतेऽनीहिते च स प्रसक्तः। यदि च प्रागवायस्तस्मादुत्क्रमोऽपि स्यात्—धारणावायेहावग्रहक्रम इत्यर्थः। तथा हि व्यतिक्रमोऽपि स्यात्—अवग्रहमतिक्रम्येहा तामतिक्रम्य [अपायः, तमतिक्रम्य] धारणेति। यदि च यत्प्रथमसमये गृह्यते स [2]विशेषः सामान्यं नाम विशेषः, अर्थापत्त्या च विशेषः सामान्यमिति विपर्ययः। यदि च तत्र विशेषविज्ञानम्, स चावग्रहः। ईषद्ग्रहणं चावग्रहः सामान्यमात्रग्रहणमित्यर्थः। ततो विशेषो नाम सामान्यम्, अर्थापत्त्या च सामान्यं विशेष इति विपर्ययः। उभयं चोभयवस्तु, उभयसद्भावात्, एकैकं सामान्यं विशेषश्चेत्येकमेकं द्वयम्। अनिष्टं चैतत्सर्वं यदि न सामान्यमात्रमालम्ब्यतेऽर्थावग्रहः समय इति ॥२६९–२७०–२७१॥

**[3]केयि इहालोयणपुव्वमोग्गहं बेन्ति तत्थ साम[१९–द्वि०]ण्णं।**
**गहितमधत्थावग्गहकाले सद्दो[4] त्ति णिच्छिण्णं ॥२७२॥**

**केयि** गाहा। इह केचिदर्थावग्रहात्पूर्वमालोचनं नामेच्छन्ति। ततः किल सामान्यमात्रगृहीतमर्थावग्रहकाले विशेषेणावच्छिद्यत इति ॥२७२॥ तच्च न, यस्मात्—

**तं वंजणोग्गहातो पुव्वं पच्छा स एव वा होज्जं[5]।**
**पुव्वं तदत्थवंजणसंबंधाभावतो णत्थि ॥२७३॥**

**तं** गाहा। तदालोचनं व्यञ्जनावग्रहात्पूर्वं पश्चाद्वा स एव वा व्यञ्जनावग्रहो भवेत्? सर्वथा चायुक्तम्। कथं? पूर्वं तावदर्थव्यञ्जनसम्बन्धाभावान्नास्ति, अना(आ)लोचनीयस्याभावादित्यर्थः ॥२७३॥

---

१ °अं वाधाय इत्यतो वा एवै°–इति प्रतौ। २ सविशेषसामान्येत्तमे विशेषः–इति प्रतौ। ३ कोइ दिहा° को हे त। ४ सद्देत्ति को हे। ५ °ज्जा को हे।

**अत्थोग्गहो वि जं वंजणोग्गहस्सेव चेरिमसमयम्मि ।**
**पच्छा वि तो ण जुत्तं परिसेसं वंजणं होज्जं ॥२७४॥**

**अत्थो०** गाहा । यतश्च व्यञ्जनावग्रहस्यैव चरमसमयेऽर्थावग्रहोऽपदिश्यते तस्मात्पश्चादपि न व्यञ्जनावग्रहादालोचनमस्ति । पारिशेष्याद् व्यञ्जनावग्रह एवालोचनं भवेत्, तदप्ययुक्तम्, यस्मात्— ॥२७४॥

**तं च समालोयणमत्थदरिसणं जति ण वंजणं तो तं ।**
**अध वंजणस्स तो कधमालोअणमत्थसुण्णस्स ॥२७५॥**

**तं च** गाहा । तच्चालोचनमर्थस्य व्यञ्जनस्य वा भवेत् ? यद्यर्थस्य, न व्यञ्जनावग्रहः खल्वालोचनम्, अर्थाशून्यत्वात् । अथ व्यञ्जनस्य दर्शनमालोचनम्, तदप्ययुक्तम्, अर्थशून्यत्वादग्रहणवत् । अथवा न व्यञ्जनस्यालोचनमनध्यवसितत्वा-दग्रहणवत् । एवं तावन्न व्यञ्जनस्यालोचनमञ्जसा सम्भवति । न च व्यञ्जनस्यादावन्ते वेति ॥२७५॥

**आलोअणं ति णामं हवेज्ज तं वंजणोग्गहस्सेव ।**
**होज्ज कधं सामण्णगेहणं तत्थऽत्थसुण्णम्मि ॥२७६॥**

**आलोअ०** गाहा । पारिशेष्यादालोचनमिति व्यञ्जनावग्रहस्यैव नाम स्यात् । तदस्तु । को दोषः ? न हि नः संज्ञामात्रे विप्रतिपत्तिः । कथं हि तत्र सामान्य-ग्रहणमर्थशून्ये भवेत् ? ॥२७६॥

**गहितं व होतु तहियं सामण्णं कधमणीहिते तम्मि ।**
**अत्थोवग्गहकाले विसेसणं एस सद्दो त्ति ॥२७७॥**

**गहितं** गाहा । अथवा परानुमतावग्रहमास्थायोच्यते—अस्तु तत्र सामान्य-ग्रहणम् । कथं हि तत्राप्यनीहिते सत्यर्थावग्रहकाले शब्दोऽयमित्यादि विशेषविज्ञानं भवेत् ? ॥२७७॥

**अत्थावग्गहसमए वीसुमसंखेज्जसमइया दो वि ।**
**तक्कावगमसभावा ईहाऽवाया कधं जुत्ता ? ॥२७८॥**

**अत्था०** गाहा । नेहामन्तरेणावायं च विशेषज्ञानमस्ति । तौ च पृथक्पृथग-संख्येयसमयावागमात्, तर्कावगमस्वभावत्वाच्चार्थावग्रहैकसमये कथं स्याताम्, अतो न किञ्चिदेतदिति ॥२७८॥

---

१ चरम° को हे त । २ होज्जा को हे । ३ °ण्णं गह° जे । ४ अत्थोव° त । ५ °हकाले त ।

**खिप्पेतरातिभेतो जमोग्गहो तो विसेसविण्णाणं ।**
**जुज्जति विगप्पवसतो सद्दो त्ति सुतम्मि जं केयि[1] ॥२७९॥**

**खिप्पे०** गाहा । इह किल यतः क्षिप्रमवगृह्णाति चिरेणावगृह्णातीति चोच्यते । अतो नावश्यमवग्रहः समयमात्रं तन्मात्रतायां चाक्षिप्रचिरविशेषणमनर्थकम् । तथा बहु-बहुविधविशेषणम् । इह सर्वस्य श्रोतुरविशेषेण प्राप्तिविषयस्थस्य शङ्खभेर्यादिशब्द-द्रव्याभिसरणे सति बहुग्रहणात् ज्ञायते शङ्खभेर्यादिविशेषरूपेणाग्रहणमवग्रहः । बहुविधा-बहुविधविशेषणेऽपि स्निग्धगम्भीरादिविशेषग्रहणम् । अतोऽनेकविकल्पवशादवग्रहस्य क्वचित् सामान्यग्रहणं क्वचिद्विशेषग्रहणमित्युभयमविरुद्धम् । अतश्च यत्सूत्रेऽपदिष्टं 'तेणं सद्देत्ति उग्गहिते' तदपि विशेषविज्ञानं युज्यते एवेति [2]केचिन्मन्यन्ते ॥२७९॥

**स किमोग्गहो त्ति भण्णति गहणेहावायलक्खणत्ते त्ति ।**
**अध उवयारो कीरइ तो सुण जध जुज्जते सो वि ॥२८०॥**

**स कि०** गाहा । उच्यते—अस्ति तद्विशेषविज्ञानम्, न त्वसौ निश्चयेनाव-ग्रहो युक्तः, अवग्रहोहावायलक्षणत्वात् । अथोपचारोऽङ्गीक्रियते असावप्येवं न घटते यत्प्रथमसमये एव हि विशेषविज्ञानमिति । कथं तर्हि घटत इति ? शृणु, ब्रूमः— ॥२८०॥

**सामण्ण[२०-प्र०]मेत्तगहणं णेच्छयियो समयमोग्गहोप ढमो ।**
**तत्तोणंतरमीहियवत्थुविसेसस्स जोऽवायो ॥२८१॥**
**सो पुण[3] ईहावा[4]यावेक्खातोऽवग्गहो त्ति उवयरितो ।**
**ए[5]स्सविसेसावेक्खं सामण्णं गेण्हते जेण ॥२८२॥**
**तत्तोणंतरमीहा तत्तोऽवायो य तव्विसेसस्स ।**
**इय सामण्णविसेसावेक्खा जावंतिमो भेदो ॥२८३॥**

**सामण्ण०** गाहा । **सो पुण०** गाहा । **तत्तो०** गाहा । इह यद्वस्तुसा-मान्यमात्रग्रहणमनिर्देश्यमयमर्थावग्रहो नैश्चयिकः समयमात्रकालः प्रथमः । ततः 'किमि-दम्' इत्यनन्तरमीहितवस्तुविशेषस्य शब्दविशेषे विज्ञानरूपो योऽवायः स एव हि [6]पुनर्भाविनीमीहामवा[7]यं चापेक्ष्याऽवग्रह इत्युपचरितः सूत्रे, यस्मादेष्यविशेषापेक्षया सामान्यमालम्बते । सामान्यार्थावग्रहणं चावग्रह इति । ततो भूयः किमयं शाङ्खः शार्ङ्गो वेत्यादि विशेषाकाङ्क्षयेहानन्तरमवायः शा[8]ङ्खः शार्ङ्गो वेत्यादि । स एव भूय-स्तद्विशे[9]षाकाङ्क्षातो भाविनीमीहामवायमेष्यद्विशेषां[10]श्चापेक्ष्य सामान्यालम्बनादवग्रह इत्यु-पचर्यते । इत्येवं सर्वत्र सामान्यविशेषापेक्षया यावदन्त्यो भेदस्तदाकाङ्क्षाविनिवृत्तिर्वेति । ॥२८१-२८३॥

---

१ केइ हे । केई को । २ किञ्चि इति प्रतौ । ३ पुणरीहा को हे त । ४ °वायोवे° जे । ५ एस वि° जे । ६ °नर्भ° इति प्रतौ । ७ °मवरञ्चा° इति प्रतौ । ८ °ङ्क्षा° इति प्रतौ । ९ °शेषः काङ्क्षा चतो भा° इति प्रतौ । १० °श्चावे° इति प्रतौ ।

**सव्वत्थेहावाया णिच्छयतो मोत्तुमातिसामण्णं ।**
**संववहारत्थं पुण सव्वत्थाऽवग्गहोऽवायो ॥२८४॥**

**सव्व०** गाहा । अत्र पुनर्निश्चयेनाद्यसामान्यालम्बनादीहा ततोऽवायः पुनरीहा पुनरवाय इत्येवं सर्वत्र । संव्यवहारार्थं पुनः सर्वत्र योऽवायः स एव भाविनो विशेषानपेक्ष्यावग्रह इति यावत्तरतमयोगोऽनुधावतीति ॥२८४॥

**तरतमयोगाभावेऽवायो[1] च्चिय धारणा तदंतम्मि ।**
**सव्वत्थ वासणा पुण भणिता कालंतरे [2]सती वि ॥२८५॥**

**तर०** गाहा । तरतमयोगाभावेऽवाय एव, नावग्रहः आकाङ्क्षाविनिवृत्तावित्यर्थः, एष्यद्विशेषानकाङ्क्षत्वात् तदवायपर्यन्ते धारणा तदर्थाप्रच्यवनरूपा नान्यत्र । सर्वत्र तु वासनाऽनुस्मृतिश्चाविरुद्धा ॥२८५॥

**सद्दो त्ति य[3] सुतभणितं विकप्पतो जति विसेसविण्णाणं ।**
**[4]घेप्पेज्ज तं पि जुज्जति संववहारोग्गहे सव्वं ॥२८६॥**

**सद्दो त्ति** गाहा । इह यत्सूत्रेऽभिहितं 'तेणं सद्दे त्ति उग्गहित' [त्ति] एतदपि हि विकल्पवशात् । इह यदि विशेषविज्ञानमागृह्येत तदपि हि संव्यवहारावग्रहे सति युज्यते, तस्यान्तर्मुहूर्त्तकालत्वादीहानन्तरत्वाच्च ॥२८६॥

**खिप्पेतरातिभेतो पुव्वोतितदोसजालपरिहारो ।**
**जुज्जति संताणेण य सामण्णविसेसववहारो ॥२८७॥**

**खिप्पे०** गाहा । यच्चावग्रहस्य क्षिप्रेतरादिभेदोपसंख्यानमेतच्च संव्यवहारावग्रहे सति भवति, एकसमयोपयोगबाहुल्यादि च यद्दोषजालमुदितं तच्च परिहृतं भवति । सन्तानाच्च सामान्यविशेषव्यवहारो युज्यते । किमुक्तं भवति ? इदं तदिति चाध्यवसितोऽर्थः सर्वसामान्यापेक्षया विशेषः, स एव ह्याकाङ्क्षितविशेषापेक्षया सामान्यमित्येवं यावदन्त्यो भेदोऽनाकाङ्क्षता चेत्युक्तम् । अन्यथा हि पूर्वाऽपायाध्यवसितविशेषमात्र एव निवृत्तिः स्यान्नोत्तरविशेषोपलब्धिस्ततश्च संव्यवहाराभावः । कथम् ? यस्मादवग्रहाभावादीहानुत्थानमनीहिते च न विशेषव्यवसाय इति । ईहासद्भावेऽपि चावग्रहपूर्वकत्वमेषितव्यम्, अवग्रहस्य सामान्यग्राहित्वादीहायाश्च तद्विशेषविचारव्यापारात् । संव्यवहारावग्रहे सत्येतत्सर्वं घटत इत्युक्तोऽवग्रहः ॥२८७॥

---

१ °वाउच्चि° हे को २ °तरे वि सई को हे। °तरे सती य त। ३ व हे त। सद्दो ति सुए भ° को। ४ गिण्हिज्ज को। घेप्पिज्जं त। ५ °र्वा पर्याव्य° इति प्रतौ।

**इय सामण्णगहणाणंतरमीहा सदत्थवीमंसा[1] ।**
**किमितं सद्दोऽसद्दो[2] को होज्ज व संखसंगाणं ॥२८८॥**

**इय** गाहा । इत्येवं सामान्यार्थावग्रहणानन्तरमीहा सदर्थविशेषमीमांसा किमिदमिति शब्दोऽशब्द इति, शब्दत्वे वा किं शाङ्खः शार्ङ्ग इत्यादि ॥२८८॥

**महुरातिगुणत्तणतो सं[२०-द्वि०]खस्सेवेति[3] जण्ण संगस्स ।**
**विण्णाणं सोवायो अणुगमवतिरेगभावातो ॥२८९॥**

**महुरा०** गाहा । मधुरस्निग्धादिगुणत्वाच्छङ्खस्यैवायं न शृङ्गस्येत्यादि यद्विशेषविज्ञानं सोऽवायः स्वविशेषाणामनुगमादन्यविशेषव्यतिरेकाद्वेति ॥२८९॥

**तदणंतरं तदत्थाविच्चवणं जो य वासणाजोगो ।**
**कालंतरे य जं[4] पुणरणुसरणं धारणा सा तु ॥२९०॥**

**तद०** गाहा । अवायानन्तरं यत्तदर्थाविच्यवनमनाश इत्यर्थः, यश्च वासनायोगस्तदावरणक्षयोपशम इत्यर्थः, कालान्तरे च यत्तस्यैवार्थस्योपलब्धस्यानुपलब्धस्य वा पुनरनुस्मरणं सा धारणेति ॥२९०॥

**सेसेसु वि [5]रूवातिसु विसएसुं होन्ति [6]सूवलक्खाइं ।**
**पायं पच्चासण्णत्तणेणमीहातिवत्थूणि ॥२९१॥**

**थाणुपुरिसातिकुट्टुप्पलातिसंभितकरिल्लमंसादी[7] ।**
**सप्पुप्पलणालादि व समाणरूवादिविसयाइं ॥२९२॥**

**सेसे०** गाहा । **थाणु०** गाहा । एवं रूपादिष्वपि विषयेषु सूपलक्ष्याणीहादिवस्तूनि प्रायः प्रत्यासन्नत्वात्स्थाणुपुरुषादीनां सादृश्यादित्यर्थः ॥२९१–२९२॥

**एवं चिय सिमिणादिसु मणसो सद्दादियेसु विसयेसु ।**
**होन्तिन्दियवावाराऽभावे वि[8] अवग्गहादीया ॥२९३॥**

**एवं** गाहा । एवं मनसोऽपि हि स्वप्ने शब्दादिविषयेषु अवग्रहादयोऽवसेयाः, अन्यत्र चेन्द्रियव्यापाराभावेऽपि मन्यमानस्येति ॥२९३॥

**उक्कमतोऽतिक्कमतो [10]वेगाभावे वि वा ण वत्थुस्स ।**
**जं सब्भावाधिगमो तो सव्वे णियमितकमा य ॥२९४॥**

१ °मीमंसा जे । २ °द्दो व को को । ३ °वत्ति जं ण को हे त । ४ जो त । ५ वि सरू° त । ६ रूव हे को । ७ °सादि जे । साई को हे त । ८ सुमि° को हे त । ९ भावे वियवग्ग° त । भावम्मि अवग्ग जे । १० एगा° त को हे ।

**उक्क०** गाहा। इह यस्मादवग्रहादीनामुत्क्रमे वा तदेकवैकल्येऽपि वा न वस्तुनः सद्भावाधिगमोऽस्ति। अतः सर्वेऽपदिश्यन्तेऽवग्रहादयो नियतक्रमाश्चेति ॥२९४॥

**ईहिज्जति णागहितं णज्जइ णाणीहियं ण याऽणातं।**
**धारिज्जति जं वत्थुं तेण कमोऽवग्गहादीयो[1] ॥२९५॥**

**ईहि०** गाहा। यस्मान्नागृहीतमीह्यते तेनेहादा[व]वग्रहः, यतश्च नानीहितमवगम्यते तेनावायादावीहा, यतश्च नाज्ञातं धार्यते वस्त्वतो धारणादाववाय इत्येवमवश्यमवग्रहादिक एषां क्रमोऽनुमन्तव्य इति ॥२९५॥

**एत्तो च्चिय ते सव्वे हवंति भिण्णा य णेव[2] समकालं।**
**ण वतिक्कमो य तेसिं ण[3] यऽण्णधा णेयसब्भावो ॥२९६॥**

**एत्तो** गाहा। नागृहीतमीह्यत इत्यादिष्टम्, अत एव हेतोरवग्रहादयः सर्वे मतिज्ञानप्रकाराः प्रत्यवसेयाः, नैकविकलापि हि मतिर्भवतीति। अत एव ते भिन्नाः परस्परतो न संकीर्ण्णाः वस्तुपर्यायग्रहणादित्यर्थः। अत एव च समकालमप्येते सम्भवन्ति[4] ग्रहणादिकालभेदादुत्तरोत्तरनिमित्तत्वाच्चेत्यर्थः। उत्क्रमव्यतिक्रमावप्यत एव न स्तस्तेषां ग्रहणादिक्रमनियमादेवेत्यर्थः। न च ज्ञेयसद्भावोऽन्यथा—अन्यथेत्येकवैकल्येऽप्यभेदेऽपि वा तत्कालैकत्वे तदुत्क्रमव्यतिक्रमयोरपि चेति ॥२९६॥

**[२१-प्र०] अब्भत्थे[5]ऽवाओ च्चिय कत्थयि[6] लक्खिज्जं[7]ते इमो पुरिसो।**
**अण्णत्थ धा[8]रण च्चिय पुरोवलद्धे इमं तं ति ॥२९७॥**

**अब्भत्थे** गाहा। आह—क्वचित्कस्यचित्स्वभ्यस्ते विषयेऽवग्रहेहाद्वयमतिक्रम्याऽप्यवाय [उ]पलक्ष्यते। यथायं पुरुष इति। अन्यत्र पूर्वोपलब्धे धारणैव यथेदं तदिति यदस्माभिः पूर्वमुपलब्धमिति ॥२९७॥ उच्यते—

**उप्पलदलसतवेधे[9]व्व दुव्विभावत्तणेण पडिभाति।**
**समयं व सुक्कसक्कुलिदसणे विसयाणमुवलद्धी ॥२९८॥**

**उप्पल** गाहा। इहोत्पलदलशते[10]ऽयघनकालाविभागवन्न तत्रावग्रहादिकालविभागोऽपि [वि]भाव्यतेऽतिसौक्ष्म्यात्। यथा वेहातिदीर्घशाष्कुलीदशने युगपदेव सर्वेन्द्रियविषयोपल[11]ब्धिराभाति। न चासावस्ति एकत्वान्मनसोऽणुत्वाच्च। यतश्च मनसाऽनधिष्ठितमिन्द्रियं स्वविषये न[12] प्रवर्त्तते, विमनस्कस्याग्रहणात् ॥२९८॥

१ °हाईओ को। °हाई उ हे। २ णेय त। ३ अन° को। न अन्न° हे। ४ °वति—इति प्रतौ। ५ चो० अब्भ० जे। ६ कत्थइ को हे। ७ °ज्जई को हे त। ८ धर° जे। ९ वेहव्व को। १० °तव्यवन—इति प्रतौ। ११ दि च स° —इति प्रतौ। १२ °ये तु प्र° —इति प्रतौ।

सोतिन्दियादिभेतेण छव्विधाऽवग्गहादयोऽभिहिता ।
[1]ते होन्ति चतुव्वीसं चतुव्विधं वंजणोग्गहणं ॥२९९॥
अट्ठावीसतिभेयं एतं सुतणिस्सितं समासेणं ।
केयि तुं[2] वजणोग्गहवज्जे च्छोढूणमेतम्मि ॥३००॥
अस्सुतणिस्सितमेवं[3] अट्ठावीसतिविधं ति भासंति ।
जमवग्गहो दुभेतोऽवग्गहसामण्णतो गहितो ॥३०१॥

**सोति॰** गाहा । **अट्ठा॰** गाहा । **अस्सुत॰** गाहा । एवमेते श्रोत्रेन्द्रियादिभिर्मनःषष्ठैरवग्रहादयः षड्विधाः समेताश्चतुर्विंशतिच(श्च)तुर्द्धा च व्यञ्जनावग्रहः—एतदष्टाविंशतिभेदं श्रुतनिश्रितमाभिनिबोधिकमुक्तम् ।

केचित् त्वेतस्मिन्नेव व्यञ्जनावग्रहवर्जे अश्रुतनिश्रितमौत्पत्तिक्यादि प्रक्षिप्याष्टाविंशतिभेदतां कल्पयन्ति, यतः किल द्विविधोऽप्यवग्रहोऽवग्रहमात्रसामान्यादेकः ॥२९९–३००–३०१॥ एतच्च न । कुतः ?

चतुवतिरित्ताभावा जम्हा ण तमोग्गहादितो भिण्णं[4] ।
तेणोग्गहादिसामण्णतो तयं तग्गतं चेव ॥३०२॥

**चतु॰** गाहा । इह यस्मान्नावग्रहादिचतुष्टयव्यतिरिक्ता मतिरस्ति तस्मान्नाश्रुतनिश्रितमवग्रहादिभ्यो भिन्नमतश्च तदवग्रहादि सामान्येन तदन्तर्भावादागृहीतमेवेति ॥३०२॥ स्यात्—कथमौत्पत्तिक्यादेरवग्रहादिष्वन्तर्भाव इति ? उच्यते—

किध पडिकुक्कुडहीणो[5] जुज्झे बिम्बेणऽवग्गहो ईहा ।
किं सुसिलिट्ठमवायो दप्पणसंकंतबिम्बन्ति ॥३०३॥

**किध** गाहा । यथा कथमयं कुर्कुटः प्रतिकुक्कुटहीनो युध्यते ? बिम्बेनेति बिम्बसामान्यमात्रग्रहणमवग्रहः । किं पुनस्तत्सुश्लिष्टं भवेत् इति बिम्बविशेषान्वेषणमीहा । दर्पणसंक्रान्तं बिम्बमिति बिम्बविशेषावच्छेदोऽवायः ॥३०३॥ आह—यद्वाऽश्रुतनिश्रितमवग्रहादिसामान्येनागृहीतम् । अतः किं ? तदष्टाविंशतिभेदान्तर्भूतमेव । नेत्युच्यते ।

जधं ओग्गहातिसामण्णतो वि सोतिन्दियातिणा भेतो ।
तह [6]ओग्गहातिसामण्णतो वि[२१-द्वि॰] तमणिंस्सिया[7] भिण्णं ॥३०४॥

**जध** गाहा । यथेह श्रुत[निश्रित]स्यावग्रहादिसामान्ये सति श्रोत्रेन्द्रियादिभेदाद् भेदस्तद्वदश्रुतनिश्रितस्याऽप्यवग्रहादिसामान्ये सत्यश्रुतत्वादेव भेद इति ॥३०४॥

१ तो जे । २ कोई को । केइ हे । ३ °मेतं जे । ४ भिन्नो त । ५ कुक्क° जे । ६ उग्ग° को हे । ७ °णिस्स° जे ।

अट्ठावीसतिभेदं सुतणिस्सितमेव केवलं तम्हा ।
जम्हा तम्मि समत्ते पुणरस्सुतणिस्सितं भणितं ॥३०५॥
जं बहुबहुविधखिप्पाणिस्सितणिच्छितधुवेतरविभिण्णा ।
पुणरोग्[1]गहादयो तो तं च्छत्तीसन्तिसतभेदं ॥३०६॥

**अट्ठा०** गाहा । **जं बहु०** गाहा । इह यतोऽवग्रहादयो बह्वादिभिः षड्भिः सेतरैर्द्वादशभिरेकैकशो विभिद्यन्ते ततस्तदेवाष्टाविंशतिभेदं भूयः षट्त्रिंशत्त्रिशतभेदं भवति ॥३०५–३०६॥

णाणासद्दसमूहं बहुं पिधं मुणति भिण्णजातीयं ।
बहुविधमणेगभेतं एक्केक्कं णिद्धमधुरादि[2] ॥३०७॥
खिप्प[3]मचिरेण तं चिय सरूवतो जं अणिस्सितमलिंगं ।
णिच्छि[4]तमसंसयं जं धुवमच्चंतं ण तु[5] कताइं ॥३०८॥

**णाणा०** गाहा । **खिप्प०** गाहा । तत्र शब्दे तावन्ति दर्श्यन्ते बहु अ[6]वगृह्णाति शङ्खपडहादिनानाशब्दसमूहं पृथग्भिन्नजातीयम्, बहुविधमनेकपर्यायमेकैकशः स्निग्धगम्भीरादिभेदं, क्षिप्रमचिरेण, अनिश्रितं स्वरूपत एव नान्यलिङ्गाश्रयम्, निश्चितमसंदिग्धं, ध्रुवमत्यन्तमेव न कदाचित् ॥३०७–३०८॥

एत्तो च्चिय पडिवक्खं सा[7]धेज्जा णिस्सिते विसेसो वा ।
परधम्मेहि विमिस्सं णिस्सितम[8]विमिस्सितं इतरं ॥३०९॥

**एत्तो** गाहा । एतेभ्य एव प्रतिपक्षोऽपि साध्यस्तद्यथा अबहु शब्दमात्रमेकजातीयम्, अबहुविधमेकपर्यायमेव, अक्षिप्रं चिरेण, निश्चि(श्रि)तं लिङ्गान्तरतः, अनिश्चितं संदिग्धम्, अध्रुवं कदाचिदेव । अथवा निश्रितानिश्रितयोर्विशेषोऽभिधीयते । परधर्मैर्विमिश्रं यत्[10]तन्निश्रितं विपर्यय इत्यर्थः । अव(वि)मिश्रितमनिश्रितं सद्भूतोपलब्धिरित्यर्थः । एवं सर्वत्रायोजनीयमिति ॥३०९॥

एवं बज्झब्भन्तरणिमित्तवइचित्ततो मतिबहुत्तं ।
किंचिम्मे[9]त्तविसेसेण भिज्जमाणं पुणोऽणन्तं ॥३१०॥

**एवं** गाहा । बाह्यं निमित्तमालोकविषयादि, तत्स्पष्टविमध्याऽव्यक्ताल्पमहत्त्वसन्निकर्षविप्रकर्षादिभेदाद्वैचित्र्यम्, अन्तर्निमित्तमावरणक्षयोपशमोपयोगोपकरणेन्द्रियाणि, एषा-

---

१ °णरु° को हे । २ °राई त । राइं को हे । ३ °मविचि त । ४ णिस्सि° जे । ५ ण य क° त । ६ बहुमव° इति प्रतौ । ७ साहिज्जा को हे । ८ °मविणिस्सि° को हे । ९ °चिम्म° जे । १० यद्यन्निमि° इति प्रतौ ।

मपि हि शुद्धाशुद्धविमध्यभेदाद्वैचित्र्यमेतत्तस्मान्मतिबहुत्वमुक्तम्। एतदेवोभयनिमित्तोत्कर्षा[पकर्ष]भेदाद् भूयो भिद्यमानमानन्त्यं भजत इति ॥३१०॥

**इह संसयादणंतब्भावातोऽवग्गहादओ णाणं।**
**अणुमाणमिवाह ण संसयादिसब्भावतो तीसुं ॥३११॥**

**इह सं०** गाहा। इह ज्ञानमवग्रहादयो विज्ञानमयत्वे सति संशयविपर्ययानध्यवसायाऽनन्तर्भावादनुमानवत्। आह—न, संशयादिसद्भावादवग्रहादिषु ॥३११॥ कथम्?—

**णणु संदिद्धे संसयविवज्जया संसयोऽ[२२-प्र०]ह[1] चेहा वि।**
**वच्चासो वा णिस्सितमवग्गहोऽणज्झवसितं तु ॥३१२॥**

**णणु** गाहा। ननु संदिग्धमवगृह्णातीत्यादि यत्तत्संशयः। तत्रैव च संदिहानस्य विपर्ययोऽपि[3] स्यात्। अथवा ईहादि संशय एव। अथवा यत्परधर्म्मैर्विमिश्रितमुक्तं स विपर्ययः। निश्चयावग्रहश्चानध्यवसायः ॥३१२॥

**इह सज्झमोग्गहादीणं संसयादित्तणं तध वि णाम।**
**अब्भुवगंतुं भण्णति णाणं चिय संसयादीया ॥३१३॥**

**इह** गाहा। साध्यमवग्रहादीनां संशयादित्वम्। अस्तु वा संशयादिभावमभ्युपगम्योच्यते—ज्ञानमेव हि संशयादयः। ॥३१३॥ कुतः?

**वत्थुस्स देसगमकत्तभावतो परमयं[5] पमाणं व।**
**किध वत्थुदेसविण्णाणहेतवो सुणसु[6] तं वोच्छं ॥३१४॥**

**वत्थुस्स** गाहा। वस्त्वेकदेशगमकत्वात्। इह यद्वस्तुनः खल्वेकदेशगमकं तत् ज्ञानं दृष्टं यथा परमतं प्रमाणं निर्णय इत्यर्थः कथं पुनर्वस्त्वेकदेशविज्ञानहेतवः संशयादय इत्युच्यन्ते[7]? वक्ष्यामः— ॥३१४॥

**इध वत्थुमत्थवयणादिपज्जयाणंतसत्तिसंपण्णं।**
**तस्सेगदेसविच्छेतकारिणो संसयातीया ॥३१५॥**

[इध गाहा]। इह वस्तु अर्थवचनस्वपरपर्यायानन्तकलापप्रचितरूपमुक्तम्। तस्यैकदेशविच्छेदकारिणः संशयादयोऽन्यथा तत्प्रसूतिरेव न स्यात् ॥३१५॥

१ तेसु को ह त। २ °ह वेहा जे त। ३ पि न स्यात् इतिप्रतौ। ४ °द्वित्व इति प्रतौ। ५ °मयप्पमा° को हे। ६ मुणसु को। ७ °च्यन्तोत्व° इतिप्रतौ।

[1]अधवा ण सव्वधम्मावभासया तो ण णाणमिट्ठं ते ।
णणु णिण्णयो वि तद्देसमेत्तगाहि त्ति अण्णाणं ॥३१६॥

**अधवा** गाहा । अथवा, न वस्तुनः सर्वधर्मावभासकाः संशयादयः । ततो न ज्ञानमिष्टम्, अतः निर्णयोऽपि न[2]नु वस्तुनो देशमात्रगमकत्वादज्ञानम् ॥३१६॥

[3]जति एवं तेण तुहं अण्णाणी [4]णत्थि कोइ संसारे[5] ।
[6]मिच्छद्दिट्ठीणं ते अण्णाणं णाणमितरेसिं ॥३१७॥

[7]संतसतविसेसणातो भवहेतु जतिच्छयोवलंभातो ।
णाणफलाभावातो मिच्छद्दिट्ठिस्स अण्णाणं ॥३१७॥१॥

**जति** गाहा । आह—यदि संशयादयोऽपि ज्ञानम् एवं नाम न कश्चिदज्ञो भवतः संसारेऽस्तीति प्रसक्तम् । उच्यते—सर्व एव [8]हि संशय-विपर्ययाऽनध्यवसाय-निर्णया मिथ्यादृष्टीनामज्ञानमाख्यायते, सम्यग्दृष्टीनां च ज्ञानमित्यदोषः । कथं पुनः ? [9]सदसतोरविशेषादित्यादि पूर्ववत् । सम्यग्दृष्टीनां तु ज्ञानं कथम् ? ॥३१७॥

एगं जाणं सव्वं जाणति सव्वं च जाणमेगं ति ।
इय सव्वमयं सव्वं सम्मद्दिट्ठिस्स जं वत्थुं ॥३१८॥

**एगं** गाहा । इह यस्मादुक्तं 'जे एगं जाणइ से सव्वं जाणइ, जे सव्वं जाणइ से एगं जाणइ' [आचा० १. ३. ४. १२२.] अतः सर्वं सर्वमयं वस्तु सम्यग्दृष्टेः स्वपरपर्यायैरिति । अतः–॥३१८॥

जे संसयातिगम्मा धम्मा वत्थुस्स ते वि पज्जाया ।
तदधिगमयं[10]त्तणे ते णाणं चि[२२–द्वि०]य संसयातीया ॥३१९॥

**जे संस०** गाहा । ये संशयादिगम्या धर्मास्तेऽपि हि वस्तुनः पर्यायाः । अतस्तदधिगमकत्वात् ज्ञानं संशयादयः सम्यग्दृष्टेरिति ॥३१९॥

पज्जायमासयंतो एक्कं पि तओ पयोयणवसातो ।
तत्तियपज्जायं चिय तं [11]गेण्हति भावतो वत्थुं ॥३२०॥

---

१ अहचेन्न **को** । २ न तु इति प्रतौ । ३ चो० जति **जे** । ४ °णी कोवि णत्थि सं° **त को हे**। **को हे त**। ६ ५ °रीमिच्छ° **त** । ७ गाहा इत्युल्लेखसहितं नोद्धृता स्वोपज्ञवृत्तौ । पुनरावृत्ता चात्रेति पृथक् संख्याङ्को न दत्तः । ८ समय°–इति प्रतौ । ९ 'सदसद' (गाहा० ११४) इत्यादि-गाथायाः निर्देश एव केवलमत्र । कोट्याचार्येण हेमचन्द्रेण चात्र पुनः सा उद्धृता । १० °मणत्त **को हे त** । ११ गिण्हइ **को हे** ।

**पज्जा०** गाहा । तस्य सर्वपर्यायात्मकस्य वस्तुनः प्रयोजनवशादेकमपि पर्यायमाश्रयन् सम्यग्दृष्टिस्तावत्पर्यायमेव हि तद्वस्तु प्रतिपद्यते । अतः संशयादिकालेऽप्यस्य तत्सम्यग्ज्ञानमेवेति ॥३२०॥

**णिण्णयकाले वि जतो ण तधारूवं विदंति ते वत्थुं ।**
**मिच्छदिट्ठी तम्हा सव्वं चिय तेसिमण्णाणं ॥३२१॥**

**णिण्णय०** गाहा । इह निर्णयकालेऽपि यतो न मिथ्यादृष्टयस्तथाभूतं वस्तु व्यवस्यन्ति सर्वपर्यायात्मकमित्यर्थः, अतः सर्वकालमेवैषामज्ञानमिति ॥३२१॥

**कट्ठतरं वेऽण्णाणं विवज्जओ चेव मिच्छदिट्ठीणं ।**
**मिच्छाभिणिवेसातो सव्वत्थ घडे व्व पडेबुद्धी ॥३२२॥**

**कट्ठतरं** गाहा । कष्टतरं वा मिथ्यादृष्टीनामज्ञानं विपर्यय एवात्यन्तम् । कुतः ? मिथ्याभिनिवेशात्, सर्वत्र तु घटे पटप्रत्ययवत् ॥३२२॥

**अधवा जधेन्दणाणोवयोगतो तम्मयत्तणं होति ।**
**तध संसयातिभावे णाणं णाणोवयोगातो ॥३२३॥**

**अधवा** गाहा । अथवा यथेन्द्रज्ञानोपयोगादिन्द्रज्ञानानन्यत्वाद्भावेन्द्रता भवति, तद्वत्संशयादिभावेऽपि ज्ञानोपयोगाभिप्रायात् ज्ञानमेव सम्यग्दृष्टेरिति ॥३२३॥

**तुल्लमिदं मिच्छस्स वि सो सम्मत्तादिभावसुण्णो त्ति ।**
**उवयोगम्मि वि तो तस्स णिच्चमण्णाणपरिणामो ॥३२४॥**

**तुल्ल०** गाहा । आह—यदि ज्ञानोपयोगमात्रात्सम्यग्दृष्टेः ज्ञानं तुल्यमिदं मिथ्यादृष्टेरपि । उच्यते—नैव तस्य ज्ञानोपयोगोऽस्ति सम्यक्त्वभावशून्यत्वादत उपयोगेऽप्यस्याज्ञानपरिणाम एवेति । ॥३२४॥

**जं णिण्णयोवयोगे वि तस्य विवरीतवत्थुपडिवत्ती ।**
**तो संसयातिकाले कत्तो णाणोवयोगो से ॥३२५॥**

**जं णि०** गाहा । इह यतो निर्णयोपयोगेऽपि मिथ्यादृष्टेर्विपरीतवस्तुप्रतिपत्तिरेव । अतः संशयादिकाले कुतोऽस्य ज्ञानोपयोग इति ॥३२५॥

१ विण्णा° त । २ पर° जे । ३ जहिंद° को हे त । ४ चो० तुल्ल° जे त ।

**अधवा[1] जध सुतणाणावसरे सामण्णदेसणं भणितं ।**
**तध मतिणाणावसरे सव्वमतिणिरूवणं कुणति ॥३२६॥**

**अधवा** गाहा । अथवा यथा श्रुतज्ञानावसरे लाघवार्थमज्ञानमप्युक्तमेवमिहापि सामान्यैव मतिर्निरूप्यते संशयविपर्ययो[2]ऽनध्यवसायनिर्णयात्मिकेत्यर्थः ॥३२६॥

**सव्वा[3] सम्माणुगया एसा[4] णाणं विवज्जए इतरं ।**
**अविसेसिता मति च्चिय जम्हा णिद्दिट्ठमातीए ॥३२७॥**

**सव्वा०** गाहा । सर्वैवेयं सम्यग्दर्शनानुगता सम्यग्ज्ञानं विपर्यये वाऽज्ञानमिति । यस्मादुक्तमादौ 'अविसेसिता मई विसेसिया मई मइनाणं मइअण्णाणं तिँ [नन्दी ४५] ॥३२७॥

**[२३-प्र०] विवरीतवत्थुगहणे जं सो साधणविवज्जयं कुणति ।**
**तो तस्सऽण्णा[5][6]णफलं सम्मदिट्ठिस्स णाणफलं ॥३२८॥**

**विवरीत०** गाहा । यस्मादसौ मिथ्यादृष्टिर्विपरीतवस्तुग्रहे[7] साधनविपर्ययं कुरुते—न साधनं पुनर्ज्ञानं क्रिया चेष्टास्यार्थस्य । अधर्मादेर्मिथ्याभिनिवेशाच्च न ज्ञानमित्यसाधनम् । क्रियापि हि प्रवृत्तिनिवृत्तिरूपा वस्तुविशेषत्यागादानाभ्यां भवति । वस्तुविपर्ययाच्च तद्विघात इत्यतः क्रियासाधनविपर्ययोऽपि । एतस्मादुभयसाधनविपर्ययान्मिथ्यादृष्टेरज्ञानफलं तत् । सम्यग्दृष्टेस्तु सम्यगवसायादुभयसाधनसामग्र्या साध्या सिद्धिरतस्तस्य ज्ञानफलमिति ॥३२८॥

**जंति[8] सो वि तस्स धम्मो किं विवरीतत्तणं ति तं ण भवे ।**
**धम्मो वि जतो सव्वो ण साधणं किंतु जो जोग्गो ॥३२९॥**

**जति** गाहा । आह—किमिह मिथ्यादृष्टेर्वस्तुवैपरीत्यं यद्यसावपि तस्य पर्याय एव, सर्वात्मकत्वाद्वस्तुनः । उच्यते—न ब्रूमः स तस्य पर्यायो न भवति, तन्मात्रपर्यायं न भवतीति ब्रूमः । न च यस्तस्य पर्यायः स सर्व एव साधनभावं प्रतिपद्यते । किं तर्हि ? सध्यापेक्षया यो हि यस्य योग्यैः[9] स साधनतां प्रतिपद्यत इति । ॥३२९॥

**जोग्गाजोग्गविसेसं अमुणंतो सो विवज्जयं कुणति ।**
**सम्मदिट्ठी [10]पुण तस्स कुणति सट्ठाणविणिओगं[11] ॥३३०॥**

१ आ० अध° जे त । २ °पर्ययोऽन°–इति प्रतौ । ३ एसा सम्मा° को हे । एसा मण्णाणु° त । ४ ° गया सव्वा णाणं को हे त । ५ अण्णादि–इतिप्रतौ ६ तस्स अन्ना° हे । ७ °ग्रहो–इति प्रतौ । अत्र 'ग्राही' इत्यपि स्यात् । ८ चो० जइ जे त । ९ योगः साध°–इति प्रतौ । १० उण कुणइ तस्सट्ठाए वि° त । उण कुणइ तस्स सट्ठा° को हे । ११ ओगं जे ।

**जोग्गा०** गाहा। स च मिथ्यादृष्टिः साध्यसाधनयोग्यायोग्यतामबुद्धयमानो विपर्येतीत्यतो न साधकः, सम्यग्दृष्टिस्तु यथायोगं योग्यायोग्यविनियोगादिष्टार्थप्रसाधक इति ॥३३०॥

**[1]उग्गहो एक्कं समयं ईहावाया मुहुत्तमन्तं[2] तु।**
**कालमसंखं संखं च धारणा होति णातव्वा ॥४॥३३१॥**
**अत्थोग्गहो जहण्णो समयं सेसोग्गहादयो वीसुं।**
**अन्तोमुहुत्तमेयं तु वासणा धारणं मोत्तुं ॥३३२॥**

**उग्गहो** गाहा। **अत्थो०** गाहा। अर्थावग्रहो यो जघन्यः स खल्वेकसमयः। स चाद्य एव नैश्चयिक इत्यर्थः। शेषाः सर्व एव व्यञ्जनावग्र[हे]हापायाऽविच्युतिस्मृतिधारणाः पृथक् पृथगन्तर्मुहूर्त्तम्, एकां तु वासनां धारणां मुक्त्वेति तदर्थावरणक्षयोपशमाख्यामित्यर्थः। सा हि संख्येयवर्षायुषां संख्येयं कालम्, असंख्येयवर्षायुषां संख्येयमसंख्येयं वेर्त्तिं[4]। ॥३३१–३३२॥

**सोत्तादीणं पत्तातिविसयता पुव्वमत्थतो भणिता।**
**इध कण्ठा सद्दाणे भण्णति विसयप्पमाणं च ॥३३३॥**

**सोत्ता०** गाहा। इह प्राग् व्यञ्जनावग्रहद्वारेण श्रोत्रेन्द्रियादीनां प्राप्तविषयताऽर्थतोऽभिहिता। इहेदानीं सूत्रतोऽभिधीयते, सर्वेन्द्रियविषयपरिमाणं चेति। अथवाह शिष्यः—श्रोत्रेन्द्रियादीनां प्राप्ताप्राप्तविषयतोपपत्तिमात्राभिहिता, नात्र सौत्रो विधिरस्तीति ॥३३३॥ उच्यते—

**पुट्ठं सुणेति सद्दं रूवं पुण पासती अपुट्ठं तु।**
**गंधं[3] रसं च फासं च बद्धपुट्ठं वियागरे ॥५॥३३४॥**
**पुट्ठं रेणुं व तणुम्मि बद्धमप्पीकतं पतेसेहिं।**
**च्छिक्काइं चिय [6]गेण्हति सद्दद्व्वाइं जं [7]ताइं ॥३३५॥**
**बहुसुहुमभावुगाइं जं [8]पडुतर[२३–द्वि०]यं च सोत्तविण्णाणं।**
**गंधाइं दव्वाइं[9] विवरीताइं जतो ताइं ॥३३६॥**
**फरिसाणंतरमत्तप्पदेसमीसीकताइं घेप्पन्ति।**
**पडुतरविण्णाणाइं जं च ण घाणंतिकरणाइं[10] ॥३३७॥**

---

१ ओग्गह ए° जे। २ °मद्ध° तु जे को। कोटीकायां 'मुहुत्तमन्तं' इत्यस्य पाठान्तरत्वेन निर्देशः। ३ °गं वा त। ४ त्ति-इति प्रतौ। ५ पत्तावि° त। ६ गिण्हइ को हे। ७ जं काइं जे। ८ पडुययरं को। पडुयरं हे। ९ दव्वाइं को हे। १० °णाइं क° त।

**पुट्ठं** सिलोगो। **पुट्ठं रेणु** गाहा। **बहुसु॰** गाहा। **फरिसा॰** गाहा॰। इह स्पृष्टमालिङ्गितमुच्यते। तनौ रेणुवत्। बद्धमाश्लिष्टमात्मीकृतमात्मप्रदेशैस्तोयवत्। तत्र स्पृष्टान्येव शब्दद्रव्याण्युपलभन्ते यतस्तानि बहूनि सूक्ष्माणि भावुकानि चेति, शेषै-[1]द्रव्यापेक्षया बहु(पटु)तरं च श्रोत्रविज्ञानमन्येन्द्रियगणादिति। गन्धादिद्रव्याणि तु यतस्तोकबादराऽभावुकानि, यतश्च तान्यपटूनि घ्राणादीन्यतस्तान्यालिङ्गितानन्तरमात्मप्रदेशैरागृहीतान्युपलभ्यन्त इति ॥३३४–३३५–३३६–३३७॥

**अप्पत्तकारि णयणं मणो य णयणस्स विसयपरिमाणं।**
**आतंगुलेण लक्खं अतिरित्तं जोयणाणं तु ॥३३८॥**

**अप्प॰** गाहा। अप्राप्तकारि नयनं मनश्चेत्युक्तमतस्तदस्पृष्टमर्थं गृह्णातीति नयनस्य विषयपरिमाणमात्माङ्गुलेन योजनशतसहस्रमधिकं परमुक्तम् ॥३३८॥

**णणु भणितमुस्सयंगुलपमाणतो जीवदेहमाणाति[2]।**
**देहपमाणं[3] चिय तं ण तु इन्दियविसयपरिमाणं ॥३३९॥**

**णणु** गाहा। आह— ननूक्तमुत्सेधाङ्गुलप्रमाणतो नारकादिशरीरप्रमाणम्। इह कथमिन्द्रियविषयप्रमाणमात्माङ्गुलेनेति? उच्यते—तदुत्सेधाङ्गुलेन शरीरमात्रप्रमाणमेवोक्तं न त्विन्द्रियविषयपरिमाणमिति। ॥३३९॥ कथं पुनः?—

**जं तेण पंचधणुसतणरातिविसयववहारवोच्छेतो।**
**पावइ सहस्सगुणितं जेण पमाणंगुलं तत्तो ॥३४०॥**

**जं तेण** गाहा। यतस्तेनोत्सेधाङ्गुलप्रमाणेन पञ्चधनुःशतादिपुंसां शब्दादि-विषयै[4]संव्यवहारोच्छेदः प्रसजति, यतो भरतस्य यदङ्गुलं तत्प्रमाणाङ्गुलमुच्यते। तच्च सहस्रगुणमुत्सेधाङ्गुलात्। अतो भरतादीनां स्वयोजनेन द्वादशयोजनायामायां पुर्यां स्कन्धावारे चोत्सेधाङ्गुलतो विषयपरिमाणे सति, भेर्यादिशब्दादिविषयसंव्यवहारो हीयते॥३४०॥

**इंदियमाणे वि तयं भयणिज्जं जं तिगाउतादीणं[5]।**
**जिब्भिन्दियादिमाणं संववहारे विरुज्झेज्जं[6] ॥३४१॥**

**इंदिय॰** गाहा। इह तदुत्सेधाङ्गुलमिन्द्रियप्रमाणेऽपि भजनीयमेवेति। किमुक्तं भवति? स्पर्शनेन्द्रियप्रमाणमेव हि तेन स्यात्, न शेषेन्द्रियप्रमाणम्। न चेन्द्रियविषयस्येति, यतस्त्रिगव्यूतादिपुंसामुत्सेधाङ्गुलतो जिह्वेन्द्रियादिप्रमाणमङ्गुलपृथक्त्वादिसंव्यवहारे विरुध्येतेति ॥३४१॥

---

१ शेषं द्र°-इति प्रतौ। २ णाइं **त**। °णाई **को**। ३ °णं तं चिय **त**। ४ विषयः सं°-इति प्रतौ। ५ दीणि **त**। ६ °ज्जा **को हे**।

तणुमाणं चिय तेणं भवेज्ज[1] भणितं सुते वि तं चेवे[2] ।
एतेण देहमाणाइं[3] णारगातीण मिज्जंति ॥३४२॥

**तणु०** गाहा । पारिशेष्यात्तनुमानमात्रमेवोत्सेधाङ्गुलतो भवेत्, न शेषम्, यतः श्रुतेऽपि तदेवोक्तं 'इच्चेएणं उस्सेहंगुलप्पमाणेणं णेरइयतिरिक्खजोणियदेवमणुस्साणं सरीरोगाहणाओ मिजंति" [अनुयोगद्वार सू० १३४] ॥३४२॥

लक्खेहि[4][5] एक्कवीसाए सातिरेगेहि पुक्खरद्धम्मि ।
उदए पेच्छन्ति णरा सूरं उक्कोसए दिवसे ॥३४३॥
णयणिन्दियस्स [ २४–प्र० ] तम्हा विसयपमाणं जधा सुतेऽभिहितं ।
आतुस्सेहपमाणंगुलाणमेगेण वि ण जुत्तं ॥३४४॥

**लक्खेहि** गाहा । **णय०** गाहा । आह—यतः पुष्करार्द्धे मानुषोत्तरसन्निधावुत्कृष्टेऽहनि मनुष्याः सूर्यमुदयेऽस्तगमने चैकविंशत्याधिकैर्लक्ष्यै(क्षै)रुपलक्षयन्ति, अतो नयनेन्द्रियस्यात्मोत्सेधप्रमाणाङ्गुलानामेकेनापि न योजनसहस्रमिति सूत्रव्याघातः । ॥३४३–३४४॥ उच्यते—

सुत्ताभिप्पायोयं[6] पगासणिज्जे तयं ण तु पयासे ।
वक्खाणतो विसेसो ण[7] हि संदेहादलक्खणता ॥३४५॥

**सुत्त०** गाहा । इह सूत्राभिप्रायोऽयम्—यत्तावदतिरिक्तं लक्षमुक्तं प्रकाश्य एव तदर्थे पर्वता[दा]विष्टं न प्रकाशके सूर्यादाविति । कुतः पुनरेतत् ? व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादि(द)लक्षणमिति ॥३४५॥

बारसहिन्तो सोत्तं सेसाइं णवहिं[8] जोयणेहिंतो ।
[9]गेण्हंति पत्तमत्थं एत्तो[10] परतो णं गेण्हन्ति ॥३४६॥
दव्वाण मन्दपरिणामतायें[11] परतो ण इन्दियबलं पि ।
अवरम[12]संखेज्जंगुलभागातो[13] णयण[14]वज्जाणं ॥३४७॥

**बारस०** गाहा । **दव्वाण** गाहा । द्वादशभ्यो नवभ्यश्च योजनेभ्यः परतः शब्दादिद्रव्याणां मन्दपरिणामता भवति, न चेन्द्रियाणां ग्रहणश[illegible]ऽनुपलब्धिः । अपरं प्रमाणम्—अङ्गुलासङ्ख्येयभागमात्रात् प्राप्तकारिणाम् ॥३४६–३४७॥

---

१ हविज्ज को हे । २ चेअ जे । ३ णाई को । ४ चो० ल° जे त । ५ °हिं को हे । ६ आ० सु° जे त । ७ ण वि जे । ८ णव य जो° त । ९ गिण्ह° को हे । १० इत्तो त । ११ °ताए को हे । १२ अचिर° त । १३ °गो तो जे । १४ णराण० त ।

**संखेज्जतिभागातो णयणस्स मणस्स ण विसयप[1]रिमाणं ।**
**पोग्गलमे[2]त्तिणिबंधाभावातो केवलस्सेव ॥३४८॥**

**संखेज्ज०** गाहा । नयनस्यातिसन्निकर्षादनुपलब्धिरित्यतः संख्येयभागादङ्गुलस्येति । मनसो हि न क्षेत्रतो विषयपरिमाणमस्ति पुद्गलमात्रनिबन्धनाभावात् । इह यत्पुद्गलमात्रनिबन्धनं [न] भवति न तस्य विषयपरिमाणमस्ति यथा केवलस्य । [य]स्य च विषयपरिमाणमस्ति तत्पुद्गलमात्रनिबन्धनियतं दृष्टं यथावधिमनःपर्यायौ[3]विति । अ(आ)ह—मतिश्रुतयोः कथमुभयनिबन्धे सति ? उच्यते—मतिश्रुतवृत्ति एव मनः । न च तयोरपि देशनिबन्धनियमोऽस्तीति ॥३४८॥

आह—किं शब्दप्रयोगोत्सृष्टान्येव केवलानि शब्दद्रव्याणि श्रूयन्ते उतान्यान्येव तद्वासितान्याहोस्विन्मिश्राणीति ? उच्यते—केवलानि तावन्न श्रूयते(न्ते) वासकत्वाच्छब्दद्रव्याणाम्, तद्योग्यद्रव्याकुलत्वाच्च लोकस्य, मिश्राणि तु श्रूयेरन् वासितानि वाच्यानि यस्मादाह—

**भासासमसेढीओ[4] सद्दं जं सुणइ मीसै[5]यं सुणइ ।**
**वीसेढी पुण सद्दं सुणेइ णियमा पराघाए ॥६॥३४९॥**
**सेढी पदेसपंती वदतो सव्वस्स छद्दिसीं ताओ ।**
**जासु विमुक्का धावइ भासा समयम्मि पढमम्मि ॥३५०॥**

**भासा०** गाहा । **सेढी** गाहा । इह श्रेणयः प्रदेशपङ्क्तयः । ता हि सर्वस्य भाषमाणस्य षट्सु दिक्षु विद्यन्ते यै[6]सूत्सृष्टा सती भाषा प्रथमसमय एवानुधावत्यालोकान्तात् ॥३४९–३५०॥

**भासासमसेढिठिओ तब्भासामिँ[7]स्सितं सुणति सद्दं ।**
**तद्दव्वभाविंताइं अण्णाइं [8]सुणेति विदिसै[9]त्थो ॥३५१॥**

**भासा०** गाहा । इह भाषकस्यैँ[10]ऽन्यस्य वा मेर्यादेः समश्रेणिव्यवस्थितः श्रोता तदुत्सृष्टद्रव्यमिश्रमेव हि शब्दं शृणोति विश्रेण्यवस्थितः पुनः पराघातद्रव्याण्युत्सृष्टद्रव्याभिघातवासितान्येवेत्यर्थः ॥३५१॥

**अणुसेढीगमणातो परिघाताऽभावतोऽणिमित्तातो ।**
**समयन्तराणवत्थाणतो य [11]मुक्काइं ण सुणेति ॥३५२॥**

---

१ पमाणं को हे जे । २ °मित्त° को हे । ३ °पर्यायो वेति–इति प्रतौ । ४ °ढीयं जे । ५ मीसियं त । ६ यास्तत्सृ°–इति प्रतौ । ७ °मीसियं को हे त । ८ सुणइ को हे । ९ °सित्थो त । १० भाषकस्यान्यस्यान्यस्य वा–इति प्रतौ । ११ अक्खाइं जे ।

अणु० गाहा। नोत्सृष्टानि विदिग्व्यवस्थितो गृह्णाति। कुतः? अनुश्रेणीगमनात्, प्रतिघाताभावात्, तद्गतिनिमित्ताभावात्, समयान्तरानवस्थानात्। गन्धादिद्रव्याण्यपि मिश्राण्येवोपलभ्यन्ते। न त्वेषामनुश्रेणिनियमोऽतिस्थूलत्वाद्वातायनरेणुवदिति ॥३५२॥

आह—केन पुनर्योगेनैषां वाग्द्रव्याणामादानमुत्सर्गो वा कथंवे(कथमि)ति? उच्यते—

[1]गेण्हति य काइएणं णिसिरति तह वाइएण जोगेणं।
एगंतरं च[2] गेण्हति णिसिरति एगंतरं चेवं ॥७॥३५३॥

**गेण्हति** गाहा। इह कायेन निर्वृत्तः कायिकः, योगो व्यापारः कर्मेत्यर्थः। सर्वो हि वक्ता कायकर्मणा शब्दद्रव्याणामादानं करोति विसृजति च वाग्योगेनेति ॥ ॥३५३॥

[3]गेण्हेज्ज काइएणं कि[२४—द्वि०]ध णिसिरति वाइएण जोएणं।
को वाऽयं वायोगो[4] किं वाया कायसंरंभो ॥३५४॥

**गेण्हेज्ज** गाहा। आह कायिकेनोपादानं युक्तमत्र व्यापारात्। वाचिकेन तु कथं विसर्गः, को वायं वाग्योगो नामेति? किं वागेव व्यापारापन्ना वाग्योग इति? आहोस्विद् यस्तद्विसर्गहेतुः कायसंरम्भ इति? ॥३५४॥ किं चातः?—

वाया ण जीवयोगो पोग्गलपरिणामतो रसादि व्व।
ण य ताए णिसिरिज्जति स च्चिय णिसिरिज्जते जम्हा ॥३५५॥

**वाया** गाहा। इह न वाक्केवला जीवव्यापारः पुद्गलमात्रपरिणामाद्रसादिवत्, आत्मनश्च व्यापारः शरीरवतो यः स योग इति। न च तया निसृज्यते किन्तु सैव निसृज्यत इत्युक्तं यतः ॥३५५॥

अध सो तणुसंरंभो णिसिरति तो काइएण वत्तव्वं।
तए जोगविसेस च्चिय मणवइजोग[5] त्ति जमदोसो[6] ॥३५६॥

अध गाहा। अथ यस्तद्विसर्गहेतुः कायसंरम्भः स वाग्योगोऽभिप्रेतस्ततः स कायव्यापार एवेति कृत्वा कायिकेनैव निसृजतीत्यस्तु। उच्यते—तनुयोगविशेष एव हि वाग्योगो मनोयोगश्च यतो न दोषः। कुतः? कायव्यापारशून्यस्यायोगत्वात् सिद्धवद् ॥३५६॥

किं पुण तणुसंरंभेण जेण मुंचति स वाइओ जोगो।
मणति य स माणसियो तणुयोगो चेव यं[7] विभत्तो ॥३५७॥

---

१ गिण्हइ को हे। २ चेय जे। ३ गिण्हि° को हे। ४ वाऽयं जोगो हे। वाऽयं वाजोगो त। ५ °वयजो° त। ६ तमदो° त। ७ चेव पाव° त।

**किं पुण** गाहा । किं पुनरात्मनः शरीरे(र)व्यापारे सति येनोपादानं करोति स कायिको योगः, येन तनुसंरम्भेण तान्येव मुञ्चति स वाचिकः, येन मनोद्रव्याणि मन्यते, स मानस इति कायव्यापार एवायं त्रिधा भिद्यत इति ॥३५७॥

**तणुयोगो च्चिय मणवंयियोगा काएण दव्वगहणातो ।**
**आणापाणुं व्व ण चे तओ वि जोगंतरं होज्जं ॥३५८॥**

**तणुयो०**[4] गाहा । तनुयोग एव हि वाग्योगो मनोयोगश्च, कायेन तद्द्रव्योपादानात् । प्राणापानवत् । अन्यथा हि प्राणापानव्यापारोऽपि योगान्तरं भवेत् । ततश्च योगचतुष्टयमापाद्येत, अनिष्टं चैतत् ॥३५८॥

**[5]तुल्ले तणुयोगत्ते कीस व जोगंतरं तओ ण कतो ।**
**मणवइजोगा वं कता भण्णति ववहारसिद्धत्थं ॥३५९॥**

**तुल्ले** गाहा । आह—तुल्ये वाक्कायव्यापारे किमसौ योगान्तरं न भवति, मनोवाग्योगौ च भवत इति ? उच्यते—संव्यवहारप्रसिद्ध्यर्थमिह मनोवाग्योगभेदो न प्राणापानस्येति ॥३५९॥ कुतः ?—

**कायकिरियातिरित्तं णाऽऽणापाणप्फलं जध वईए ।**
**दीसइ मणसो य फुडं तणुयोगब्भंतरो तो सो ॥३६०॥**

**काय०** गाहा । न च कायक्रियातिरिक्तं प्राणापानफलमप्राप्तस्यादानत्याग-[प्रत्यायना]स्तद्वादिक्रियावत् । अप्राप्तस्यं चादानत्यागप्रत्यायनक्रियाफलभेदाद्भेदो मनोवाग्योगयोः शेषकायव्यापारादिति ॥३६०॥

**अधवा तणुयोगाहितवइदव्वसमूहजीववावारो ।**
**सो वइ[२५–प्र०]योगो भण्णति वाया णिसिरिज्जते तेणं ॥३६१॥**

**तध तणुवावाराहितमणदव्वसमूहजीववावारो ।**
**सो मणजोगो भण्णति मण्णति णेयं जतो तेणं ॥३६२॥**

**जध गामातो गामो गामंतरमेवमेगं एगातो ।**
**एगंतरं ति भण्णति समयातोऽणन्तरो समयो ॥३६३॥**

**अधवा** गाहा । **तध** गाहा । [**जध** गाहा ।] अथवा सरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्याज्जीवव्यापारो यः स वाग्योगः, तथा तनुव्यापाराहृतमनोद्रव्य-

---

१ वइजोगा को हे । °वयजोगा त । २ °ण व्व को हे । ३ °ज्जा को हे । ४ तणुतो–इति प्रतौ ५ चो० तुल्ले त । ६ न त । ७ स्याचा°–इति प्रतौ । ८ °मेवमेव ए° जे । °रमेगमेव ए° त ।

समूहसाचिव्याज्जीवव्यापार यः स मनोयोग इति। यथेह ग्रामादन्यो ग्रामो ग्रामान्तरमनन्तरोऽपि पुरुषाद्वा पुरुषः पुरुषान्तरम्, एवमेकैकस्मात्समयादेकैक एवैकान्तरमनन्तरोऽनन्तरः समय इति। एवमनुसमयं गृह्णाति मुञ्चति चेत्युक्तं भवति। ॥३६१–३६२–३६३॥

**केयी[1] एगंतरितं मण्णंतेगंतरं ति तेसिं च।**
**विच्छिण्णावलिरूवो होति धणी सुतविरोधो य ॥३६४॥**

**केयी** गाहा। इह केचिदेकैकस्य व्यवहितमेकान्तरमिति मन्यन्ते। तेषां च विच्छिन्नरत्नावलीरूपः शब्दः प्रसज्यते, सूत्रव्याघातश्च, यतः सूत्रेऽभिहितम्—'अणुसमयमविरहियं निरन्तरं गेण्हइ त्ति" [प्रज्ञापना पद ११, सूत्र १६९]। ॥३६४॥

**आह[2] सुते च्चिय णिसिरति संतरितं ण तु णिरंतरं भणितं।**
**एगेण जतो [3]गेण्हति समएणेगेण सो मुयति ॥३६५॥**

**आह** गाहा। आह—ननु सूत्र एवाभिहितं "सान्तरं णिसिरइ णो णिरंतरं णिसिरइ [4]एगेणं समएणं गेण्हइ एगेणं समएणं णिसिरई" [प्रज्ञापना पद ११, सूत्र १६९] इत्यादि ॥३६५॥

**अ[5]णुसमयमणंतरितं गहणं भणितं जतो विमोक्खो वि।**
**जुत्तो णिरंतरो च्चियं[6] भणति कधं संतरो भणितो ॥३६६॥**

**अणु०** गाहा। उच्यते—यतोऽनुसमय [7]अव्यवहितग्रहणमुक्तमतस्तद्विमोक्षोऽप्यनुसमये एव युक्तः, यतश्च ग्रहणनिसर्गौ जघन्यतः समयद्वयमुक्तौ—प्रथमसमय एव ग्रहणमनन्तरेण विसर्ग इति। आह—सत्यमेतत् किन्तु[7] [सूत्रे]ऽभिहितं "सान्तरं णिसिरइ णो णिरंतरं णिसिरइ त्ति" [प्रज्ञापना पद ११, सूत्र १६९] तत्कथम्? ॥३६६॥ उच्यते-

**ग[8]हणावेक्खायं[9] तओ णिरंतरं जम्मि जाइं गहिताइं।**
**ण वि तम्मि चेयं[10] णिसिरति जह[11] पढमे णिसिरणं णत्थि ॥३६७॥**

**गहणा०** गाहा। इह ग्रहणापेक्षया निसर्गः सान्तरोऽपदिश्यते। यथा हि प्रथमसमयादारम्य ग्रहणमेवं न निसर्गः, यतः प्रथमग्रहणसमये स नास्ति। अतः पूर्वपूर्व-

१ 'केयि' इति संशोधितं जेप्रतौ। केई को हे। २ चो० आह जे त। ३ गिण्ह° को हे। ४ °इ ण एगें°–इति प्रतौ। ५ आचा० अ° जे त। ६ च्चिय चो० भ° त। ७ किन्तु मतेऽभि° इति प्रतौ। ८ आ० गह° जे त। ९ °क्खाए को हे त। १० चेव को हे त। ११ जढ जे।

ग्रहणसमयव्यवधानात् सान्तरव्यपदेशः, यतो न यस्मिन्नेव ग्रहणं तस्मिन्नेव तद्द्रव्य-निसर्ग इति ॥३६७॥

आह—यद्येवं ग्रहणमपि निसर्गापेक्षया सान्तरमित्यस्तु । न, ग्रहणस्य स्वतन्त्रत्वाद्, निसर्गस्य च ग्रहणतन्त्रत्वात् । यस्मात्—

**णिसिरिज्जति णाऽगहितं गहणन्तरितं ति संतरं तेणं ।**
**ण णिरंतरं[1] ति ण [2]समयं न जुगवमिति[3] होन्ति पज्याया ॥३६८॥**

**णिसिरि०** गाहा । नागृहीतं निसृज्यत इत्यतोऽवश्यं ग्रहणव्यवहितं निसर्जनं न निरन्तरमिति न ग्रहणसमकालमित्यर्थः ॥३६८॥

**गहणं मो[२५-द्वि]क्खो भासा समयं गहणिसिरणं च दो समया ।**
**होन्ति जहण्णम्मरतो[4] ठंतस्स वें[5] बिइयसमयम्मि ॥३६९॥**

**गहणं** गाहा । इह वाग्द्रव्याणां ग्रहणमेकसमयं जघन्यतस्तथा विमोक्षो भाषा च ग्रहणविसर्गश्च समयद्वयं द्वितीयसमये म्रियमाणस्यावतिष्ठमानस्य चेति ॥ आह—ननु विमोक्षमात्रमेव भाषा किमस्याः पृथग् ग्रहणमिति ? उच्यते—पृथग्ग्रहणादेतदेव ज्ञाप्यते—भाष्यमाणा भाषेति, विमोक्षमात्रमेव भाषा न, ग्रहणमुभयं चेति ॥३६९॥

**गहणं मोक्खो भासा गहणणिसग्गो[6] य होन्ति उक्कोसं ।**
**अन्तोमुहुत्तमेत्तं पयत्तभेएण भेओ सिं ॥३७०॥**

**गहणं** गाहा । ग्रहणं विमोक्षो भाषा ग्रहणविसर्गश्चेति पृथक्[7] प्रकर्षेणान्तर्मुहूर्तमुक्तम् । तत्राद्यसमये ग्रहणमेव, अन्त्ये विमोक्ष एव, मध्यमेषूभयमिति सर्वत्र चल्पिमहाप्राणप्रयत्नभेदात्कालभेद इति ॥३७०॥ इह यदपदिश्यते मध्यमसमये तूभयमित्यत्र[8] ब्रूमः-

**गहणविसग्गपयत्ता परोप्परविरोहिणो कहं समए ।**
**समए दो उवओगा ण [10]होन्ति किरियाण को दोसो ॥३७१॥**

**गहण०** गाहा । *ग्रहणविसर्गप्रयत्नावात्मनः परस्परविरोधिनावेकसमये कथं स्याताम् ? उच्यते* अप्रतिषेधात् । खल्वेकसमये नैकक्रियानिषेध उक्तः, कर्मादानविसर्गक्रियावत्, उत्पादव्ययक्रियैककालवत्, ध्याने च युगपद्योगत्रयोपदेशादिति ॥३७१॥

---

१ °रं ण **को** । २ समयमजु° **जे** । ३ °मिह हो° **को हे त** । ४ जहण्णं तरओ तं तस्स **हे को** । °ण्णं तरतो तं तस्स **त** । °ण्णमुपरतो ठंतस्स **जे** । ५ °स्स वि **जे** । °स्स च **हे** । °स्स वतिइ° **त** । ६ °सग्गा **जे हे को** । ७ °हणं वि°–इति प्रतौ । ८ °त्र बाल्यप्रा°–इति प्रतौ । ९ प्रथ-स°-इति प्रतौ । १० होज्ज **त को हे** । * चिह्नान्तर्गतः पाठः प्रतौ पुनरावृत्तः । ११ °त्नो वा–°इति प्रतौ ।

**तिविधम्मि सरीरम्मि[1] जीवपएसा हवंति जीवस्स।**
**जेहिं तु गेण्हति गहणं तो भासइ भासओ भासं ॥८॥३७२॥**
**ओरालियवेउव्वियआहारओ[2] गेण्हती[3] मुअति भासं।**
**सच्चं सच्चामोसं मोसं च असच्चमोसं च ॥९॥३७३॥**

**तिविध०** गाहा। **ओरालिय०** गाहा। त्रयाणामौदारिकादीनां शरीराणामन्यतमशरीरस्थास्ते खल्वात्मप्रदेशा यैर्गृह्णाति ग्रहणम्, ग्रहणमिति कृत्यल्युटो बहुलमिति वचनात्कर्मकारकं कृत्वा वाग्द्रव्याण्याह। ततो भाषते भाषां यदि च भाषको भवति, औदारिकादिभावेऽपि न यस्मात् सर्वदावभाषक इति ॥३७२–३७३॥

**सच्चा हिता सतामिह संतो मुणयो गुणा पदत्था वा।**
**तव्विवरीता मोसा मीसा जा तदुभयसभावा ॥३७४॥**
**अणधिगता जा तीसु वि सद्दो[4] च्चिय केवलो[5] असच्चमुसा।**
**[6]एया सभेतलक्खणसोदाहरणा जधा सुत्ते ॥३७५॥**

**सच्चा[7]** गाहा। **अणधि०[8]** गाहा। सद्भ्यो हिता सत्या। तत्र सन्तः साधवो मुनयस्तदुपकारिणी भाष्यमाणा सत्या। अथवा सन्तो मूलोत्तरगुणास्तदनुपघातिनी सत्या। अथवा सन्तः पदार्था जीवादयस्तद्धिता तत्प्रत्यायनफला जनपदसत्यादिभेदा सत्येति। तद्विपरीतरूपा क्रोधाश्रितादिभेदा मृषेति। तदुभय[9]स्वभावा वस्त्वेकदेशप्रत्याख्यानफलोत्पन्नमिश्रादिभेदात्सत्यमृषेति। तिसृष्वप्यनधिकृता शब्दमात्रस्वभावा आमन्त्रणादिभेदा असत्यामृषेति। एताश्चतस्रोऽपि सूत्रानुवृत्त्या वक्तव्या इति ॥३७४–३७५॥

आह–'द्वादशभ्यो योजनेभ्यः परं न शृणोति, मन्दपरिणामत्वाद् द्रव्याणाम्' इत्युक्तम्। अथ किं परतोऽपि द्रव्याणां गतिरस्ति? यथा च विषयाभ्यन्तरतो नैरन्तर्येण तद्वासनासामर्थ्यमस्ति तद्वत् परतोऽपि इति? उच्यते—अस्ति केषाञ्चिदालोकान्तात्। आह यद्येवमतः—

**[11]केतिहि समएहि[12] लोगो भासाए णिरंतरं तु होति फुडो।**
**लोगस्स कतिभाए [२६ प्र०] कतिभागो होति भासाए ॥१०॥३७६॥**
**चतुहिं[13] समएहि लोगो भासाए णिरंतरं तु होइ फुडो।**
**लोगस्स य चरिमंते चरिमंतो होति भासाए ॥११॥३७७॥**

---

१ °म्मि वि जी° जे। °रम्मी जी° को। २ °लिवेउ° को। ३ गेण्हइ हे त। ४ सच्चो च्चि° त। ५ ला° त। ६ एसा जे त। ७ सव्व–इति प्रतौ। ८ अणवि–इति प्रतौ। ९ °प्रत्ययेन हला–इति प्रतौ। १० °भयस्तदावा–इति प्रतौ। ११ कईहिं को हे। १२ °हिं को हे। १३ °हिं को हे।

**कोई मन्दपयत्तो णिसिरति सयलायिं सद्दव्वाइं ।**
**अण्णो तिव्वपयत्तो सो मुंचति भिन्दितुं ताइं ॥३७८॥**

**कतिहि** गाहा । **चतुहि** गाहा । [1]**कोई** गाहा । इह कश्चिन्मन्दप्रयत्नो वक्ता । स खल्वभिन्नान्येव शब्दद्रव्याणि विसृजति, कश्चिच्च महाप्रयत्नः, स खल्वादान-विसर्गप्रयत्नाभ्यां [2]भित्त्वेति ॥३७६–३७७–३७८॥ तत्र—

**गंतुमसंखेज्जाओ अवगाहणवग्गणा अभिण्णाइं ।**
**भिज्जंति[3] धंसमेन्ति[4] य [5]संखेज्जे जोअणे गंतु ॥३७९॥**

**गंतु०** गाहा । इह सूत्रमिदम्—"जाइं अभिण्णाइं णिसिरति" [प्रज्ञापना पद ११ सू० १६९] इत्यादि सर्वमुच्चारणीयम् । अवगाहोऽवगाहनं तदाश्रयक्षेत्रमित्यर्थः । ता हि खल्वसंख्येया यात्वा भिद्यन्ते । संख्येयानि च योजनानि यात्वा ध्वंस इति । ध्वंसः पुनः पुनः शब्दपरिणामत्याग इति ॥३७९॥

**भिण्णाइं सुहुमताए अणंतगुणवड्ढिताइ लोगंतं[6] ।**
**[7]पावंति पूरयंति य भासाए णिरंतरं लोगं ॥३८०॥**

**भिण्णा०** गाहा । सूत्रं "जाइं भिण्णाइं णिसिरति" [प्रज्ञापना पद ११ सू० १६९] इत्यादि । एवमिह भिन्नानि सूक्ष्मत्वाद् बहुत्वाच्चानन्तगुणवृद्ध्या वर्द्धमानानि षट्सु दिक्षु लोकान्तमाप्नुवन्ति । अन्यतश्च तत्पराघातवासनाविशेषात् समस्तलोकमापूरयन्ति ॥३

**जइणसमुग्घातगतीय[8] केयि भासंति चतुहिं समएहिं ।**
**पूरइ सयलो लोगो अण्णे पुण तीहिं समएहिं ॥३८१॥**

**जइण०** गाहा । इह केचिज्जैनसमुद्घातदण्डादिक्रमेण चतुर्भिः समयैरापूर्यते लोक इति मन्यन्ते । अन्ये त्रिभिः समयैः ॥३८१॥ कथं पुनः ?

**पढमसमए च्चिय जतो मुक्काइं जंति छद्दिसिं ताइं ।**
**बितियसमयम्मि ते च्चिय [9]छड्डुण्डा होन्ति छम्मन्था ॥३८२॥**

**पढम०** गाहा । यतस्तानि प्रथमसमय एव षट्सु [10]दिक्ष्वनुधावन्ति, द्वितीयसमये त एव हि [11]षट् दण्डाश्चतुर्दिशमेकैकशो विक्षिपन्तः षड् मन्थानो भवन्ति ॥३८२॥

**मन्थन्तरेहि ततिए समए पुण्णेहिं पूरितो लोगो ।**
**चतुहिं समएहिं पूरति लोगंते भासमाणस्स ॥३८३॥**

**मन्थ०** गाहा । तृतीयसमये पृथक् पृथक् तदन्तरालपूरणादापूर्णो लोक इति । चतुर्भिरापूर्यते लोकान्तेऽवस्थितस्य भाषकस्य ॥३८३॥

---

१ कोयिं–इति प्रतौ । २ भिंधेति–इति प्रतौ । ३ °ती को । ४ धंसंति को हे । ५ संखिं° को हे । ६ लोगंते जे । ७ पाविंति त । ८ गइए को हे । ९ छड्° को हे त । १० दिक्षुनु–इति प्रतौ । ११ हि खण्डषण्ड–इति प्रतौ ।

**दिसि [1]चिट्ठितस्स पढमोऽतिगमे ते चेव सेसया तिण्णि ।**
**विदिसि ट्ठितस्स समया [२६–द्वि०]पंचातिगमम्मि जं दोण्णि ॥३८४॥**

**दिसि०** गाहा । इह चतसृणां दिशानामन्यतमस्यां लोकनाल्या [2]बहिरवस्थितस्यैकसमयेनान्तर्नाडीमनुविशन्ति । त्रयोऽन्ये पूर्ववद्दण्डादि । विदिग्व्यवस्थितस्यानुश्रेणिगमनाद् द्वाभ्यां समयाभ्यामन्तर्नाडीमनुविशन्ति । शेषं च समयत्रयं पूर्ववदित्येवं पञ्चभिरप्यापूर्यते लोक इति ॥३८४॥

**चतुसमयमज्झगहणे तिपंचगहणं तुलाइमज्झस्स ।**
**जध गहणे [3]पज्जंतगहणं चित्ता य सुत्तगती ॥३८५॥**

**चतु०** गाहा । अत्र च किल चतुःसमयमध्यग्रहणात् त्रिपञ्चसमयग्रहणमपि प्रत्येतव्यम्, तुलादिमध्यग्रहणवत् । चित्रा च यतः सूत्रस्य गतिरुपलक्ष्यते ॥३८५॥ तद्यथा—

**कत्थइ देसग्गहणं कत्थयि घेप्पंति णिरवसेसाइं ।**
**उक्कमकमजुत्ताइं कारणवसतो णिउत्ताइं ॥३८६॥**

**चतुसमयविग्गहे सति महल्लबंधम्मि तिसमयो जध वा ।**
**मोत्तुं तिपंचसमए तध चतुसमओ इध णिबद्धो ॥३८७॥**

**कत्थइ** गाहा । [**चतुसमय०** गाहा] । यथा वा इह सर्वत्र चतुःसमयविग्रहे सति **भगवत्यां महाबन्धोद्देशके** [अष्टमशतक सू०] त्रिसमयोपदेशस्तद्वदिहापि त्रिपञ्चसमयसम्भवे सति चतुःसमयोपनिबन्ध इति ॥३८६–३८७॥

"लोकस्स व कतिभाए कतिभागो होति भासाए? [३७६]"त्ति यदपदिष्टं तदिदमुच्यते—

**होति असंखेज्जइमे भागे लोगस्स [4] खेत्तगणिएणं ।**
**भासअसंखेज्जइमो भागो पढमादिसमएसु ॥३८८॥**

**होति** गाहा । इह लोकस्य क्षेत्रगणितमङ्गीकृत्यासंख्येयभागे भाषायाः समस्तलोकभाषापेक्षया खल्वसंख्येयभागो भवति । त्रिसमयादिना प्रथमादिषु समयेषु स एव । शेषेष्वपि संख्येयगुणोऽसंख्येयगुण इति सम्भवतः । अभिन्नानां त्वसंख्येयभाग एवासंख्येयभाग इति ॥३८८॥

यत्तूक्तम् "लोकस्स य चरिमंते चरिमंतो होति भासाए"[३७७]त्ति तदिदमुच्यते—

---

१ विट्ठि **जे हे को** । २ नाल्यां यदिर°–इति प्रतौ । ३ पज्जतं ग० **जे** । पज्जन्तग्ग० **को** । ४ °स्स पढमबिईएसु । भासा असंखभागो भयणा सेसेसु समयेसु । इति **तकोहे**संमतः पाठः । तं प्रथमं प्रतौ लिखित्वा तदुपरि हरतालं दत्त्वा उपरिमुद्रितानुसारं संशोधनं कृतम् ।

**आपूरितम्मि लोए दोण्ह वि लोगस्स तह य भासाए ।**
**चरिमंते चरिमंतो चरिमे समयम्मि सव्वत्थ ॥३८९॥**

**आपूरि०** गाहा । इह त्रयाणामपि त्रिसमयादिकालानां पृथक् पृथक् चरमसमयेष्वापूरिते लोकल्लोकान्ते भाषान्तो भवतीति ॥३८९॥

**ण समुग्घातगतीए मीसयसवणं मतं वे डंडम्मि ।**
**जति तो वि तीहिं पूरति समएहिं जतो पराघातो ॥३९०॥**

**ण स०** गाहा । ये हि जैनसमुद्घातगत्या लोकाऽऽपूरणमिच्छन्ति तेषामूर्ध्वमधश्च व्यापनान्न दण्डकाले शेषदिक्षु मिश्रश्रवणमस्ति । उक्तं चाविशेषेण "भासासमसेढीये सद्दं जं सुणति मीसयं सुणती"[३४९]ति । अथ मतमिदं दण्ड एव मिश्रश्रवणं भविष्यति न शेषदिक्ष्विति को दोषः ? यद्येवमतस्त्रिभिरेवापूर्यते लोको न चतुःसमयसम्भवोऽस्ति । कुतः? प्रथमसमयादन्यत्र पराघातद्रव्यसद्भावात् । इह दण्डो हि खल्वूर्ध्वमधश्च गच्छन्नविशेषेण चतुर्दिशमभ्याहन्ति द्रव्याणि । अतः स द्वितीयसमय एव मन्थानमापादयति । तृतीये हि तदन्तरालान्यापूर्यंत इति ॥३९०॥

आह—कथं तर्हि जैनः समुद्घातश्चतुर्भिरापूरयति ? यद्येवं शब्दोऽपि स्यात्को दोषः इति ? उच्यते –

**जइणे ण पराघातो स जीवजोगो य तेण चतुसमयो ।**
**हेतू होज्जाहि तंहिं इच्छा कम्मं सभावो वा ॥३९१॥**

**जइणे** गाहा । इह जैनस्य स्वरूपेणाऽऽपूरणान्न तत्र पराघातद्रव्यचिन्तास्ति । जीवव्यापारश्चासावतस्तत्र हेतुरभिप्रायो वा भवेत् कर्म स्वभावो वेति । शब्दद्रव्याणां त्वनुश्रेणिगमनपराघातस्वभावमात्रादन्यो न हेतुरस्ति चतुःसमयतायामिति ॥३९१॥

आह—अचित्तमहास्कन्धस्तर्हि कथं चतुर्भिरापूरयति ? तद्वच्छब्दोऽपि स्यात् । को दोषः ? उच्यते—

**खन्धो वि वीससाए ण पराघातो य तेण चतुसमयो ।**
**[२७-प्र०]अध होज्ज पराघातो हवेज्जतो सो वि तिसमयियो ॥३९२॥**

**खंधो वि** गाहा । अचित्तमहास्कन्धो वैस्रसत्वाच्चित्रस्वभावोऽपि स्यात् । न चासौ पराघातद्रव्यैरापूरयति । अथ शब्दवत्तत्रापि पराघातद्रव्यव्यापारो भवेदतोऽसावपि त्रिभिरेवापूरयेदिति ॥३९२॥

**एगादिसमादिसमए दंडं कातूण चतुहिं पूरेति ।**
**अण्णे भणंति तं पि य णागमजुत्तिक्खमं होति ॥३९३॥**

---

१ दंड को हे त । २ °तमत्या–इति प्रतौ । ३ °श्च वायनात्तदण्ड –इति प्रतौ । ४ तेहिं त । ५ व्व जे । ६ हविज्ज को हे । ७ °दिसिमा° त ।

**एगदि०** गाहा। अन्ये मन्यन्ते—प्रथमसमये खल्वेकदिशं शब्दो दण्डमारभते, द्वितीये तत्र मन्थानमधोदिशि च दण्डम्, तृतीये तदन्तरालापूरणमितरत्र च मन्थानम्, चतुर्थे च तदन्तरालापूरणमिति। अत्रापि नागमो न युक्तिरिति कृत्वोत्सृज्यते। का ह्यत्र युक्तिर्यदनुश्रेणिगमनस्वभावानां पुद्गलानामेकदिशं गमनं स्यात्? वक्तृप्रयत्नप्रेरणात्तन्मुखानुश्रेणिगमनमिति। एवमपि हि वक्तुरनवस्थानाद्विश्रेणिगमनप्रसङ्गोऽपि स्यात्, चतुःसमयाऽनियमश्च पटहादिशब्दानां चेति ॥३९३॥

> **ईहा अपोह वीमंसा, मग्गणा य गवेसणा।**
> **सण्णा सती मती पण्णा, सव्वं आभिणिबोधियं ॥१२॥३९४॥**

> **होइ अपोहोऽवायो, सती धिती, सव्वमेव मति पण्णा।**
> **ईहा सेसा, सव्वं इदमाभिणिबोधियं जाण ॥३९५॥**

**ईहा** सिलोगो। **होइ** गाहा। अपोहग्रहणादवायः, स्मृतिर्धारणा, मतिः प्रज्ञेति च सर्वमेव, शेषाभिधानानीहा। सर्वमेवेदमाभिनिबोधिकम्, अर्थवचनपर्यायविशेषात् ॥३९४-३९५॥ तत्र—

> **मतिपण्णाभिणिबोधियबुद्धीओ होन्ति वयणपज्जाया।**
> **जा उग्गहादिसण्णा ते सव्वे अत्थपज्जाया ॥३९६॥**

**मति०** गाहा। इह मतिप्रज्ञाभिनिबोधिकबुद्धयो वचनपर्यायाः, समस्तवस्तुप्रत्यायकत्वाद्, अवग्रहादयस्तत्पर्यायवचनानि चैकैकशोऽर्थपर्यायाः, वस्त्वेकदेशगमकत्वात्। अथवा सर्व एवाभिलापा वचनपर्यायाः, अर्थपर्यायास्त्वर्थभेदा एवाभिलाप्या वा सर्व एव वस्तूनामिति ॥३९६॥

> **सव्वं वाभिणिबोधियमिहोग्गहातिवयणेण संगहितं।**
> **केवलमत्थविसेसं पति भिण्णा ओग्गहादीया ॥३९७॥**

**सव्वं** गाहा। अथवा 'सव्वं आभिणिबोधियं' ति इहावग्रहादिवचनानामन्यतमेनापि समस्तमागृह्यते, केवलं त्वर्थविशेषापेक्षयावग्रहादिभेद इति ॥३९७॥ कथम्?

> **उग्गहणमोग्गहो त्ति य अविसिट्ठमवग्गहो तयं सव्वं।**
> **ईहा जं मतिचेट्ठा मतिवावारो तयं सव्वं ॥३९८॥**

---

१ ०न्थानमिति त्रे द°—इति प्रतौ। २ °र्थे इतरत्र च°—इति प्रतौ। ३ °णान्तर्मु°—इति प्रतौ। ४ अवोहो त। ५ इति माभि° जे। ६ बुद्धया या व°—इति प्रतौ। ७ उग्ग° को हे°।

**उग्गह०** गाहा । इह 'अवग्रहणमवग्रहः' इति कृत्वा यथासौ सामान्यस्य तथेहादयोऽपि । यस्य यावत् स्वार्थस्यावग्रहणमित्यतः सर्वमवग्रहः । तथा 'ईह चेष्टायाम्' इति सर्व एवावग्रहादयो मतेश्चेष्टाविशेषा इति सर्वमीहा ॥३९८॥ तथा—

**अवगमणमवायो[2] त्ति य अत्थावगमो तयं भवति सव्वं ।**
**धरणं च धारणं[3] त्ति य तं सव्वं धरणमत्थस्स ॥३९९॥**

**अव०** गाहा । 'अवगमनमवायः' इति सर्व एवावग्रहादयः सामान्यादेरर्थविशेषस्यावगमनप्रकारा इति सर्वमवायः । तथा 'धरणं धारणेति' सर्व एवावग्रहादयोऽर्थालम्बनत्वादप्रच्युतिस्वभावा इति सर्वा धारणेति । तथापि त्वर्थालम्बनविशेषविवक्षयाऽवग्रहादिभेदः । स च प्रागपदिष्ट इति ॥३९९॥

**तं पुण चतुव्विधं णेयभेततो तेण जं तदुवयुत्तो ।**
**आदेसेणं सव्वं दव्वातिचतुव्विधं[२७-द्वि] मुणति ॥४००॥**

**तं पुण** गाहा । इह [4]ज्ञेयभेदात् ज्ञानभेदः, घटादिज्ञानवदवग्रहादिभेदवद्वेति । "तं समासओ चउव्विहं पण्णत्तं तं जहा दव्वओ० दव्वओ णं आभिणिबोहियणाणी आएसेणं सव्वदव्वाइं जाणइ ण पासइ" [नन्दी सू०५९] इत्यादि ॥४००॥

**आतेसो त्ति पगारो ओहादेसेण सव्वदव्वाइं ।**
**धम्मत्थियातियाइं जाणति ण तु सव्वभेतेणं ॥४०१॥**

[**आतेसो** गाहा] । आदेशो नाम प्रकारः । स च सामान्यतो विशेषतश्च । ततः द्रव्यजातिसामान्यादेशेन सर्वद्रव्याणि धर्मास्तिकायादीनि जानीते, न विशेषादेशतो, न सर्वपर्यायादेशत इति यावत् ॥४०१॥

**खेत्तं लोगालोगं कालं सव्वद्धमधव [5]तिविधं ति ।**
**पंचोतइयादीए भावे जं णेयमेवतियं ॥४०२॥**
**आतेसो त्ति व सुत्तं सुतोवलद्धेसु[6] तस्स मतिणाणं ।**
**पसरति तब्भावणया विणा वि सुत्ताणुसारेण ॥४०३॥**

**खेत्तं** गाहा । **आतेसो** गाहा । अथवापदेशः सूत्रं तस्मादादेशादादेशतः सूत्रादित्यर्थः । आह—यदि सूत्रात् कथमाभिनिबोधिकेनेति ? उच्यते—ननु पूर्वमप्येतदुक्तम् [7]अस्य श्रुतोपलब्धेष्वर्थेषु तद्वासनासामर्थ्यात् सूत्रोपयोगनिरपेक्षाऽपि मतिरनुप्रवर्त्तत इति ॥४०२-४०३॥

१ इहाभाव–इति–प्रतौ । २ °वाउत्ति को हे । °वाओ त्ति त । ३ धारणं ति जे त । ४ ज्ञेयभेदात् ज्ञानभेदात् ज्ञानभेदो–इति प्रतौ । ५ तिविधो त्ति जे । तिविधो वि त । ६ सुतवल° हे । ७ °क्तं मस्य–इति प्रतौ ।

तस्येदानीमाभिनिबोधिकस्य नवभिरनुयोगद्वारैः सद्भावादिनिरूपणमुच्यते । तद्यथा

**संतपतपरूवणता दव्वपमाणं च [1]खेत्तफुसणा य ।**
**कालो य अन्तरं भाग-भाव-अप्पा बहुं चेव ॥१३॥४०४॥**
**संतन्ति विज्जमाणं[2] एतस्स पदस्स जा परूवणता ।**
**गतिआतिएसु[3] वत्थुसु संतपतपरूवणा सा तु ॥४०५॥**

**संतप०** गाहा [**संत०** गाहा] इह सदिति विद्यमानमुच्यते । सच्च तत्पदं च सत्पदम्, तस्य प्ररूपणं सत्पदप्ररूपणं तस्य भावः सत्पदप्ररूपणता, साऽस्याभिनिबोधिकस्य । सत्पदप्ररूपणं ता[वत्] गत्यादिषु द्वारेष्वनुगन्तव्यमिति ॥४०४-४०५॥

**जीवस्स य जं सन्तं जम्हा तं तेहि तेसु वा पडति[4] ।**
**तो संतस्स पदाइं ताइं तेसु[5] परूवणता ॥४०६॥**

**जीवस्स** गाहा । अथवा जीवस्य यत्सत् तत् तैस्तेषु वा यतः पद्यतेऽ[6]नुगम्यते अतस्तानि सतः पदानि सत्पदादीनि गत्यादीनि, तैस्तेषु वास्याभिनिबोधिकस्य निरूपणमिति ॥४०६॥ तानि च—

**गति-इन्दिए य काये जोगे वेते कसाय-लेसासुं[7] ।**
**सम्मत्त-णाण-दंसण-संयत[8]-उवयोग-आहारे ॥१४॥४०७॥**
**भासकपरित्त-पज्जत्त-सुहुमसण्णी य भवियचरिमे[9] य ।**
**पुव्वपडिवण्णए या पडिवज्जंते य मग्गणता ॥१५॥४०८॥**

**गति०** गाहा । [**भासक** गाहा ।] एतेषु गत्यादिष्वाभि[नि]बोधिकस्य सम्भवतः सम्प्रति प्रतिपद्यमानाः पूर्वप्रतिपन्नाः तदुभयमभावश्चेति विचिन्त्यते ॥४०७–४०८॥

तत्र येषु सर्वथैवाभावस्त इमे—

**[10]एगेन्दियजातीओ सम्मामिच्छो य जो य स[२८–प्र]व्वण्णू ।**
**अपरित्ता[11] अभव्वा अचरिमा य एते सता सुण्णा ॥४०९॥**

**एगिंदि०** गाहा । इह यावानेकेन्द्रियजातीयः— तद्यथेन्द्रियद्वारे तावदेकेन्द्रिय एव, कायद्वारे च पृथिव्यप्तेजोवायुवनस्पतयः सूक्ष्मा इत्यादि; सम्यग्मिथ्यादृष्टिः; यावाँश्च सर्वज्ञास्तद्यथा गतौ सिद्धः, इन्द्रियद्वारेऽतीन्द्रियः, एवमकायः, अयोगः, अलेश्यः केवलज्ञानी, केवलदर्शनी, नोसंयतः, नोपरित्तः, नोपर्याप्तः, नोसूक्ष्मः, नोसंज्ञी, नोभव्य इति; यश्चापरित्तः;

---

१ खित्तं° को हे । २ °णं पदस्स एतस्स जा त । ३ गइयाईसु हे । ४ पयति को हे । ५ तेसु को हे त । ६ °ते नऽनु°–इति प्रतौ । ७ लेसा य । त । ८ संजतमुव° त । ९ य होइ भवचरिमे जे । १० एगिं° को हे । ११ °त्ताभव्वा जे । °त्ता य अभ° को ।

अभव्यः; अचरमश्चेत्येते नित्यमाभिनिबोधिकेशून्याः, न प्रतिपद्यमानाः, पूर्वप्रतिपत्ता(न्नाः) इत्यर्थः ॥४०९॥

**[2]वियलाऽविसुद्धलेस्सा मणपज्जवणाणिणो अणाहारा ।**
**[3]अस्सण्णी अणगारोवयोगिणो पुव्वपडिवण्णा ॥४१०॥**

**वियला**०गाहा । इह विकलेन्द्रिया द्वीन्द्रियादयः, अविशुद्धलेश्यास्तु भावलेश्या-मङ्गीकृत्य कृष्णनीलकापोतलेश्याः, मनःपर्यायज्ञानिनः, अनाहारकाः, [अ]संज्ञिनः, अनाकारोपयोगिनश्च पूर्वप्रतिपन्ना एव स्युर्न प्रतिपद्यमानाः ॥४१०॥

**सेसा पुव्वपवण्णा णियमा पडिवज्जमाणया भइता ।**
**भयणा पुव्वपवण्णा अकसायाऽवेतया होन्ति ॥४११॥**

**सेसा** गाहा । उक्तेभ्योऽनुक्ताः शेषास्तद्यथा गतौ नारकादयः, इन्द्रिये पञ्चे-न्द्रियाः, काये त्रसकायिका इत्येवमादयः पूर्वप्रतिपन्ना नियमतः, प्रतिपद्यमानास्तु भजनीयाः स्युर्न वेति । अकषायाश्च अवेदकाश्च छद्मस्थाः पूर्वप्रपन्ना न केवलिन इति ॥४११॥

**सम्मत्तणाणरहितस्स णाणमुप्पज्जति त्ति ववहारो ।**
**णेच्छइयणयो भासति उप्पज्जइ तेहिं[5] सहितस्स ॥४१२॥**

**सम्मत्त**० गाहा । व्यवहारनयोऽभिमन्यते मिथ्यादृष्टेरज्ञस्य च ज्ञानमुत्पद्यते, निश्चयनयः सम्यग्दृष्टेर्ज्ञस्य चेति ॥४१२॥

**ववहारमतं जातं ण जायते भावतो कतघडो व्व ।**
**अधवा कतं पि कज्जति कज्जतु णिच्चं ण य समत्ती ॥४१३॥**

**वव**०गाहा । तत्र व्यवहारमतमिदम्—न जातं जायते, भावात् विद्यमानादि-त्यर्थः, चिरन्तनघटवत् । अथ कृतमपि क्रियते; नित्यं क्रियाप्रसङ्गः, कार्यस्यापरिस-मातिप्रसङ्गश्च ॥४१३॥

**किरियावेप्फल्लं[6] [7]पि अ पुव्वमभूतं च दीसते होन्तं ।**
**दीसति दीहो य जतो किरियाकालो घडातीणं ॥४१४॥**

**किरिया**० गाहा । नित्यजातत्वाच्च का कार्यस्य क्रिया ? [क्रिया]वैफल्यप्रसङ्गः, प्रत्यक्षविरोधश्च, यतः पिण्डाद्यवस्थायामभूतं घटादिकार्यं पश्चाद्भवदुपलभ्यते; दीर्घश्च[8] सूत्रचक्रपिण्डादानादिक्रियाकालो लक्ष्यते घटादीनाम् ॥४१४॥

---

१ °कः शू° इति प्रतौ । २ वियला अविसुद्धलेसा को हे । ३ असण्णी हे । ४ °द्यस्वभा°-इति प्रतौ । ५ तेहिं को हे । ६ °वेफल्लं को हे । ७ °ञ्च चिय को हे त । ८ °श्च सूत्रं तु वीरणादा°-इति प्रतौ ।

**णारंभे च्चिय दीसती ण सिवादद्धाय[1] दीसति तदंते।**
**इय ण सवणातिकाले णाणं जुत्तं तदंतम्मि ॥४१५॥**

**णारंभे** गाहा। यदि च विद्यमानमेव कार्यमुत्पद्येतातस्तदारम्भकाल एवोपलभ्येत। न चारम्भसमय एवोपलभ्यते घटादिकार्यम्, न शिवकाले, तदन्ते तूपलभ्यते यतस्तस्मान्न श्रवणादिक्रियाकाले मतिज्ञानमस्ति तत्क्रियापरिसमाप्त्यनन्तरं तु युक्तं घटवदिति ॥४१५॥

**णेच्छइयो णोऽजातं जाति[2] अभावत्ततो खपुप्फं व।**
**अध[3]व अजातं जायति जायतु तो खरविसाणं पि ॥४१६॥**

**णेच्छइयो** गाहा। आह नैश्चयिकनयः—नन्वेतत्समानम्—अजातमपि न जायते खल्वभावत्वात्, खपुष्पवत्। अथाजातमपि जायेत खरविषाणमपि जायतामिति ॥४१६॥

**णिच्चकिरियादिदोसा णणु [२८—द्वि०] तुल्ला असति कट्ठतर[4]गा वा।**
**पुव्वमभूतं च ण ते दीसती किं खरविसाणं पि ॥४१७॥**

**णिच्च०** गाहा। नित्यक्रिया-कार्याऽपरिसमाप्ति-क्रियावैफल्यदोषाश्च नन्वसति समाना[5]:, कष्टतरा वा स्युः, अत्यन्ताभावात् खरविषाणवत्। विद्यमाने तु पर्यायविशेषणात् क्रियादिव्यपदेशोऽपि स्यात्, यथा काशं कुरु पादं कुरु पृष्ठं कुर्विति। नायं खरविषाणे विधिरस्ति। यदि च प्रागभूतं सर्वथा पश्चादुपलभ्यते ततः खरविषाणमपि किन्नोपलभ्यते ॥४१७॥

**पतिसमयु[6]प्पण्णाणं परोप्परविलक्खणाण सुबहूणं।**
**दीहो किरियाकालो जति दीसति किं [7]त्थ कुंभस्स ॥४१८॥**

**पति०** गाहा। इह प्रतिसमयोत्पन्नानां परस्परविलक्षणानां मृदादानादिक्रियाणां पिण्डशिर्विकादिकार्याणां चासङ्ख्येयाणां यदि द्राघीयान् क्रियाकाल उपलक्ष्यते किमत्र कुम्भस्येति ॥४१८॥

**अण्णारंभे अण्णं किध[8] दीसं[9]तु जध घडो पडारंभे।**
**सिवगादयो ण घडओ किध दीसं[10]तु सो तदद्धाए ॥४१९॥**

---

१ °द्धाए दी° को हे त। २ जाय अभा° को हे। ३ अह च को हे। ४ कट्ठतुर° त। ५ °मानात्क°—इति प्रतौ। ६ °मउप्प° को हे। ७ कि च कुं° हे। ८ °शव°—इति प्रतौ। ९ कह को हे। १० दीसइ को हे त।

**अण्णा०** गाहा । यच्चोच्यते—किमारम्भसमय एव नोपलभ्यते इति ? नैवौसाविष्टस्यारम्भकाल इति कथमन्यदन्यारम्भे भविष्यति, यथा घटः पटारम्भ इति ? । यस्य चासा[वा]रम्भकालस्तदारब्धमेवेति । यच्चोच्यते न शिवकादिकाले लक्ष्यत इति । यत एवासौ शिवकादिकालस्तत एव न तत्र घटो युज्यते ॥४१९॥

ननूक्तम्—अन्यकाले न युक्तमिति, यच्चापदिश्यते—यतोऽन्त्यसमय एवोपलभ्यते नान्यत्रातः स खलु भूतः क्रियत इति । अत्रोच्यते—

**अंते[2] च्चिय आरद्धो जति दीसति तम्मि चेव को दोसो ।**
**अकतं व संपति गते किध कीरतु[3] किध व एस्सॅम्मि ॥४२०॥**

**अंते** गाहा । इह योऽन्त्यसमय एवारब्धो यदि तत्रैवोपलभ्यते को दोषः ? समयस्य च निरवयवत्वादारभ्यमाण एवारब्ध इति । यदि च न सम्प्रतिसमय एव क्रियमाणमेव कृतमिति कथं तदतीतेऽनागते वा क्रियेत, तयोरभावत्वात् खरविषाणवत् । स्यान्मतिः—सम्प्रतिसमेयः क्रियमाणकालोऽनन्तरस्तु कृतकालः । न च क्रियमाणमस्तीत्यकृतं क्रियत इति । तत्रेदं त्वमसि प्रॅष्टव्यः—किं भवतः क्रियया क्रियते अन्यथेति ? यदि क्रियया कथमसावन्यत्रान्यत्र [च] कृतम् ? न ह्यन्यत्र च्छेद[न]मन्यत्र च्छित्तिरिति । क्रियोपरमे [ए]व च कृतम्, न क्रियाकाल इति क्रिया हि कार्यस्य विघ्नहेतुः स्यात् । क्रियामन्तरेण चेत् क्रियते, सर्वकृतकप्रसङ्गः, क्रियावैफल्यं चेति ॥४२०॥

**पतिसमयकज्जकोडीणिरवेक्खो घडगताभिलासोऽसि[8] ।**
**पतिसमयकज्जकालं थूलमइ घडम्मि लाएसि ॥४२१॥**

**पति०** गाहा । इह यदपदिश्यते—[आ]रम्भकाल एवोपलभ्येते इति । तॅत्र ननु प्रतिसमयं यद्यस्मिन्नारभ्यते तत्तत्रोपलभ्यते । एवमनुभवतस्तत्रॅोऽपरितोषोऽस्ति, घटगताभिलाषित्वात्, यदतिस्थूलमते ! समयसंख्येयकार्यकोटीकालमेकत्र घटे लगयसि ॥४२१॥

**को चरिमसमयणियमो पढमे च्चिय तो[12] ण कीरते कज्जं ।**
**णाकारणं ति कज्जं तं चेवं तम्मि से समए ॥४२२॥**

**को** गाहा । आह—यदि प्रतिसमयमेवान्यच्चान्यच्च कार्यमारभ्यते, ततः कोऽयं नियमोऽवश्यमन्त्यसमय एवारब्धव्यमीप्सितेन घटादिना, न पुनरादिकार्यवत् प्रथमसमय एवारभ्यत इति ? उच्यते—नाकारणं कार्यमुत्पद्यत इति प्रतिसमयमुत्पत्तिमतां पूर्वं कार्य-

---

१ नैव । साविष्वस्या°—इति प्रतौ । २ अन्ति च्चिय **को हे** । ३ कीरइ **को हे** । ४ एस° **को हे** । ५ °मयं—इति प्रतौ । ६ पृ°—इति प्रतौ । ७ °रवि° **को हे** । ८ °सिं **त** । ९ °भ्यते—इति प्रतौ । १० तत्रत्तिप्र°—इति प्रतौ । ११ °त्र प°—इति प्रतौ । १२ च्चिय जं न दीसए कज्जं । **त** ।

मुत्तरोत्तरस्य कारणीभवति तदुत्तरं च प्रकार्यमित्यतोऽभिलषितस्य घटादेरुपान्त्ये समये कारणमुत्पद्यते, तदेवान्तसमये तत्पर्यायेणोपरमादुपरतं भवति, घटादिकार्यं चोत्पद्यमानमुत्पन्नं भवतीत्येवं सर्वत्र ॥४२२॥

**उप्पाते वि ण णाणं जति तो सो कस्स होउं[1] उप्पाओ ?।**
**तम्मि यं[2] जति अण्णाणं[3] तो णाणं कम्मि कालम्मि ? ॥४२३॥**

**उप्पा०** गाधा। इह यदि ज्ञानोत्पादेऽपि न ज्ञानमतः कस्यासावुत्पादः ? न ह्यविद्यमानस्य खरविषाणस्योत्पादो युक्तः। यदि चोत्पादे खल्वज्ञानमतः कुत्र ज्ञानमस्तु, [न] स्यादुत्पादोपरम इति। ननूक्तमन्यत्रोत्पादोऽप्यत्र चोत्पन्नमित्यादिविरुद्धमिति ॥४२३॥

**को व सवणातिकाले[4] उप्पातो जम्मि होज्ज से णाणं।**
**णाणं च तदुप्पातो य दो वि [२९-प्र०] चरिमम्मि समयम्मि ॥४२४॥[5]**

**को व** गाहा। यच्चोच्यते—श्रवणादिकाले न ज्ञानमस्ति तदन्ते तु युक्तमिति। न ब्रूमः श्रवणादिकाले विज्ञानमिति, ज्ञानोत्पत्तिकाले तु ज्ञानमिति ब्रूमः। आह—ननु श्रवणादय एव ज्ञानोत्पत्तिकाल *इति। उच्यते—यत एव स श्रवणादीनामुत्पत्तिकालः* तत एव न ज्ञानस्य। तत्काले हि तदुत्पत्तिरेव स्यात्। किमत्र ज्ञानस्य ? यत्तूक्तं 'श्रवणादीनां ज्ञानमन्ते युक्तं' तत्सम्यैगेव[6]। वयमप्येवमेव ब्रूमः—श्रवणादीनामन्त्यसमय एव ज्ञानोत्पादश्च ज्ञानं चेति ॥४२४॥

**भासा[7]सलद्धिओ लभति भासमाणो अभासमाणो वा।**
**पुव्वपडिवण्णओ वा उभयं पि अलद्धिए णत्थि ॥४२५॥**

**भासा०** गाहा। सत्पदप्ररूपणाभिहिता ॥४२५॥

द्रव्यप्रमाणमिदानीम्। तत्र—

**किमिहाभिणिबोधियणाणिजीवदव्वप्पमाणमिहं[8] समए।**
**पडिवज्जेज्जंतु ण वा पडिवज्जि[9] जहण्णओ एगो ॥४२६॥**

**किमिहा०** गाहा। किमिहाभि[10]निबोधिकज्ञानपरिणामापन्नानामात्मद्रव्याणां परिमाणमस्मिन् समये ? उच्यते—प्रतिपद्येरन्न वा। प्रतिपत्तौ[11] तु जघन्येनैकः ॥४२६॥

---

१ होइ को हे। २ व जे। वि त। ३ अप्पाणं त। ४ °कालो को हे त। ५ दारं त। * एतच्चिह्नान्तर्गतः पाठोऽत्र आवृत्तः प्रतौ। ६ °म्यग्भावेयमप्ये°—इति प्रतौ। ७ नास्तीयं गाथा तप्रतौ। ८ मिगस° को हे त। ९ पवज्जति जे। पडिवज्ज को। पडिवज्जे हे। १० किमिनाभि°—इति प्रतौ ११ °पन्नो तु—इति प्रतौ।

**खेत्तपलिओवमासंखभाग उक्कोसतो पवज्जेज्जा ।**
**पुव्वपवण्णा दोसु वि पलितासंखेज्जतिमभा[1]ओ ॥४२७॥[2]**

**खेत्त०** गाहा । उत्कृष्टतः क्षेत्रपल्योपमासंख्येयभागः प्रतिपद्येत, पूर्वप्रपन्ना जघन्येनोत्कृष्टेन च पल्योपमासंख्येयभाग एव ॥४२७॥

**खेत्तं हवेज्ज चोद्द[3]सभागा सत्तोवरिं अधे पंच ।**
**[4]लियागतीय[5] विग्गहगतस्स गमणेऽधवाऽऽगमणे ॥४२८॥**

**खेत्तं** गाहा । मतिज्ञानं [6]कियति क्षेत्रे भवेत् ? ऊर्ध्वमलिकागत्या गच्छतः सर्वार्थसिद्धिमागच्छतो वा मतिज्ञानिनश्चतुर्दशभागाः सप्त, अधः पञ्च [7]षष्ठीं गच्छतः प्रत्यागच्छतो वेति । न परमस्ति ॥४२८॥ यतः—

**आगमणं पि णिसिद्धं चरिमातो[8] एन्ति जन्तिरिक्खेसु ।**
**सुरणारगा[9] य सम्मं[10]दिट्ठी जं ऐन्ति[11] मणुएसु ॥४२९॥[12]**

**आग०** गाहा । न सम्यग्दृष्टेः सप्तमी गमनमुक्तमागमनं वा, यतस्तस्यास्तिर्यक्षु प्रत्यागतिर्यतश्च देवनारकाः सम्यग्दृष्टयो मनुष्येषूपप(षूत्प)द्यन्त इति ॥४२९॥

**अवगाहणातिरित्तं पि फुसति बाहिं जधाऽणुणोऽभिहितं ।**
**एगपतेसं खेत्तं सत्तपतेसा य से फुसणा ॥४३०॥**

**अव०** गाहा । इह यत्रावगाहस्तत्क्षेत्रमुच्यते । अवगाहनातोऽतिरिक्तमपि स्पृशति बाह्यतः । क्षेत्रस्पर्शनयोरयं विशेषः– यथैकपरमाणोरेकप्रदेशं क्षेत्रं सप्तप्रदेशं स्पर्शनमिति ॥४३०॥

**अधवा जत्थोगाढो तं खेत्तं विग्गहे मता फुसणा ।**
**खेत्तं च देहमेत्तं संचरतो होति से फुसणा ॥४३१॥**
**होन्ति[13] असंखेज्जगुणा णाणाजीवाण खेत्तफुसणाओ । दारं ।**
**[२९-द्वि०]एक्क[14]स्स वे[15] णेगाण व उवओगंतोमुहुत्तो तु[16] ॥४३२॥**

**अधवा** गाहा । **होन्ति** गाहा । एकजीवक्षेत्रस्पर्शनाभ्यां सर्वमतिज्ञानिनामसंख्येयगुणाः एकस्यानेकेषां वोपयोगतत्कालोऽन्तर्मुहूर्त्तम् ॥४३१–४३२॥

---

१ °ज्जईभा° **को हे** । २ दारं **त** । ३ चोदस° **को हे** । ४ इलि° **को हे** । ५ °गईए वि° **को हे** । गतीए वग्ग° **त** । ६ °नं हि यति–इति प्रतौ । ७ पञ्चसप्ति ग° इति प्रतौ । ८ °माउ एइ **हे** । °माओ एइ **को** । °मातो एइ **त** । ९ °गाओ सम्मद्दि° **त** । १० सम्मद्दि° **को हे** । ११ यंति **को हे** । १२ दारं **त** । १३ होइ **त** । १४ एगस्स **को हे** । १५ °स्स अणे° **को हे त** । १६ °हुत्ताओ ॥ **को हे** ।

लद्धी वि जहण्णेणं एक्केस्सेवं[1] परा इमा होति ।
अध सागरोवमाइं छावट्ठिं सातिरेगाइं ॥४३३॥
दो वारे विजयादिसु[2] गतस्स तिण्णच्चुतेऽधवा[3] ताइं ।
अतिरेगं णरभवियं णाणाजीवाण सव्वद्धं ॥४३४॥[4]
एगस्स जहण्णेणं अन्तरमन्तोमुहुत्तमुक्कोसं ।
पोग्गलपरियट्टद्धं[5] देसूणं दोसबहुलस्स ॥४३५॥
जमसुण्णं तेहिं[6] ततो णाणाजीवाणमन्तरं णत्थि ।दारं ।
मतिणाणी सेसाणं जीवाणमणन्तभागम्मि ॥४३६॥
भावे खयोवसमिए मतिणाणं णत्थि सेसभावेसु । दारं ।
थोवा मतिणाणवितो[7] सेसा जीवा अणंतगुणा ॥४३७॥
णेहत्थतो विसेसो भागप्पबहूण तेण तस्सेव ।
पडिवज्जमाणपडिवण्णयाणमप्पाबहुं[8] जुत्तं ॥४३८॥

**लद्धी** गाहा । **दो वा०** गाहा । **एगस्स** गाहा । **जम** गाहा । **भावे** गाहा । **णेह०** गाहा । नेहाऽर्थतो भागाल्पबहुत्वयोर्विशेष इत्यतः पुनरुक्तादिप्रसङ्गपरिहारार्थमिदमारभ्यतेऽल्पबहुत्वम्— ॥४३३–४३८॥

थोवा पवज्जमाणा असंखगुणिता पवण्णय जहण्णा ।
उक्कोसपतंपवण्णा[9] होन्ति विसेसाधिया तत्तो ॥४३९॥

**थोवा** गाहा । स्तोका मतिज्ञानिनोऽस्मिन् समये प्रपद्यमानाः, पूर्वप्रतिपन्ना जघन्यपदिनस्तेभ्यः एवासंख्येयगुणाः, उत्कृष्टपदिनस्तेभ्यो विशेषाधिकाः ॥४३९॥

अधवा मतिणाणीणं सेसेंय[10]णाणीहिं णाणरहितेहिं ।
[३०-प्र०] कज्जं सहोभएहि य अधवा गच्चैादि[11]भेतेण ॥४४०॥
आभिणिबोधियं समत्तं ॥[12]

**अधवा** गाहा । अथ मतिज्ञानिनां शेषज्ञानिभिः सहाल्पबहुत्वम्, एवमज्ञानिभिरुभयैश्च पृथग्वक्तव्यम् । अथवा गत्यादिभेदेन तद्यथा नारकाणां तिरश्चां मनुष्याणां देवानां च मतिज्ञानिनां केऽल्पा बहवो वेति । स्तोका मनुष्याः, नारकास्तेभ्योऽसङ्ख्येयगुणाः, ततः तिर्यञ्चः देवा इत्येवं सर्वत्र सम्भवतोऽभिधेया इति ॥४४०॥

१ एग° को हे । २ °याईसु को हे । ३ °च्चुए अहव ताइं को हे त । ४ दारं त । ५ °रियट्ट° जे । ६ तेहिं को हे । ७ °विऊ को हे । ८ °ण्णगाण° को हे । ९ °सए य पव° हे । °सए पव° को । १० सेसं णा° जे । ११ गव्वादि° जे । गइयादि त । १२ केवलं जेप्रतौ ।

**लक्खणविधाणविसयाणुयोगदारेहिं वण्णिता बुद्धी ।**
**तदणंतरमुद्दिट्ठं सुतणाणमतो परूवेस्सं ॥४४१॥**

**लक्खण०** गाहा । इह लक्षणतो विधानतो विषयतोऽनुयोगद्वारतश्च बुद्धिरभिहिता । तदन्तरोद्दिष्टं श्रुतज्ञानमिदानीं प्ररूपयिष्यामः ॥४४१॥

**पत्तेयमक्खराइं अक्खरसंजोग जत्तिया लोए ।**
**एवतिया[2] पगडीओ सुअणाणे होन्ति णातव्वा ॥१६॥४४२॥**
**संजुत्ताऽसंजुत्ताण ताणमेक्क[3]क्खरादिसंजोगा ।**
**होन्ति अणन्ता तत्थ वि [4]एक्केकोऽणन्तपज्जाओ ॥४४३॥**

**पत्तेय०** गाहा । **संजुत्ता०** गाहा । [5]इहाऽकारादीनामक्षराणामसंयुक्तानां युक्तानां चैकद्वित्रिसंयोगादयोऽनन्ताः संयोगास्तत्रापि चैकैकोऽनन्तपर्यायः ॥४४२–४४३॥

**[6]संखेज्जक्खरयोगा होन्ति अणंता कधं जमभिधेयं ।**
**पंचत्थिकायगोयरमण्णोण्णविलक्खणमणंतं ॥४४४॥**

**संखेज्ज०** गाहा । आह—कथं संख्येयानामकारादीनामनन्ताः संयोगा इति ? उच्यते—अभिधेयस्यानन्तत्वात् , अन्योऽन्यविलक्षणत्वाच्च ॥४४४॥ तद्यथा–

**अणुतो पदेसवुड्ढीए भिण्णरूवाइं धुवमणंताइं ।**
**जं कमसो दव्वाइं[7] हवन्ति भिण्णाभिधाणाइं ॥४४५॥**

**अणुतो** गाहा । इह परमाणुतस्तावत् खल्वेकैकप्रदेशपरिवृद्ध्याऽनन्तद्रव्यताऽन्योन्यभिन्नलक्षणता चेत्यतोऽभिधेयभेदादभिधानभेदः । तद्यथा परमाणुर्द्विप्रदेशिकः त्रिप्रदेशिक इत्यादि यावदनन्तप्रदेशिक इति । एकैकत्रापि चानेकाभिधानसम्भवः । तद्यथा– अणुर्निरंशो निर्भेदो निरवयवो निःप्रदेशोऽप्रदेश इत्यादि । तथा द्व्यणुकं(कः) द्विप्रदेशाद् द्विभेदो द्व्यवयव इत्यादि सर्वद्रव्यपर्यायेष्वायोजनीयमित्येवं यतोऽभिधेयमनन्तमनेकरूपं चेत्यतः ॥४४५॥

**तेणाभिधाणमाणं अभिधेयाणंतपज्जवसमाणं ।**
**[३०-द्वि]जं च सुतम्मि वि भणितं अणंतगमपज्जयं सुत्तं ॥४४६॥**

**तेणाभि०** गाहा । तेन हेतुनाऽकारादिसंयोगाभिधानपरिमाणमभिधेयानन्तपर्यायप्रमाणतुल्यमिति, यतश्च सूत्रेऽप्युक्तम्—"अणंता गमा अणंता पज्जव त्ति" [ नन्दी सू० ८७ ] ॥४४६॥

**कत्तो मे [8]वंणेतुं सत्ती सुतणाणसव्वपगदीओ ।**
**चोद्दसविधणिक्खेवं सुतणाणे यावि वोच्छामि ॥१७॥४४७॥**

---

१ °विस्सं हे को । २ °त्तिया सुअणाणे पगडिओ होंति त । ३ °मेकक्ख° को हे । ४ एक्केको° हे । ५ इहाककरा°–इति प्रतौ ६ चो० सं° जे । संखि को हे । ७ ०इं इह हव° हे । ८ वण्णेउं को हे त ।

**पयडि त्ति जो तदंसो हेतू वा तस्स तस्स भावो वा ।**
**ते याणंता सव्वे ततो ण तीरंति वोत्तुं जे ॥४४८॥**

**कत्तो मे** गाहा । **पयडि** गाहा । इह प्रकृतिरंशो भेद इत्यनर्थान्तरम्, अथवा प्रकृतिर्हेतुः कारणम्, अथवा प्रकृतिः स्वभावः स्वरूपमिति । श्रुतस्य च प्रकृतयोंशाः स्वभावाश्चानन्तास्तदन्तर्बाह्यनिमित्तापेक्षया च हेतव इत्यतस्ते न शक्यन्ते सर्वेऽभिधातुमिति ॥४४७–४४८॥

**जावंतो वयणपधा सुताणुसारेण केइ लब्भंति ।**
**ते सव्वे सुतणाणं ते याणंता मतिविसेसा ॥४४९॥**

**जावंतो** गाहा । इह ये श्रुतग्रन्थानुसारिणो मतिविशेषास्ते हि सर्व एव श्रुतमित्युक्तं प्राक्, तद्यथा "ते वि य मतीविसेसे सुयणाणब्भंतरे जाण" [१४२]-॥४४९॥

**उक्कोसयंसुतणाणी वि जाणमाणो वि तेऽभिलप्पे वि ।**
**ण तरति सव्वे वोत्तुं ण पहुप्पति जेण कालो से ॥४५०॥**

**उक्को०** गाहा । इह तानुत्कृष्टश्रुतो जानानोऽभिलाप्यानपि सर्वान् [न] भाषते, अनन्तत्वात्, परिमितत्वाच्चायुषः, क्रमवर्तिनीत्वाद् वाच इति ॥४५०॥

**णाणम्मि सुते चोद्दसविधं चसद्देण तध [2]सुतण्णाणे ।**
**अविसद्देणुभयम्मि वि किंचि जधासंभवं वोच्छं ॥४५१॥**

**णाण०** गाहा । 'चोद्दसविधणिक्खेवं सुतणाणे यावि" [४४७]ति श्रुतज्ञाने च, चशब्दाच्छ्रुताज्ञाने च, अपिशब्दादुभयत्र च । तत्र श्रुतज्ञाने सम्यक्श्रुतादि[ज्ञाने], श्रुताज्ञाने उभयत्र दर्शनपरिग्रहविशेषादक्षरानक्षरश्रुतादि ॥४५१॥

**अक्खर सण्णी सम्मं [3]सादीयं खलु सपज्जवसितं च ।**
**गमियं अंगपविट्ठं सत्त वि एते सपडिवक्खा ॥१८॥४५२॥**
**ण क्खरति [4]अणुवयोगे वि अक्खरं सो य चेतणा[5]भावो ।**
**अविसुद्धणयाण मतं सुद्धणयाण[6]क्खरं चेव ॥४५३॥**

**अक्खर०** गाहा । **ण क्खर०** गाहा । 'क्षर सञ्चरणे' न क्षरतीत्यक्षरम्, न प्रच्यवतेऽनुपयोगेऽपीत्यर्थः । तच्च ज्ञानं चेतनेत्यर्थः, नैगमादीनामशुद्धानाम्, क्षरमृजुसूत्रादीनाम् । ॥४५२–४५३॥ कथं पुनः ?

---

१० [1]सुयन्नाणी को हे । २ तध सुतं णाणे जे । तह य अन्नाणे को हे । ३ साइयं को । ४ अणुयोगे त । ५ भावा त । ६ ०याणं क्ख० त ।

**उवयोगे[1] च्चिय णाणं सुद्धा इच्छंति [३१-प्र०] जं ण तव्विरहे ।**
**उप्पातभंगुरा वा जं तेसिं सव्वपज्जाया ॥४५४॥**

**उव०** गाहा । यत उपयोग एव ज्ञानमेषां नानुपयोगे । यतो वानुसमयमुत्पादि भङ्गुरं च सर्वमिति । अशुद्धानामनुपयोगेऽपि ज्ञानम्, अवस्थितं च यतः सर्वमिति । एवं तावदभिलापहेतोर्विज्ञानस्याक्षरता विनाशिता च ॥४५४॥

**अभिलप्पा वि य अत्था सव्वे दव्वट्ठतायें[2] जं णिच्चा ।**
**पज्जाएणाणिच्चा तेण क्खरअक्खरा चेयं[3] ॥४५५॥**

**अभिल०** गाहा । अभिलाप्या अपि हि द्रव्यपर्यायार्थिकाभिप्रायादेवंधर्माण एवेति ॥४५५॥ आह—

**[4]एवं सव्वं चिय णाणमक्खरं जमविसेसितं सुत्ते ।**
**अविसुद्धणयमतेणं को सुतणाणे पतिविसेसो ॥४५६॥**

**एवं** गाहा । एवं सर्वमेव हि ज्ञानमक्षरमयमविशेषतो यतः सूत्रेऽभिहितम्—"सव्वजीवाणं पि य णं अक्खरस्स अणंतभागो णिच्चुग्घाडियओ" [नन्दी सू० ७७] त्ति । तथा च सर्वभावानामक्षरत्वमशुद्धानाम् । अथ श्रुते कोऽतिशयविशेषो यत्तदेवाक्षरमिति ? ॥४५६॥ उच्यते—

**[5]जति वि हु सव्वं चिय णाणमक्खरं तध वि रूढितो वण्णे[6] ।**
**भण्णति अक्खरमिधरा ण खरति सव्वं सभावातो ॥४५७॥**

**जति वि** गाहा । इह यद्यप्यविशेषेण ज्ञानमक्षरं सर्वभावाश्च, तथापि हि रूढिविशेषाद्वर्णोऽक्षरमुच्यते पङ्कजवत् । ॥४५७॥

**वण्णिज्जति जेणत्थो चित्तं वण्णेण वाऽधवा दव्वं ।**
**वण्णिज्जति दाइज्जति भण्णति तेणक्खरं वण्णे[7] ॥४५८॥**

**वण्णिज्ज०** गाहा । वर्ण्यते[8] येन अभिधेयोऽर्थ इति वर्णः चित्रवर्णनवत् । अथवा द्रव्यगुणविशेषवर्णवत् वर्ण्यते निरूप्यते तेन वर्णोऽक्षरमिति ॥४५८॥

**अक्खरसरणेण सरा वंजणमवि वंजणेण अत्थस्स ।**
**अत्थे य खरति[9] ण य जेण खिज्जते[10] अक्खरं तेणं ॥४५९॥**

**अक्खर०** गाहा । अक्षराणीति व्यञ्जनान्याह । 'स्वृ शब्दोपतापयोः' अक्षरस्वरणात् स्वराः, अक्षरसंशब्दनादित्यर्थः ॥४५९॥ किमुक्तं भवति ?

---

१ °गेऽवि य को हे । २ °ताइ जं त । °ट्ठियाए जं को हे । ३ चेव को हे त । ४ चो० एवं जे । ५ आ०जति त । ६ वण्णो को हे ।, ७ वण्णो को हे । ८ °ते तेन नाभि°-इति प्रतौ । ९ °ति जेण ण य खि° त । १० खिज्जइ त हे । खिज्जई को ।

**सुद्धा वि सरंति सयं सारंति य वंजणाइं जं तेणं।**
**होन्ति सरा[1] ण कताइ वि [३१–द्वि०] तेहि विणा वंजणं सरति ॥४६०॥**

**सुद्धा** गाहा। यतः शुद्धा [2]अकारादयः स्वरति(न्ति) अर्थान् संशब्दयति(न्ति), व्यञ्जनानि च स्वरयन्ति, न कदाचिदपि तानन्तरेण व्यञ्जनस्वरणमस्तीत्यतः स्वरा इति। अथवा अक्षरमिति चैतन्यमाह। तत्स्वरणात् स्वराः, तत्संशब्दनादित्यर्थः, यतो नानभिहितेऽन्तर्विज्ञानव्यक्तिरस्तीति ॥४६०॥

**वंजिज्जति जेणत्थो घडो व्व दीवेण वंजणं तो तं।**
**अत्थं पाएण सरा वंजन्ति ण केवला जेणं ॥४६१॥**

**वंजि०** गाहा। व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनम्, बाह्यार्थः व्यञ्जनैरेवाभिव्यज्यते। नापनीतव्यञ्जनमभिधानमर्थप्रत्यायनायालं दृष्टम्, तद्यथा सम्यग्दर्शन-ज्ञान-चारित्राणीति अ अ अ अ अ आ अ आ इ आ ई इ स्वरास्तु केवलाः स्वार्थमेवाभिव्यञ्जयन्ति न बाह्यम्, अन्यत्र संज्ञाभिधानात्, प्राकृताभिधानाद्वा, तद्यथा अ इ आ आ इ आ वेत्यादि। अक्षरस्य नैरुक्तमभिधानमिदमर्थात् क्षरत्यतः क्षरं स्वयं च न क्षरतीत्यक्षरमिति ॥४६१॥

**तं सण्णा-वंजण-लद्धिसण्णितं तिविधमक्खरं तत्थ।**
**सुबहुलिविभेतणियतं सण्णक्खरमक्खरागारो ॥४६२॥**

**तं** गाहा। तदेतदक्षरं त्रिविधम्। तद्यथा—संज्ञाक्षरं व्यञ्जनाक्षरं लब्ध्यक्षरमिति। तत्र संज्ञाक्षरम् अक्षराकारविशेषः। तच्च ब्र(ब्रा)ह्म्यादिलिपीविधानादनेकविधम् ॥४६२॥

**वंजिज्जति जेणत्थो घडो व्व दीवेण वंजणं तो तं।**
**भण्णति भासिज्जंतं सव्वमँगाराति तक्कालं ॥४६३॥**

**वंजि०** गाहा। व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनम्, व्यञ्जनं च तदक्षरं च व्यञ्जनाक्षरम्। सर्वमेव भाष्यमाणमकारादि-हकारान्तम्, अर्थाभिव्यञ्जकत्वाच्छब्दस्य ॥४६३॥

**जो अक्खरोवलंभो सा लद्धी तं च होति विण्णाणं।**
**इन्दियमणोणिमित्तं जो यावरणक्खयोवसमो ॥४६४॥**

**जो अक्खरो०** गाहा। इह योऽक्षरोपलम्भस्तल्लब्ध्यक्षरम्। तच्च विज्ञानमिन्द्रियमनोनिमित्तकं यत् श्रुतग्रन्थानुसारि यश्च तदावरणक्षयोपशमः लब्धिरुपयोगश्चेत्यर्थः ॥४६४॥

**दव्वसुतं सण्णा-वंजणक्खरं भावसुत्तमितरं तु।**
**मतिसुतविसेसणम्मि वि मोत्तूणं दव्वसुत्तं ति ॥४६५॥**

---

१ सरं त। २ अपका°–इति प्रतौ। ३ सव्वकाराइ हे।

**दव्वसुतं : सण्णक्खरमक्खरलंभो त्ति भावसुतमुत्तं ।**
**[1]सोतोवलद्धिवयणेण वंजणं भावसुत्तं च ॥४६६॥**

**दव्व०**गाहा । **दव्व०** गाहा । अत्र पुनः संज्ञाक्षरं व्यञ्जनाक्षरं च द्रव्यश्रुतमुक्तम्, श्रुतविज्ञानकारणत्वात्, इतरद्भावश्रुतम्, लब्ध्यक्षरमित्यर्थः, विज्ञानात्मकत्वात् । यत्रापि हि मति-श्रुतयोर्विशेषोऽभिहितस्तद्यथा[2] "मोत्तूणं दव्वसुयं" इत्यत्रापि द्रव्यश्रुतमिति संज्ञाक्षरमुक्तम्, "अक्खरलंभो य सेसेसु" त्ति अत्र लब्ध्यक्षरम्, "सोतिन्दियोवलद्धी होति सुतं" इत्यत्रोभयसमासोपदेशाद् व्यञ्जनाक्षरम्, लब्ध्यक्षरम् च, शब्दो विज्ञानं चेत्यर्थः ॥४६५–४६६॥

**पच्चक्खमिन्दियमणेहि [3]लभति लिंगेण य क्खरं को [4]वि ।**
**लिंगमणुमाणमण्णे सारिक्खातिं[5] पभासंति ॥४६७॥**

**पच्चक्ख०** गाहा । तच्च लब्ध्यक्षरमिन्द्रियमनोभिः प्रत्यक्षमुपलभ्येत आत्मना लिङ्गेन च । लिङ्गं पुनरनुमानम् । अनुमानहेतौ धूमादावनुमानोपचारं कृत्वोक्तम्, प्रत्यक्षहेतौ घटे प्रत्यक्षोपचारवत् । अन्ये तु सादृश्यादिलिङ्गं पञ्चप्रकारमेवेति मन्यन्ते ॥४६७॥ तद्यथा—

**सारिक्खविवक्खोभयमुवमाग[6]ममेव सव्वमणुमाणं ।**
**किंचिम्मे[7]त्तविसेसेण वा ण तं पंचहा[8] ठाति ॥४६८॥**
**[9]भाय-अहि-अस्सतरा गविआ दट्ठूण भायबितिनउला ।**
**मायपिऊणं सरणं गवयस्स य सुत्तओ सग्गो ॥४६८॥१॥**

**सारिक्ख०** गाहा । सादृश्यादप्रत्यक्षेऽपि स्मृतिरूपमनुमानमुत्पद्यतेऽन्यत्र यथा-भिभ्रातुर्भ्रातरीत्यादि । विपक्षादहेर्नकुल इत्यादि । उभयस्मादश्वतराद्[10] खराश्वयोरित्यादि । उपमानाद्गोर्गवय इत्यादि । आगमात् स्वर्गादाविति । [11]सर्वमेतद् अनुमानं नातिवर्तते । अथ किञ्चिन्मात्रभेदाद्भेदः कल्प्यते, न तत् पञ्चधाऽवस्थास्यत इति ॥४६८॥

**इन्दियमणोणि[३२–प्र०]मित्तं पि णाणुमाणाहि भिज्जते किंतु ।**
**णावेक्खति लिंगंतरमिति पच्चक्खोवयारो त्थ ॥४६९॥**

**इन्दिय०** गाहा । इह यस्मात् साक्षादिन्द्रियमनोनिमित्तं विज्ञानमिदमपि नानुमानाद्भिद्यते । किं तर्हि ? न लिङ्गान्तरमपेक्षते इत्यतस्तत्र प्रत्यक्षोपचार इत्युक्तं प्राक्[12] ॥४६९॥

---

१ सोउव° हे । २ द्रष्टव्या गा०११६ । ३ लब्भइ **को** । ४ कोई **त** । कोइ **को हे** । ५ °क्खाई **को हे त** । ६ °गम एव **जे** । ७ °चिम्मत्त° **को हे त** । ८ पंच वा **जे** । ९ "अत्रान्तरे 'भाय अहियस्स' इत्यादिका गाथा क्वचिद् दृश्यते । सा च प्रक्षेपरूपा मूलटीकयोरगृहीतत्वादुपेक्ष्यते"—**हेटी०** ४७० । एषा गाथा **जे**प्रतौ नास्ति, **को**तप्रत्योरस्ति । १० °दश्वआः ख°–इति प्रतौ । ११ स्वर्ग्रन्थदमनुमानति–इति प्रतौ । १२ द्रष्टव्या ९५तमगाथायाः वृत्तिः ।

**णापुणरुत्ता ण समत्तलिंगसंगाहिया ण य गुणाय ।**
**णियमित[1]परिमाणाए किं च[2] विसेसोवलद्धीए ॥४७०॥**

**णा०** गाहा । न चेयमपुनरुक्ता सर्वत्र सादृश्याविशेषात् । अत्यन्ताप्रत्यक्षोपमाने चागमाऽविशेषात्, न चेयं समस्तलिङ्गविशेषसंग्राहिका, न च गुणायेत्यतः प्रतिनियतपरिमाणया न विशेषोपलब्ध्या कश्चिदर्थ इति ॥४७०॥

**णाधिकताणुवलद्धी[3] न वा विवक्खो त्ति वा ततो सव्वा[4] ।**
**वे[5]च्चादिग्गहणेण यं ण तु जुत्तो तिविधणियमो से ॥४७१॥**
**[6]जति ते अणिअतगहणं किण्णु कतं तिविधमणुवलद्धीए ।**
**अच्चन्तसरिसविच्चुतखपुप्फकणमासपम्हुट्ठे ॥४७१॥१॥**
**[7]जेणतिदूरसमीवा उवघातिंदियमणोणवत्थाणा ।**
**सुहुमभिभववबधाणा समाणहारादणुवलद्धी ॥४७१॥२॥**

**णाधि०** गाहा । या चेयं त्रिविधानुपलब्धिः परिकल्प्यते, तद्यथा—अत्यन्तानुपलब्धिः खरविषाणादीनाम्, सामान्यानुपलब्धिस्तु—उपलक्षितस्यापि माषस्य महति माषराशौ प्रक्षिप्तस्यानुपलब्धिः, विस्मृत्यनुपलब्धिः—अयमसावित्यनुपस्थानमस्मरतः—इत्येतस्या लब्ध्यक्षराधिकारे कोऽवकाशः ? अथोपलब्धिप्रतिपक्षद्वारेणोपन्यस्यते; ततोऽतिसन्निकर्षादिभेदात् सर्वाभिधेया, [आ]दिग्रहणाद्वा । न त्वस्यास्त्रिविधनियमो युक्त इति ॥४७१॥

**अक्खरलंभो सण्णीण होज्ज पुरिसातिवण्णविण्णाणं ।**
**कत्तो अस्सण्णीणं भणितं च सुतम्मि तेसिं पि ॥४७२॥**

**अक्खर०** गाहा । आह—अक्षरोपलम्भः संज्ञिनां श्रद्धीयते पुरुषोऽयमित्यादिवर्णविज्ञानम्, असंज्ञिनां तु न सम्भाव्यते, परोपदेशपूर्वकत्वादक्षरस्य । अपदिष्टं च सूत्रे तेषामपि । अतः कथं तदिति ? ॥४७२॥ उच्यते—

**जध चेतण्णमकित्तिमसस्सण्णीणं तधोहणाणं पि ।**
**थोवन्ति णोवलब्भति जीवत्तमिवेन्दियादीणं ॥४७३॥**

**जध** गाहा । यथैव हि चैतन्यमकृत्रिमस्वभावम्, असंज्ञिनामाहारादिसंज्ञाश्च, तद्वदूहाज्ञानमपि । स्तोकत्वात्तु नोपलभ्यते, पार्थिवादिचैतन्यवत् । संज्ञाव्यञ्जनाक्षरयो-

---

१ नियनियप° **त** । २ किंचि **त** । ३ °द्धीमतावि° **जे** । ४ सक्खाइ गग **को हे** । ५ वा **को हे** । व **त** । ६ एषा गाथा **को**मूले गा० ४६९तमानन्तरं मुद्रिता । **जे**प्रतावस्ति । "अत्र यत् प्रक्षेपगाथान्तरं दृश्यते तत् स्वधिया भावनीयम् उपेक्षणीयं वा"—**हेटी** । ७ **को**मुद्रिते प्रक्षिप्तत्वेन गृहीता । नास्ति **हे**प्रतौ । नास्ति **ता**प्रतौ । द्रष्टव्या **सांख्यका०** ७ ।

श्चोपदेशप्रत्ययत्वाल्लब्ध्यक्षराधिकारे कः प्रसङ्गः ? लब्ध्यक्षरस्य च क्षयोपशमेन्द्रियादिनिमित्तत्वादसंज्ञिनां च सद्भावादनिषेध इति ॥४७३॥

**जध वा सण्णीणमणक्खराणंमसति णरवण्णविण्णाणे ।**

**लद्धक्खरं ति भण्णति किं पि त्ति तधा असण्णीणं ॥४७४॥**

**जध वा** गाहा । यथा चेह संज्ञिनामप्यनक्षरज्ञानां गोपालादीनामसति पुरुषादिवर्णाकृतिविशेषविज्ञाने तद्वर्णश्रवणात्तद्दर्शनाद्वा पुरुषादिविज्ञानसद्भावाल्लब्ध्यक्षरमुच्यते । गौरप्याकारिता सती स्वनाम जानीते शबला बहुलेति, तद्वदसंज्ञिनामपि किमपीति यच्च यावच्च लब्ध्यक्षरमिति ॥४७४॥

**एक्के[३२-द्वि]क्कमक्खरं पुण सपरप्पज्जायभेततो भिण्णं ।**

**तं सव्वदव्वपज्जयरासिपमाणं मुणेतव्वं ॥४७५॥**

**एक्केक्क०** गाहा । इह पुनरेकैकमक्षरमकारादि स्वपरपर्यायभेदात्सर्वद्रव्यपर्यायराशिप्रमाणमुक्तम् ॥४७५॥ आह—के पुनः स्वपर्यायाः परपर्याया वेति ? उच्यते—

**जे लभति केवलो सेसवण्णसहितो व पज्जवेऽगारो**

**ते तस्स सपज्जाया सेसा परपज्जया सव्वे ॥४७६॥**

**जे लभति** गाहा । इह यान् अकारः केवलो लभतेऽन्यवर्णपर्यायान् [ते] हि तस्य स्वपर्यायाः, शेषवर्णसहितो वा तदंशतोऽक्षरसामान्याद्वा, तेऽप्यस्य स्वपर्याया एव । ते चानन्ताः । कथम् ? अभिलाप्यादिबाह्यनिमित्तभेदादन्तर्विज्ञानभेद इति कृत्वा अभिलाप्यादिनिमित्तानन्त्यं चेत्यतोऽनन्तास्त इति । शेषास्तु सर्व एवास्य घटादयः पर्यायाः परपर्याया इति, ते च स्वपर्यायेभ्योऽनन्तगुणा इत्येवमेकैकमक्षरं सर्वपर्यायस्वभावइ(°वमि)ति ॥४७६॥ आह—

**°जदि ते परपज्जाया ण तस्स अध तस्स ण परपज्जाया ।**

**°जं तम्मि असंबद्धा तो परपज्जायववदेसो ॥४७७॥**

**जदि** गाहा । इह स्वपर्यायाणामेव हि तत्पर्यायता युक्ता । ये पुनरमी परपर्यायाः, ते हि—यदि घटादीनाम्, नाक्षरस्य; अथाक्षरस्य, न घटादीनाम्; पर्यायभेदोऽपीत्यतः स्वपर्यायाश्च ते परपर्यायाश्चेति विरुद्धम् । उच्यते—वस्तुनो हि द्वेधा पर्यायाश्चिन्त्यन्ते । तद्यथा सम्बद्धाश्चासम्बद्धाश्च । तत्राक्षरे घटादिपर्यायास्तदस्तित्स्व(त्व)पर्यायेणासम्बद्धा मृदवस्थायां घटाकारपर्यायवत्, नास्तित्वपर्यायेणासम्बद्धा मृदवस्थायां पिण्डाकारपर्यायवत् । एवमक्षरपर्याया अपि घटादिष्वायोज्याः । तत्राक्षर-घटादि-

१ °ण अस° को हे । २ तद्वहुसं°—इति प्रतौ । ३ °रपज्जा° को हे । ४ पज्जा° त । ५ °सिमा° को हे त । ६ °तेऽन्यो वर्णः प°—इति प्रतौ । ७ चो० ज° जे । ८ आ० जं जे ।

पर्यायाणामस्तित्वपर्यायेणासम्बन्धाङ्गीकरणात् परपर्याया(य)व्यपदेशः । अन्यथा हि तत्पर्याया एव त इति । आह-ननु यत एव तेऽस्तित्वेन(ना)संबद्धा, नास्तित्वेन च सम्बद्धास्तत्र,अत एव तस्य न सन्तीति ब्रूषे, न सर्वथैव न सन्तीति । अत एव ते तस्य परपर्याया इत्युच्यन्ते । अन्यथा हि स्वपर्याया इत्युच्यन्ते, अन्यथा हि स्वपर्याया एव ते स्युरिति । अथवा यथैव ते तत्पर्याया विशेषेण [ते तस्येति वचनात्, तथैव परपर्याया अपि विशेषण]विशेष्यादिभावाद् घटरूपादिवत् । आह—न यथा घटस्य रूपादयः सन्तीत्येवं ते तस्य सन्तीति विशेष्य ब्रूमः । किं तर्हि ? ते तस्य न सन्तीति ब्रूमः । भवताऽपि च नास्तित्वसम्बन्धपर्यायोऽङ्गीक्रियते । नास्तित्वेन च कः सम्बन्ध[:] खल्वभावत्वात् खरविषाणवत् ? उच्यते—सद्विषयत्वान्निषेधस्य । ते तस्य न सन्तीति मृत्पर्यायेण न स[न्ति, अ]मृत्पर्यायेण सन्तीत्युक्तं भवति । घटादीनां तु तत्पर्यायेण सन्ति, अन्यपर्यायेण तेषामपि न सन्ति । किञ्चेह कस्य सर्वं सर्वात्मना विद्यते ? न हि घटस्य रूपादयः पटरूपादिभावेन विद्यन्त इति । नास्तित्वसम्बन्धपर्यायोऽपि च नाभावः सर्वथा, पर्यायान्तरव्यपदेशात् प्रागुत्पत्त्यभाववत् । यथा हि मृदादिपर्यायो भाव एव घटाकारभावमात्रविशेषणात् प्रागुत्पत्त्यभावो भण्यते, घटाकारोपरमविशेषणाद्वा कपालादिपर्यायः प्रध्वंसाभाव इति, तद्वत्पर्यायान्तरापन्नं नास्तीति न सर्वथैवाभावः तस्यानभिलाप्यत्वात् । खरविषाणादयोऽप्यनभिलाप्याभावप्रतिपत्त्यर्थमेव कृतसंकेतैरपदिश्यन्ते नाभाव इति।।४७७।।

**चायसपज्जायविसेसणादिणा तस्स जमुवयुज्जन्ति ।**
**सधणमिवासंबद्धं हवंति तो पज्जया तस्स ।।४७८।।**

**चाय०** गाहा । इह परपर्याया अप्यक्षरस्य पर्याया एवेति कुतः ? त्यागोपयोगाद्रोगापनयनादिवत् । इतश्च— तत्पर्याया एव ते, स्वपर्यायविशेषणोपयोगात् । इह यद् यस्य स्वपर्यायविशेषणतयोपयुज्यते तत्तस्य पर्यायो दृष्टः, यथा घटस्य रूपादयः परस्परविशेषकाः पटादिपरपर्यायविशेषका वेति । उपयुज्यन्ते चाकारादिस्वपर्यायाणां घटादिपर्यायाः स्वपर्यायविशेषणतया । अन्यथा हि परपर्यायानन्तरेण स्वपर्यायव्यपदेशो न स्यात् । एवमकाराऽनकाराऽक्षराऽनक्षरश्रुतादिपर्यायेष्वप्यायोजनीयमिति । इतश्च तत्रासम्बद्धा अपि तत्पर्याया एव ते । कुतः ? तदुपयोगात् , स्वधनवत् ।।४७८।।

**सधणमसंबद्धं पि हु चेतण्णं पिव णरे जधा तस्स ।**
**उवउज्जति त्ति सधणं [1]भण्णति तध तस्स पज्जाया ।।४७९।।**

---

१ भणंति जे ।

**सधण०** गाहा । यथेह न च तावत् पुरुषे चैतन्यवत्संबद्धं धनम्, अथ च तदुपयोगात्तस्येति व्यपदिश्यते, तद्वदसम्बद्धा अपि परपर्यायास्तदुपयोगात्तस्येति व्यपदिश्यन्त इति ॥४७९॥

**जध दंसणणाणचरित्तगोअरे[1] सव्वदव्वपज्जाया ।**
**सद्धेयणेयकिरियाफलोवयोगो[2]त्ति भिण्णा वि ॥४८०॥**
**जतिणो सपज्जवा[3] इव सयज्जणिप्फातयँन्ति[4] सधणं व ।**
**आदाणच्चायफला तध सव्वे[5] सव्ववण्णाणं ॥४८१॥**

**जध** गाहा । **जतिणो** गाहा । यथैवेह सम्यग्दर्शन-ज्ञान-चारित्राणां गोचरीभवन्तः सर्वपर्यायाः श्रद्धेय-ज्ञेय-त्यागाऽऽदानादिक्रियाफलोपयोगिनो भिन्ना अपि सन्तो यतेरेव, स्वकार्यनिष्पादकत्वात्, स्वधनवत्; अन्यथा हि श्रद्धेयादीनन्तरेण श्रद्धानादयोऽपि न स्युः, अतः श्रद्धेयादयो यतेरेव, निर्वाणसाधनाङ्गभावात्, सम्यग्दर्शनादित्रयवत्; तथेहाकारादीनामादानत्यागोपयोगाङ्गत्वात् परपर्यायतया सर्वपर्याया इति ॥४८०-४८१॥ न चेदमुच्छास्त्रम्, यतः—

**एक्कं[8] जाणं सव्वं जाणति सव्वं च जाणमेगं ति ।**
**इय सव्वमजाणंतो णाऽगारं सव्वधा मुणति ॥४८२॥**

**एक्कं** गाहा । इह सूत्रोपदिष्टं "जे एगं जाणइ" [आचा० श्रु० १ अ० ३ उ० ४] । किमुक्तं भवति ? यो ह्येकं वस्तूपलभते सर्वपर्यायैः स सर्वमुपलभते । कश्चैकं सर्वपर्यायैरुपलभते ? य एव सर्वं सर्वथोपलभत इति, अतः सर्वमजानानो नाकारं सर्वथोपलभत इति ॥४८२॥

**जेसु अणातेसु जंओ[9] ण णज्जते णज्जते य णातेसु ।**
**[३२-प्र]किधँ[10] तस्स ते ण धम्मा घडस्स रूवादिधम्म व्व ॥४८३॥**

**जेसु** गाहा । इह येष्वपरिज्ञातेषु यो न परिज्ञायते, येषु च परिज्ञातेषु परिज्ञायते, कथं हि ते तस्य पर्यायाः न स्युः ? अपि च पक्षः सर्वपर्यायाः खल्वकारस्य कुतः ? तदुपलब्धौ तदुपलब्धेः तदनुपलब्धौ च तस्यानुपलब्धेः । इह यदुपलब्धौ यदुपलब्धिः, अनुपलब्धौ चानुपलब्धिः ते हि तस्य पर्याया दृष्टाः, यथा घटस्य रूपादय इति ॥४८३॥

**ण हि णवरमक्खरं सव्वदव्वपज्जायमाणमण्णं पि ।**
**जं वत्थुमत्थि लोए तं सव्वं सव्वपज्जायं ॥४८४॥**

---

१ °गोयरा को हे । २ °गित्ति को हे त । ३ °ज्जया को हे । ४ °प्फायगत्ति को हे । ५ तह सव्वेसिं पि वण्णाणं को हे । ६ °माद्यनं त्या°–इति प्रतौ । ७ °पयोगाततत्वापारंपर्या°–इति प्रतौ । ८ एगं को हे । ९ तओ को हे त । १० किध ते ण तस्स त ।

**इधमक्खराधिकारो पण्णवणिज्जा य जेण तव्विसयो ।**
**ते चिंतिज्जंतेवं कतिभागो सव्वभावाणं ॥४८५॥**

**ण हि** गाहा । **इधमक्खराधिकारो** गाहा । न हि न केवलमक्षरमेव सर्वपर्यायप्रमाणमुक्तं किन्तु "जे एगं जाणइ से सव्वं जाणइ" [आचा० श्रु० १ अ० ३ उ० ४] इत्यस्मादागमात् । सर्वमेव हि वस्तु [सर्व]पर्यायम् । इह त्वक्षराधिकारादक्षरमुपदर्श्यते । यच्चाक्षराभिलापविषयाः प्रज्ञापनीयाः, त इह तेन प्रकारेण चिन्त्यते कतिथो भागः सर्वभावानामिति ॥४८४–४८५॥

**पण्णवणिज्जा भावा वण्णाण सपज्जया ततो थोवा ।**
**सेसा परपज्जाया तोऽणंतगुणा णिरभिलप्पा ॥४८६॥**

[2]**पण्ण०** गाहा । यतो वर्णस्वपर्याया अभिलाप्या एव प्रज्ञापनीयाः, ततः स्तोकाः, अनभिलाप्यास्तेभ्योऽनन्तगुणाः परपर्यायत्वात् । यतः सर्वस्य वस्तुनः स्वपर्यायेभ्योऽनन्तगुणाः परपर्यायाः, अन्यत्राकाशात् । तस्य हि स्वपर्यायाणामनन्तभागः परंपर्यायाः, सर्वतोऽनन्तत्वात् ॥४८६॥

**णणु सव्वाकासपएससपज्जया वण्णमाणमादिट्ठं ।**
**इह सव्वदव्वपज्जायमाणगहणं किमत्थं ति ? ॥४८७॥**

**णणु** गाहा । आह—ननु सूत्रोपदिष्टमक्षरपर्यायपरिमाणमिदं "सव्वागासपएसग्गं सपएसेहिं अणंतगुणियं पज्जवग्गं[5] अक्खरं लब्भइ" [नन्दी सू० ७६]त्ति । इह तु सर्वद्रव्यपर्यायपरिमाणमुच्यते तत्किमर्थमिति ॥४८७॥

[6]**थोव त्ति ण णिद्दिट्ठा इधरा धम्मत्थिकातिपज्जाया ।**
**के सपरपज्जयाणं भवंतु किं होंतु वाऽभावा ॥४८८॥**

**थोव त्ति** गाहा । उच्यते—स्तोकत्वान्न सूत्रे धर्मास्तिकायादिपर्याया निर्दिष्टाः साक्षात्, अर्थतस्तु "जे एगं जाणइ से सव्वं जाणइ" [आचा० १.३.४.]इत्यस्मादागमादक्षरस्य परपर्यायतायामवरुद्धयन्ते । अन्यथा हि ते स्वपरपर्यायाणां के स्युः ? किन्नु खलु [अ]भावतामापद्यते ? अथवा काम[म]स्यानन्तगुणिताः प्रदेशास्तेऽपि तत्रैवावरुद्धयन्त इति ॥४८८॥

**किमणंतगुणा भणिता जमगुरुलहुपज्जया पदेसम्मि ।**
**एक्केकम्मि अणंता पण्णत्ता वीतरागेहिं ॥४८९॥**

---

१ इहक्ख° **को हे** । २ ते वण्ण–इति प्रतौ । ३ °ज्जाया **को हे** । ४ किमिच्छंति **त** । ५ 'पज्जवक्खरं णिप्फज्जइ' इति **नन्दी**पाठः । ६ थोवं ति **जे** । **को** । ७ होतु वाऽभावो **को हे** ।

**किम०** गाहा। आह—किं पुनः सर्वाकाशप्रदेशानामनन्तगुणतेति ? उच्यते—यस्मादेकैक [ए]वाकाशप्रदेशेऽनन्ता[1] अगुरुलघवः पर्यायाः सर्वज्ञोक्ता इति ॥४८९॥

**तत्थाऽविसेसितं णाणमक्खरं इध सुतक्खरं पगतं।**
**तं किध केवलपज्जायमाणतुल्लं हवेज्जा हि ॥४९०॥**

**तत्थाऽवि०** गाहा। आह-"सव्वागासपएसग्गं अणंतगुणियं पज्जवग्गं अक्खरं णिप्फज्जइ" [नन्दी सू० ७६] इत्यत्राविशेषितमेवाक्षरमुक्तमविशेषाभिधानाच्च तत् केवलं गम्यते। इह तु श्रुताधिकारादकारादिप्रक्रुतमतस्तत्कथं केवलपर्यायपरिमाणतुल्यं भवेत् ? उच्यते—ननु तत्राप्यपर्यवसितश्रुताधिकारादकाराद्येव गम्यते। अथ मतिः—"सव्वजीवाणं पि य णं अक्खरस्स अणंतो भाओ णिच्चुग्घाडिओ" [नन्दी सू० ७७] त्ति सर्वजीवग्रहणान्न तच्छ्रुतं यतः समस्तद्वादशाङ्गविदां तत्समस्तमिति। यद्येवं केवलस्यापि न सर्वजीवानामेवानन्तभागोऽवतिष्ठते, सर्वज्ञसद्भावात्। अतो न तत् केवलाक्षरमपि [इति] कस्यासावनन्तभागोऽस्तु ? अथाऽविशेषेण सर्वजीवग्रहणे सत्यपि प्रकरणात्, अपिशब्दाद्वा केवलिनो विहायान्येषामनन्तभागो गम्यते। अत एव किं न श्रुतात्मकमक्षरमङ्गीकृत्य समस्त[द्वा]दशाङ्गविदोऽपि विहायान्येषामनन्तभागो गम्यते ? तस्मात् स्वपरपर्यायभेदादुभयमप्यविरुद्धमिति वक्ष्यामः ॥४९०॥ तथाप्यस्तु तावत्त-त्राविशिष्टमक्षरं केवलम्, इह च श्रुताक्षरमकारादि। तथापि हि—

**सयपज्जएहि तं केवलेण तुल्लं ण होज्ज ण परेहिं।**
**[३३-द्वि] सपरप्पज्जाएहि तु तं तुल्लं केवलेणेव ॥४९१॥**

**सय०** गाहा। स्वपर्यायैस्तदकारादि केवलपर्यायतुल्यं न भवेत्, सर्वपर्याया-नन्तभागत्वात्, केवलस्य च सर्वपर्यायप्रमाणत्वात्। नापि परपर्यायैस्तेषामपि सर्वपर्या-यानन्तभागोनत्वात्। स्वपरपर्यायैस्तु तत्केवलपर्यायतुल्यमेव, केवलंवत् तस्यापि सर्वद्रव्य-पर्यायप्रमाणत्वात् ॥४९१॥ आह—यद्येवं केवलस्यास्य च को विशेषः ? उच्यते—अस्ति विशेषो यतः—

**अविसेसकेवलं पुण सयपज्जाएहि चेव तं तुल्लं।**
**जं णेयं पति तं सव्वभावंवावारविणिजुत्तं ॥४९२॥**

**अवि०** गाहा। इह यदविशेषकेवलं सर्वोपलब्धिस्वभावमित्यर्थः तत्स्वपर्यायै-रेव तत्तुल्यम्। तदित्यनेन तत्सूत्रेऽपदिष्टं सर्वाकाशप्रदेशाग्रमनन्तगुणितमक्षरपर्यायपरि-माणं तदभिसम्बध्यते सर्वपर्यायपरिमाणमित्यर्थः। कुतः ? सर्वभावव्यापारविनियोगित्वात् केवलस्य। ज्ञेयं प्रत्येतदेवम् ॥४९२॥ अन्यथा हि—

१ न्तान् अ°–इति प्रतौ। २ सर्वत्र इति प्रतौ। ३ °रपज्जा°–को हे। ४ °हिं उ तुल्लं तं के° हे। ५ केवलसर्वमेवायप्रमा°–इति प्रतौ। ६ तत्त° को हे। ७ भावव्वावा° को हे।

**वत्थुसभावं पति तं पि सपरपज्जायभेततो भिण्णं ।**
**तं जेण जीवभावो भिण्णा य ततो घडातीया ॥४९३॥**

[1]**वत्थु०** गाहा । वस्तुस्वभावं प्रति केवलमपि स्वपरपर्यायभेदम्, अकारादिवत् । यतः प्रतिनियतजीवस्वभावं[2] केवलम्, न घटादिवस्तुस्वभावम्, अतः कथं हि तस्य घटादिपर्यायाः स्वपर्यायाः स्युः, सर्वसंकरैकत्वादिप्रसङ्गादिति ॥४९३॥

**अविसेसितं पि सुत्ते अक्खरपज्जायमाणमादिट्ठं ।**
**सुअकेवलक्खराणं एवं दोण्हं पि ण विरुद्धं ॥४९४॥**

**अवि०** गाहा । एवमविशिष्टमपि सूत्रे यदाकाशप्रदेशाग्रमनन्तगुणितमक्षरपर्यायपरिमाणमुक्तं तत् श्रुतस्य केवलस्य वा सर्वथा न विरुद्धमर्थतः । कथम्? स्वपरपर्यायानङ्गीकृत्याकारादेरक्षरस्य समस्तस्य वा श्रुतस्य, ज्ञेयतया हि स्वपर्यायानेवाङ्गीकृत्य केवलस्य, वस्तुस्वभावतश्च परपर्यायानिति । ॥४९४॥

**तस्स तु अणंतभागो णिच्चुग्घाडो[3] त्ति सव्वजीवाणं ।**
**भणितो सुतम्मि केवलिवज्जाणं तिविधभेतो वि ॥४९५॥**

**तस्स** गाहा । तस्येति सर्वपर्यायपरिमाणस्याक्षरस्यानन्तभागो नित्योद्घाटितो नित्याऽप्रावृत इति । यः सर्वजीवानामकेवलिनां सूत्राभिहितः त्रिविध इति जघन्यमध्यमोत्कृष्टः ॥४९५॥

**सो पुण सव्वजहण्णो चेतण्णं णावरिज्जति कताई[4] ।**
**उक्कोसावरणम्मि वि जलदच्छण्णक्कभासो[5] व्व ॥४९६॥**

**सो** गाहा । स पुनः सर्वजघन्यश्चैतन्यमात्मनः । तद्धि न कदाचिदप्याव्रियते उत्कृष्टेऽप्यावरणे । यथाह(हि) महामेघछन्नस्यापि सवितुर्या च यावती च प्रभाऽवतिष्ठते तद्वत्स्वावृतस्याप्यात्मनश्चैतन्यमिति ॥४९६॥

**थीणद्धिसहितणाणावरणोदयतो स पत्थिवादिणं ।**
**बेइंदियादियाणं परिवड्ढति[6] कमविसोधीए ॥४९७॥**
**उक्कोसो उक्कोसयसुतणाणिंवितो[7] तओ[8]ऽवसेसाणं ।**
**होति विमंज्झो[9] मज्झे च्छट्ठाणगताण पाएण ॥४९८॥ दारं ॥**

**थीण०** गाहा । [ **उक्कोसो** गाहा ] स च किल जघन्योऽनन्तभागः स्त्यानर्द्धिवेदनीयोदयसहितादुत्कृष्टात् ज्ञानावरणोदयात् पार्थिवादीनामेकेन्द्रियाणां क्रमशो

१ हत्थु–इति प्रतौ २ °वके°–इति प्रतौ । ३ °ग्घादो त्ति जे । °डो य स° को हे । ४ कयाई को । ५ °ण्णक्खभा° जे । ६ °डुए हे । ७ °णठितो जे । ८ तओ वि° जे । ९ विमज्झा मज्झो जे ।

विशुद्धयमानस्ततश्च द्वीन्द्रियादीनामिति । स एवोत्कृष्टः समाप्तश्रुतस्य । मध्ये विमध्यमः षट्स्थानपतितानां प्रायेण केषाञ्चित्तुल्योऽपीति । उक्तमक्षरम् ॥४९७–४९८॥ अनक्षर-श्रुतमिदानीम्--

**ऊससितं णीससितं णिच्छूढं[1] खासितं [ ३४–प्र० ] च छीतं च ।**
**णिस्सिंघितमणुसारं[2] अणक्खरं च्छेलियातीयं[3] ॥१९॥४९९॥**
**ऊससिदादी दव्वसुतमेत्तमधवा सुतोवयुत्तस्स ।**
**सव्वो च्चिय वावारो सुतमिह तो किण्ण[4] चेट्ठा वि ॥५००॥**

**ऊससितं** गाहा । [ **ऊससिदा०** गाहा ] इहोच्छ्वसितादिद्रव्यश्रुतविज्ञानोपयुक्तस्यात्मनः सर्वात्मनैकोपयोगत्वात् सर्व एव व्यापारः श्रुतम्, उच्छ्वसितादयोऽपि श्रुतमिति । आह–यद्येवं किं न चेष्टापि श्रुतम् ? उच्यते–किं वा न श्रुतम् ? ननूक्तं तदुपयुक्तस्य सर्व एव व्यापारः श्रुतमिति ॥४९९–५००॥ किन्तु–

**[5]रूढीय तं सुतं सुव्वति त्ति चेट्ठा ण सुव्वति कताइ ।**
**अधिगमया वण्णा इव जमणुस्साराद[6]यो तेणं ॥५०१॥**[6]

**रूढी०** गाहा । इह रूढ्याऽन्वर्थतया वा श्रूयत इति श्रुतमुच्छ्वसितादि, न चेष्टा, तदभावात् । अनुस्वारादयस्तु अर्थगमकत्वात् एवं(व) श्रुतमिति ॥५०१॥ संज्ञिश्रुतमसंज्ञिश्रुतं चेदानीम्—

**सण्णिस्स सुतं जन्तं सण्णिसुतं सो य जस्स सा सण्णा[7] ।**
**होति तिधा कालियहेतुदिट्ठिवातोवदेसेणं ॥५०२॥**

**सण्णि०**गाहा । [ संज्ञिनः श्रुतं ] संज्ञिश्रुतम्, असंज्ञिनः श्रुतमसंज्ञिश्रुतमिति । तत्र संज्ञा अस्यास्तीति संज्ञी । स च कालिकहेतुदृष्टिवादोपदेशात् त्रिविधः ॥५०२॥ आह—

**[8]जति सण्णासंबन्धेण सण्णिणो तेण सण्णिणो सव्वे ।**
**[9]एगेन्दियाण वि अ जं सण्णा दसविधा भणिता ॥५०३॥**

**जति** गाहा । इह यदि संज्ञासम्बन्धात् संज्ञिनो[ऽभि]प्रेताः, ततः सर्व एव संज्ञिनः, न नामाऽसंज्ञिनः सन्ति, यतः सर्वजीवानामेकेन्द्रियादीनामपि हि दशाहारादयः संज्ञा पठ्यन्ते ॥५०३॥

**[10]थोवा ण सोभणा वि अ जं सा तो णाधिकीरते इधइं ।**
**करिसावणे ण धणवण्ण रूपवं मुत्तिमेत्तेणं ॥५०४॥**

---

१ उस्स° त । २ निच्छूढं जे । ३ °याईय को । ४ किण्णु जे त । ५ कोप्रतावियं गाथा ४९९तमगाथायाः पूर्वं विद्यते । ६ दारं त । ७ सामण्णा त । ८ चो० जति जे । ९ एगिं°-को हे । १० आ० थोवा जे ।

**थोवा** गाहा। इह या हि तत्र[1] संज्ञा सातिस्तोकत्वान्नाधिक्रियते। न हि कार्षापणमात्रेण धनेन धनवानिति व्यपदेशो युक्तः। आहारादिसंज्ञाश्च भूयस्योऽपि नाधिक्रियन्तेऽनिष्टत्वात्। न हि मूर्त्तिमात्रसद्भावाद्रूपवानिति व्यपदेशो युक्तः ॥५०४॥

**जध बहुदव्वो धणवं पसत्थरूवो य रूववं होति ।**
**[2]महतीय सोभणाए[3] य तध सण्णी णाणसण्णाए ॥५०५॥**

**जध** गाहा। यथेह बहुद्रव्यो धनवानित्युच्यते, प्रशस्तमूर्त्तिसम्बन्धाच्च रूपवानिति। एवमिह महती शोभना च संज्ञाऽधिक्रियते—संज्ञानं संज्ञा मनोविज्ञानमित्यर्थः। तत्सम्बन्धात् संज्ञिन इति ॥५०५॥

**इह दीहकालिकी [३४-२] कालिकि त्ति सण्णा जया सुदीहं पि ।**
**संभरइ भूतमेस्सं[4] चिंतेइ य किध णु कायव्वं ॥५०६॥**

**इह** गाहा। इहादिपदलोपाद्दीर्घकालिकीत्युच्यते। कालिकी चासौ संज्ञा च पुंवद्भावात्कालिकसंज्ञेति[5] यया सुदीर्घमपि कालमनुस्मरति भूतम्, एष्यन्तं[6] चानुचिन्तयति—कथं तत्र कर्त्तव्यमिति ॥५०६॥

**कालियसण्णि त्ति तओ जस्स तई सो य जो मणोजोग्गे ।**
**खंधेऽणंते घेत्तुं मणणति तल्लद्धिसंपण्णो[7] ॥५०७॥**

**कालि०** गाहा। स कालिकसंज्ञीत्युच्यते यस्यासौ संज्ञी(ज्ञे)ति। स च योऽनन्तान्मनोयोग्यान् स्कन्धानादाय मन्यते। [8]तल्लब्धिसम्पन्न इति मनोविज्ञानावरणक्षयोपशमादिसमेतः ॥५०७॥

**रूवे जधोवलद्धी चक्खुमतो दंसिते पयासेण ।**
**तध छव्विधोवयोगो मणदव्वपयासिते अत्थे ॥५०८॥**

**रूवे** गाहा। यथा रूपोपलब्धिश्चक्षुष्मतः प्रदीपादिप्रकाशपृ(पु)ष्टेन तद्वत् क्षयोपशमलब्धिमतो मनोद्रव्यप्रकाशपृष्टन(पुष्टेन) मनःषष्ठैरिन्द्रियैरर्थोपलब्धिरिति ॥५०८॥

**अविसुद्धचक्खुणो जध णातिपयासम्मि रूवविण्णाणं ।**
**[9]असण्णिणो तधत्थे थोवमणोदव्वलद्धिमतो ॥५०९॥**

**[10]जध मुच्छितादियाणं अव्वत्तं सव्वविसयविण्णाणं ।**
**एगेन्दियाणमेवं सुद्धतरं बेन्दियादीणं ॥५०९॥१॥**

---

१ तत्राह सं°—इति प्रतौ। २ महवीय जे। महईइ त। महईए को हे। ३ सोहणाइ य त। सोहणाअय जे। ४ °मिस्स को हे। ५ अत्र 'यया सुदीर्घमपि कालसंज्ञेति'—इत्यधिकः पाठो वर्तते प्रतौ। ६ भूतमेषां तं चा° इति प्रतौ। ७ °ण्णा जे। ८ न ल°—इति प्रतौ। ९ असण्णि को हे। १० कोट्ट्यटीकयोरेषा गाथा वर्तते। जेप्रतावस्ति किन्तु स्वोपज्ञवृत्तौ नास्ति सूचनमस्याः।

**अविं०** गाहा। यथेहाऽविशुद्धचक्षुषो मन्दमन्दप्रकाशे रूपोपलब्धिः, एवमसंज्ञिनः पञ्चेन्द्रियसंमूर्च्छनजेभ्यः। ततः संज्ञिनामतिप्रकृष्टतरमिति। आह—कुतः पुनश्चैतन्यसमानत(ता)यामात्मनामिदमुपलब्धिनानात्वम्। उच्यते—सामर्थ्यभेदात्। स च क्षयोपशमानन्त्यात् ॥५०९॥ तथा—

**तुल्ले छेदयभावे[1] जं सामत्थं तु चक्करतणस्स।**
**तं तु जधक्कमहीणं ण होदि सरपत्तयादीणं[2] ॥५१०॥**

**तुल्ले** गाहा। इह छेदकत्वे तुल्ये चक्रवर्त्तिनश्चक्रस्य यत्सामर्थ्यं तत्क्रमशो हीयमानसामर्थ्यानां न शरूपत्रादीनामस्ति ॥५१०॥

**[3]ईय मणोविसईणं जा पडुता होति ओग्गहादीसु[4]।**
**तुल्ले चेतणभावे अस्सण्णीणं ण सा होति ॥५११॥[5]**

**ईय** गाहा। एवमेव हि मनोविषयिणां संज्ञिनामित्यर्थः, चैतन्ये सति या पटुताऽग्रहादिषु क्रमशो हीयमानाऽसावसंज्ञिनामिति ॥५११॥

**जे पुण संचिंतेतुं इट्ठाणिट्ठेसु विसय[३५-प्र०]वत्थूसु।**
**वंत्तंति णियत्तन्ति य[6] सदेहपरिपालणाहेतुं[7] ॥५१२॥**

**जे पुण** गाहा। इह ये पुनः सञ्चिन्त्य सञ्चिन्त्येष्टेषु[8] विषयवस्तुष्वाहारादिष्वनुप्रवर्त्तन्तेऽनिष्टेभ्यश्च निवर्त्तन्ते स्वदेहप्रतिपालनाहेतोः ॥५१२॥

**पाएण संपते[9] च्चिय कालम्मि न यातिदीहकालण्णा।**
**ते हेतुवातसण्णी णिच्चेट्ठा होंति अस्सण्णी ॥५१३॥[10]**

**पाएण** गाहा। प्रायेण च साम्प्रत एव काले नातीताऽनागताऽवलम्बिनः, केचिच्च कालान्तरावलम्बिनोऽपि नातिदीर्घकालानुसारिणस्ते हेतुवादसंज्ञिनो विकलेन्द्रियादयः। कारणं निमित्तमित्यनर्थान्तरम्। संज्ञानप्रत्ययादनुमीयन्ते संज्ञिन इति। यतो नाऽसञ्चिन्त्येष्टेऽनुप्रवृत्तिरनिष्टाद्वा विनिवृत्तिरस्ति। तदभावादसंज्ञिनो निश्चेष्टाः पार्थिवादयः ॥५१३॥

**सम्मदिट्ठी सण्णी संते णाणे खयोवसमियम्मि[11]।**
**अस्सण्णी मिच्छत्तम्मि दिट्ठिवादोवदेसेणं ॥५१४॥**

**सम्म०**गाहा। इह दृष्टिर्दर्शनम्, वदनं वादः, दर्शनवादमङ्गीकृत्य सम्यग्दृष्टिः संज्ञी क्षायोपशमिकज्ञाने वर्त्तमानो नेतरत्र, मिथ्यादृष्टिरसंज्ञीति ॥५१४॥ आह—

---

१ छेयगभा° को हे। २ °त्तमाईणं को हे त। ३ इय को। ४ उग्ग० को हे। ५ दारं त। ६ वट्टंति नियट्टंति को हे त। ७ परिवाल° त। ८ °न्त्ये स्वेषु—इति प्रतौ। ९ संपयं त। १० दारं त। ११ खउव० हे।

सेयणाणी किं सण्णी ण होति[2] होति व खयोवसमणाणी ? ।
खेण्णा सरणमणागतचिंता य ण सा जिणे जम्हा ॥५१५॥

खय० गाहा । क्षायिकज्ञानी केवली स किं न संज्ञी, क्षायोपशमिकज्ञानी वा संज्ञीति ? उच्यते–अतीतस्मरणमनागतानुचिन्तनं च संज्ञेति व्यपदिश्यते। न चासौ जिनेऽस्ति सर्वदा सर्वावभासकत्वात् ॥५१५॥ आह—

मिच्छो[4] हिताहितविभागणाणसण्णासमण्णितो[5] कोई ।
दीसति सो किमसण्णी [6]सण्णा जमसोहणा तस्स ॥५१६॥

मिच्छो गाहा । इह मिथ्यादृष्टिरपि कश्चिदैहिकादिहिताहितविभागव्यापार-ज्ञानसंज्ञासमेतो लक्ष्यते। किमसावसंज्ञीत्युच्यते ? तत्संज्ञायाः कुत्सितत्वात् ॥५१६॥

जध दुव्वयणमवयणं कुच्छितसीलं असीलमसतीए ।
भण्णति तध णाणं पि हु मिच्छद्दिट्ठिस्स अण्णाणं ॥५१७॥

जध गाहा । यथेह कुत्सितं वचनमवचनं कुत्सितं वा शीलमशीलमित्युच्यते असत्याः, तद्वत् ज्ञानमपि मिथ्यादर्शनपरिग्रहान्मिथ्यादृष्टेरसंज्ञानम् ॥५१७॥ एतत्कुतः ?

सतसतविसेसणातो भवहेतुजतिच्छियोवलंभातो ।
णाणफलाभावातो मिच्छद्दिट्ठिस्स अण्णाणं ॥५१८॥

सत० गाहा । पूर्ववदायोज्यम् [गा० ११४] ॥५१८॥

ऊहो ण हेतुए[11] हेतुओ[12] ण कालम्मि [३५-द्वि०] भण्णते सण्णा[13] ।
जह कुच्छितत्तणातो तध कालो दिट्ठिवादम्मि ॥५१९॥

ऊहो गाहा । इह यथोहज्ञानं न संज्ञा कुत्सितत्वाद्धेतूपदेशसंज्ञेति व्यप-दिश्यते, हैतुकी च कालिकोपदेशे, तद्वत् कालिकोपदेशसंज्ञाऽपि न दृष्टिवादोपदेश इति ॥५१९॥

पंचण्हमूहसण्णा हेतुं[14]तसण्णा य [15]बेन्दियातीणं ।
सुरणारगगब्भुब्भवजीवाणं कालिकी सण्णा ॥५२०॥
[16]छतुमत्थाणं सण्णा सम्मदिट्ठीणं[17] होति सुतणाणं ।
मतिवावारविमुक्का सण्णातीता तु केवलिणो ॥५२१॥

---

१ चो० खय° जे । २ होई त । ३ आ० सण्णा जे । ४ मिच्छा जे । ५ कोइ जे हे । ६ °ण्णो आसण्णा त । ७ 'आह' इति पुनर्लिखितमत्र प्रतौ । ८ जहिच्छियो° त । जदिच्छि को हे । ९ मिच्छद्दि° को हे त । १० ओहो को । ११ हेतुपए त । १२ हेउई हे । १३ सण्णो को । १४ हेतुस° त । हेऊस° को । हेउस° हे । १५ बिइन्दि° त । बेइंदि° हे । बिइंदि° को । १६ छउम° को हे त । १७ ट्ठीए को ।

**पंचण्ह०** गाहा । **च्छतु०** गाहा । पञ्चानामेकेन्द्रियनिकायानामूहसंज्ञैव, [1]हैतुक्येव द्वीन्द्रियादीनामापञ्चेन्द्रियसम्मूर्च्छनजेभ्यः, कालिकी देवनारकाणाम्, गर्भजानां च, दृष्टिवादोपदेशात् श्रुतं सम्यग्दृष्टीना[म्], मतिव्यापारविरहान्न केवलिनां संज्ञास्तीति ॥५२०–५२१॥ आह—

**मोत्तूण हेतुकालियसम्मत्तकमं जधुत्तरविसुद्धं ।**
**किं कालियोवदेसो कीरति आतीय सुतम्मि ॥५२२॥**

**मोत्तूण** गाहा । इह हेतुकालिकदृष्टिवादोपदेशक्रमं यथोत्तरविशुद्धं विहाय किमुत्क्रमेण कालिकोपदेशाभिधानं सूत्रे इति ? ॥५२२॥ उच्यते—

**सण्णि त्ति असण्णि त्ति य सव्वसुते कालियोवदेसेणं ।**
**पायं संववहारो कीरति तेणातिएँ[3] स कतो ॥५२३॥[4]**

**सण्णि** गाहा । इह संज्ञी [अ]संज्ञीति यतः सर्वत्र सूत्रे समनस्कामनस्कयोर्ग्रहणं प्रायेण । अतस्तत्संव्यवहारज्ञापनार्थमादौ कालिकोपदेशाभिधानमिति । संज्ञा-(द्वय)संज्ञिश्रुतद्वयमुक्तम् ॥५२३॥ सम्यग्मिथ्याश्रुतमिदानीम् । तत्र—

**अंगाणंगपविट्ठं सम्मसुतं लोइयं तु मिच्छसुतं ।**
**आसज्ज तु सामित्तं लोइअलोउत्तरे भयणा ॥५२४॥**

**अंगा०** गाहा । इहाङ्गानङ्गप्रविष्टमाचारावश्यकादि सम्यक् श्रुतं । लौकिकं भारतादि मिथ्याश्रुतम् । स्वामिनमासाद्योभयं भजनीयम् । कथम् ? सम्यग्दृष्टिपरिग्रहात् सम्यक् श्रुतम्, मिथ्यादृष्टिपरिग्रहाच्च मिथ्याश्रुतमिति ॥५२४॥

**सम्मत्तपरिग्गहितं सम्मसुतं तं च पंचधा सम्मं ।**
**[5]ओवसमं सासाणं खयसमयं वेदयं खयियं ॥५२५॥**

**सम्मत्त०** गाहा । इह सम्यक्त्ववतः सम्यक्त्वपरिग्रहात् सम्यक्श्रुतमुक्तम् । तच्च सम्यक्त्वं पञ्चधाऽपदिश्यते तद्यथौपशमिकं सास्वादनं क्षायोपशमिकं वेदकं क्षायिकमिति ॥५२५॥

**उवसामयसेढिगतस्स[6] होती उवसामियं तु सम्मत्तं ।**
[३६–प्र०] **जो वा अकततिपुंजो अखवितमिच्छो लभति सम्मं ॥५२६॥**

---

१ हैतुक्यैव-इति प्रतौ । २ आइए सुत्तं को त हे । ३ तेणातितो स जे । ४ दारं त । ५ उवसमियं को । ओवसमियं हे । उवसम्मं त । ६ °यगुणसे °ता ।

**उव०** गाहा। इहौपशमिकीं श्रेणिमनुप्रविष्टस्यानन्तानुबन्धिनां दर्शनमोहनीयत्रयस्य चोपशमादौपशमिकं भवति। यो वा सम्यग्मिथ्यात्वोभयी(याऽ)कृतत्रिपुञ्ज एवाक्षीण-मिथ्यादर्शन[:] सम्यक्त्वं प्रतिपद्यते तस्य चौपशमिकम्। ॥५२६॥ कथम् ?

**खीणम्मि उदिण्णम्मि [1]य अणुदिज्जंते य सेसमिच्छत्ते।**
**अंतोमुहुत्तमेत्तं उवसमसम्मं लभति जीवो ॥५२७॥**

**खीणम्मि** गाहा। इह यदस्य मिथ्यादर्शनमोहनीयमुदितं तदनुभवेनैव प्रक्षीणम्, अन्यत्तु[2] मन्दपरिणामतया नोदितमतस्तदन्तर्मुहूर्तमात्रमुपशान्तमास्ते, विष्कम्भितोदयमित्यर्थः। तावन्तमस्य कालमौपशमिकसम्यक्त्वलाभ इति ॥५२७॥

**उवसमसम्मत्तातो चयतो मिच्छं अपावमाणस्स।**
**सासातणसम्मत्तं तदंतरालम्मि छावलियं ॥५२८॥**

**उव०** गाहा। तस्मादेवौपशमिकात् प्रच्यवनात्[3] मिथ्यादर्शनमप्राप्नुवतः [4]प्रोदितानन्तानुबन्धिनस्तदेवोपशमिकसास्वादनस्य षडावलिकाकालं सास्वादनसम्यक्त्वमुच्यते। इह तत्त्वश्रद्धानरसमीषदास्वादयतीत्यास्वादनः, मिथ्यादर्शनाभिमुख्याद्वा सम्यक्त्वादशातनादशातनः, अथवेषत्तत्त्वश्रद्धानरसास्वादः खल्वास्वादनं सहास्वादनेन सास्वादनः, सहाऽऽशातनेन वा साशातनः, अथवा सु प्रशंसायां शोभनास्वादनः सा(स्वा)स्वादनः, स्वाय शातनो वा स्वाशातनः। तस्य यत्सम्यक्त्वं तत्तदनर्थान्तरत्वात्तदाख्यमेवेति ॥५२८॥

**मिच्छत्तं जमुदिण्णं तं खीणं अणुदितं च उवसंतं।**
**मीसीभावपरिणतं वेतिज्जंतं खयोवसमं ॥५२९॥**

**मिच्छत्तं** गाहा। इह यदस्य मिथ्यादर्शनमुदीर्णं तद्ध्युपक्षीणं यदनुदीर्णं तच्चोपशान्तम्। उपशान्तं नाम विष्कम्भितोदयं अपनीतमिथ्यास्वभावं च। तदिह क्षयोपशममनुभूयमानं क्षायोपशमिकमुच्यते। आह—नन्वौपशमिकेऽपि क्षयश्चोपशमश्च, तथेहापि। कोऽनयोर्विशेषः ? उच्यते—नन्वयमेव हि विशेषो यदिह वेद्यते, न तत्र। क्षायोपशमिके पूर्वशमितमनुसमयमुदयेन वेद्यते प्रक्षीयते च, न त्वौपशमिके, तत्र तदयविष्कम्भणमात्रमेवेति ॥५२९॥

**वेतयसम्मत्तं पुण सव्वोदितचरमपोग्गलावत्थं।**
**खीणे दंसणमोहे तिविधम्मि वि खाइयं होति ॥५३०॥**

---

१ °म्मि उ जे। २ °न्यत्वम°–इति प्रतौ। ३ °नात् सम्मि°–इति प्रतौ।
५ यदानु°–इति प्रतौ

**वेतय०** गाहा । इह क्षायिकीं श्रेणिमभिप्रपन्नस्य सम्यग्दर्शनमोहनीयमनुसमयमुदीर्योदीर्यानुभवतः क्षपयतश्च[1] विनिवृत्तोदीरितस्य चरमाशेषोदीरितपुद्गलानुभूतिमतो वेदकमिष्यते । वेदको[2]ऽनुभविता । तदनर्थान्तरभावाद्वेदकम् । अथवा कृत्यल्युटो बहुलमिति वचनाद्वेद्यत इति वेदकमाहार[क]वत् । कथम्[3] ? कृतल्युटिति प्रश्लेषात्[4]? आह–ननु क्षायोपशमिकेऽप्यनुभवोऽभिहितः तथेहापीति । कोऽनयोर्विशेषः ? उच्यते–ननूक्तमिदमशेषोदितपुग्दलानुभूतिमतः, क्षायोपशणिकं तूदितानुदितपुद्गलविशेषस्येति । तथापि क्षायोपशमिकविशेष एव वेदकं यस्मादौपशमिकादिवि(त्रि)भावमयमेव सम्यक्त्वमुक्तम्, अन्यथा ह्यौदयिकमपि स्यात् ।[5] तस्मादपेतमिथ्यास्वभावत्वात्तत्रोपशमोऽनुसमयानुभूतेश्च[6] क्षयः । तत्सद्भावात् क्षायोपशमिकविशेष एवायमिति । मिथ्या-सम्यग्मिथ्या-सम्यक्त्वमोहनीयक्षयः क्षायिकमित्युक्तं सम्यक्त्वम् । एतत्परिग्रहात् सम्यक् श्रुतम्, [न] मिथ्याश्रुतमिति ॥५३०॥

**चोद्दस दस य अभिण्णे णियमा सम्मत्तँ[7] सेसए भयणा ।**
**मतिओधिविभंज्जासे[8] वि होति मिच्छं ण उण सेसे[9] ॥५३१॥**

**चोद्दस** गाहा । तत्राद्यादारम्य चतुर्दशभ्यः आदशभ्यः सम्पूर्णेभ्यो नियमात् सम्यक्त्वपरिग्रहः शेषे भजनीयः । इदमनुषङ्गतो–मत्यवध्योरपि क्वचिन्मिथ्यापरिग्रहः स्यान्न मनःपर्याय-केवलयोः । ॥५३१॥

**तत्तावगमसभावे सति सम्मसुताण को पतिविसेसो ।**
**जध णाणदंसणाणं भेओ तुल्ले[10]ऽवबोधम्मि ॥५३२॥**

**तत्ता०** गाहा । आह–तत्त्वावगमस्वभावसामान्ये सति सम्यक्त्व-श्रुतयोः कः प्रतिविशेषो यदपदिश्यते सम्यक्त्वपरिग्रहात् सम्यक् श्रुतमिति ? उच्यते–यथेह ज्ञान-दर्शनयोरवबोधसामान्ये सति भेदस्तद्वत्सम्यक्त्व-श्रुतयोरपि । ॥५३२॥ कथम् ?

**णाणमवायधितीयो दंसणमिट्ठं जधोग्गहेहाओ ।**
**तध तत्तरुई सम्मं [ ३६–द्वि० ] रोइज्जति जेण तं णाणं ॥५३३॥**

**णाण०** गाहा । यथेह विशेषावबोधादवायधारणे ज्ञानम्, अवग्रहेहे[11] च सामान्यमात्रालम्बनाद्दर्शनम् । तथा हि तत्त्वे या रुचिस्तत्सम्यक्त्वं यद्रोचकं तच्छ्रुतमिति । ॥५३३॥ इदानीं साद्यमनाद्यं सपर्यन्तमपर्यन्तं चेत्युच्यते

---

१ विडिवृ–इति प्रतौ । २ °कानु°–इति प्रतौ । ३ अत्र 'कथं पुनः'–इति पाठः । किन्तु नात्र आवश्यकता पुनःशब्दस्य । ४ अत्र 'पुनःशब्दस्य विशेषणार्थत्वात् क्षायिकश्रेणीममिप्रपन्नस्य भवतीति शेषः' इति पाठः पतितः स्यात्–द्रष्टव्या कोटीका । ५ तस्या उदयेन मि°–इति प्रतौ । ६ °तेषु क्ष–इति प्रतौ । ७ सम्मं तु जे । सम्मत्त हे । ८ °वच्चासे जे । ९ सेसं जे । १० तुल्ले वि बो° जे । तुल्लेऽवमोहम्मि° त । ११ °ग्रहे च–इति प्रतौ

अच्छित्तिणयस्सेतं अणाइपज्जन्तमत्थिकाय व्व ।
इतरस्स सातिसंतं गतिपज्जाएहिं जीवो व्व ॥५३४॥

अच्छि० गाहा । इहाऽव्युच्छित्तिनयस्य द्रव्यार्थिकस्येदमनाद्यमपर्यवसितं च नित्यत्वादस्तिकायवत् । पर्यायनयस्य साद्यं सपर्यन्तं चानित्यत्वान्नारकादिपर्यायवत् ॥५३४॥

दव्वादिणा [2]व सादियमणातियं संतमन्तरहितं वा ।
दव्वम्मि एगपुरिसं पडुच्च सादिं सणिधणं च ॥५३५॥

दव्वा० गाहा । [3]द्रव्यादिचतुष्टयाद्वा साद्यनाद्यादि चिन्त्यते । तत्र द्रव्यतः सम्यक्छ्रुतमेकपुरुषस्योत्पद्यते प्रलीयते च ॥५३५॥ यतः—

चोद्दसपुव्वी मणुओ देवत्ते तं ण संभरति सव्वं ।
देसम्मि होति भयणा सट्ठाणभवे वि भ[3]यणा तु ॥५३६॥
मिच्छभवंतरकेवलगेलण्णपमादमातिणा णासो ।
आह किमत्थं णासति किं जीवातो तयं भिण्णं ॥५३७॥

चोद० गाहा । मिच्छ० गाहा । मिथ्यादर्शनगमनादिभिश्च प्रच्युतिः । आह किमर्थं प्रच्यवते ? किं तदात्मनो भिन्नम् ? ॥५३६–५३७॥ किञ्च—

जति भिण्णं तब्भावे वि तो तओ तस्सभावरहितो त्ति ।
अण्णाणि च्चिय णिच्चं अन्धो व्व समं[4] पदीवेणं ॥५३८॥

जति गाहा । यदि तदात्मनो भिन्नम्, अतस्तद्भावेऽप्यसावज्ञ एव, तत्स्वभावरहितत्वात्, प्रदीपहस्तान्धवत् । अनन्यत्वे[5] ज्ञत्वं युक्तम्, प्रकाशात्मकत्वे सति बाह्यानुग्रहवच्चक्षुष्मतः प्रदीपादिप्रकाशानुग्रहोपलब्धिवत् ॥५३८॥ उच्यते—

तं ता णियमा जीवो जीवो ण तदेव केवलं जम्हा ।
तं [6]वै तदण्णाणं वा केवलणाणं व सो होज्ज ॥५३९॥

तं ता गाहा । श्रुतज्ञानं तावन्नियमत एव जीवः, जीवस्तु श्रुतज्ञानं वा स्यात् श्रुताज्ञानं वा केवलज्ञानं वेति । मत्यादिसाच(चि)व्यं चात एवाख्यातं भवति ॥५३९॥ आह—

तं जइ जीवो णासे तण्णासो होतु सव्वसो णत्थि ।
जं सो उप्पातव्वयधुवधम्माऽणंतपज्जायो ॥५४०॥

---

१ अत्थि त्ति त हे जे । २ वि त । ३ भयणाओ त । ४ समं पि दी° जे । ५ अनन्यात्तत्वं– इति प्रतौ । ६ तं च को हे ।

**तं जइ** गाहा। यदि श्रुतज्ञानं जीवस्तथा श्रुतनाशे सति जीवनाशः प्राप्तः। उच्यते—अस्तु श्रुतज्ञानपर्यायमात्रेणास्य नाशः। को दोषः? सर्वथा तु नेष्यते, यस्मादसावुत्पादव्ययध्रौव्यधर्मा, अनन्तपर्यायश्च ॥५४०॥ न चात्मैव केवलमेवं स्वभावः। किं तर्हि?

**[३७-प्र०] सव्वं चिय पतिसमयं उप्पज्जति णासते य णिच्चं च।**
**एवं चेव य सुहदुक्खबंधमोक्खादिसब्भावो ॥५४१॥**

**सव्वं** गाहा। सर्वमेव हि प्रतिसमयं पर्यायतयोत्पद्यते विनश्यति च, द्रव्यतया च नित्यम्। एवं च सुखादिसद्भावो नैकान्तनित्यत्वे सति, अपरिणामत्वादाकाशवत्, नाप्येकान्तानित्यत्वे, अपरिणामादेव जन्मानन्तरमृतवत्। उत्पादादिस्वाभाव्ये तु दुःखितयोपरमति सुखितयोत्पद्यते जीवद्रव्योपयोगादिभिरवतिष्ठते इत्यादि सर्वं घटत इति॥५४१॥

**अधवा सुत्तं णिव्वाणभाविणोऽणातियं सपज्जन्तं।**
**जीवत्तं पिव णियतं सेसाणमणातिपज्जन्तं ॥५४२॥**

**अधवा** गाहा। इह मिथ्याश्रुतमङ्गीकृत्योच्यते निर्वाणभाविनो भव्यस्यानादिश्रुतमन्तवच्च, भव्यत्ववत्। अभव्यस्यानाद्यपर्यन्तं च जीवाऽभव्यत्ववत् ॥५४२॥

**खेत्ते भरधेरवता काले तु समाओ दोण्णि तत्थेव।**
**भावे पुण पण्णवगं पण्णवणिज्जे व आसज्ज ॥५४३॥**

**खेत्ते** गाहा। क्षेत्रतो भरतैरावतयोराद्यन्तवत्। कालत उत्सर्पिण्यवसर्पिण्योः। भावतः प्रज्ञापकमाचार्यं प्रति प्रज्ञापनीयांश्च ॥५४३॥

**उवओगसरपयत्ता थाणविसेसा य होन्ति पण्णवए।**
**गतिठाणभेतसंघातवण्णसद्दादिभावेसु ॥५४४॥**

**उव०** गाहा। तत्र [३]वक्तुरनन्यत्वाच्छ्रुतस्य तदुपयोगादिपर्यायैरुत्पद्यते विनश्यति च तथाभिधेयनिबन्धनत्वात्, अभिधेयस्य च गत्यादिपर्यायैरुत्पत्तिव्ययस्वभावत्वादिति ॥५४४॥

**दव्वे णाणापुरिसे खेत्ते विदेहाई कालो जो [५]तेसिं।**
**खयउवसमभावम्मि य सुतणाणं वट्टते सततं ॥५४५॥ दारं॥**

---
१ ठाण त। २ गतिट्ठाण हे। ३ तत्र चक्षुर°-प्रतौ। ४ कालि त को। ५ तेसु को हे त।

**दव्वे** गाहा । द्रव्यतस्तदनेकस्वामिपुरुषसन्तानानन्यत्वात्, तस्य चानाद्यनिबन्ध-(°निध)नत्वात्श्रुतमप्यनाद्यपर्यन्तम् । [1]क्षेत्रतो विदेहेषु, कालतस्तत्रत्यकाल एव, भावतः क्षायोपशमिकस्वभावत्वादाकाशाद्यभिधेयनित्यत्वाच्चेति ॥५४५॥

**भंगगणितातित गमियं जं सरिसगमं व कारणवसेण ।**
**गाधाति अगमियं खलु कालिअसुतं[2] दिट्ठिवाते वा ॥५४६॥ दारं ॥**

**भंगगणितातित** गाहा । गमकबहुलत्वाद्गमिकम् । तच्च प्रायोवृत्त्या दृष्टिवादे । गाथाद्यसमानग्रन्थमगमिकम्. । तच्च प्रायेण कालिकम् ॥५४६॥

**गणधरथेरकतं वा आतेसा मुक्कवागरणतो वा ।**
**धुवचलविसेसतो वा अंगाऽणंगेसु णाणत्तं ॥५४७॥**

**गणधर०** गाहा । गणधरकृतमङ्गप्रविष्टमाचारादि, अर्थादेशनियतं च स्थविर-कृतमङ्गबाह्यम्, उत्सृष्टव्याकरणमात्रोपसंहृतं वा । अथवा सर्वतीर्थेषु नियतमङ्गप्रविष्टम्, अनियतमितरत् ॥५४७॥ आह—श्रूयते हि पूर्वं पूर्वाण्येवोपनिबध्यन्ते पूर्वप्रणयनादेव च पूर्वाणीति । तत्र च समस्तमस्ति वाङ्मय[म]तः किमिह शेषाङ्गैरङ्गबाह्यैश्चेति[3]? उच्यते—

**जति वि य भूतावादे सव्वस्स वयोगतस्स ओतारो ।**
**णिज्जूहणा [३७-द्वि]तधा वि हु दुम्मेधे[4]पप्प इत्थी य ॥५४८॥**

**जति** गाहा । यद्यपि दृष्टिवादे समस्तवाङ्मयावतारस्तथापि दुर्मेधसामयोग्यानां स्त्रीणां चानुग्रहार्थमन्यैः[5]श्रुतविशेषोपदेशः, श्रावकाणां च ॥५४८॥

**तुच्छा गारवबहुला चलिंदिया दुब्बला धितीए य ।**
**ईय[6] अतिसेसज्झयणा भूतावाओ णँ[7] इत्थीणं ॥५४९॥**

**तुच्छा** गाहा । अतिशेषाध्ययनान्युत्थानश्रुतादीनि । ॥५४९॥ उक्तं श्रुतमर्थतः, विषयतोऽधुनापदिश्यते—

**उवयुत्तो सुतणाणी सव्वं[8] दव्वाति जाणति जधत्थं ।**
**पासति अ केयि सो पुण तमचक्खुदंसणेणं ति ॥५५०॥**

**उव०** गाहा । तत्र सूत्रं—"तं समासतो चउविधं पण्णत्तं तं जहा दव्वओ ४ । दव्वओ णं सुयणाणं उवउत्ते सव्वदव्वाइं जाणइ णो पासइ" [नन्दी सू० ११९] एवं सर्वत्र । केचित्[9] पठन्ति "जाणति पासइ" त्ति तच्चैवं[10] किलाऽचक्षुर्दर्शनेनेति ॥५५०॥

---

१ °न्तं यत् क्षे°–इति प्रतौ । २ सुतदि° जे त । °सुयदि° को । ३ बाह्ये मयेति–इति प्रतौ । ४ °धे प्पप्प जे । ५ °मन्युः श्रु° इति प्रतौ । ६ इयमति° जे । ७ °ओ य नो त्थी° को हे त । ८ °सव्वदव्वाइं को । ९ एतत् पाठान्तरं आ०हरिभद्रैः मूलत्वेन सम्मतं । तैर्जिनभद्रसंमतः पाठः 'अन्ये तु' इति कृत्वा निर्दिष्टः । १० इति तिव्व कि°–इति प्रतौ ।

**तेसिमचक्खुदंसणसामण्णे[1]दो कधं ण मतिणाणी ।**
**पासति पासति व कधं सुतणाणी किंकतो भेतो ॥५५१॥**

**तेसि०** गाहा । तेषामचक्षुर्दर्शनसामान्ये मतिज्ञानिनापि[3] द्रष्टव्यम्, अदर्शने च तस्य श्रुतज्ञानिनोऽपि तत्समानतेति ॥५५१॥

**मतिहेतु[4]मचक्खूदंसणं च[5] वज्जेतु पासणा भणिता[6] ।**
**प[7]ण्णवणाए तु फुडा तेण सुते पासणा जुत्ता ॥५५२॥**

**मति०** गाहा । कण्ठ्या ॥५५२॥

**जध णवधा मतिणाणं संतपतपरूवणादिणा गमितं ।**
**तध णेयं सुतणाणं जं तेण समाणसामित्तं ॥५५३॥**

**जध०** गाहा । सत्पदप्ररूपणाद्यनुयोगद्वारक्रमः श्रुतज्ञानस्यापि मतिज्ञा[8]नवत्, तत्समानस्वामित्वात् ॥५५३॥

**सव्वातिसयणिधाणं तं पाएणं जतो पराधीणं ।**
**तेण विणेयहितत्थं गहणोपा[9]यो इमो तस्स ॥५५४॥**

**सव्वा०** गाहा । तत्पुनः सर्वातिशयरत्ननिधानमिह यतः, प्रायेण पराधीन-मिह यतः, प्रायेण पराधीनमाचार्यायत्तत्वात्, अतो विनेयानुग्रहार्थमयं ग्रहणोपाय-स्तस्योपदिश्यते ॥५५४॥

**आगमसत्थग्गहणं जं बुद्धिगुणेहिं अट्ठहिं [10]दिट्ठं ।**
**बेन्ति सुतणाणलंभं तं पुव्वविसारता धीरा ॥२०॥५५५॥**
**सा[11]सिज्जति जेण तयं सत्थं तं चाऽविसेसितं णाणं ।**
**आगम एव य सत्थं [३८-प्र०]आगमसत्थं तु सुतणाणं ॥५५६॥**

**आगम०** गाहा । **सासिज्जति** गाहा । शास्यतेऽनेनेति शास्त्रम् । तच्च ज्ञानम-विशिष्टम् । आगमश्च [असौ] शास्त्रं च तदित्यागमशास्त्रं [श्रुत]ज्ञानम् ॥५५५–५५६॥

**तस्सादाणं गहणं दिट्ठं जं मतिगुणेहिं सत्थम्मि ।**
**बेन्ति तयं सुतलं[12]भं गुणा य सुस्सूसणादीया ॥५५७॥**

**तस्सा०** गाहा । तस्यादानं ग्रहणम् । तच्च यच्छास्त्रं दृष्टमष्टभिर्बुद्धिगुणैस्तदेव श्रुतज्ञानलाभमाचक्षते पूर्वविदः । कथम् ? गृह्यमाणमागृहीतमिति ग्रहणमेव हि श्रुतलाभ

---

१ °ण्णओ हे । °ण्णाओ को । २ °न्ये सति ज्ञा°–इति प्रतौ । ३ °नानिद्र°–इति प्रतौ । ४ मइमेयम-चक्खु° को हे त । ५ तु जे । ६ भणितं जे । ७ प्रज्ञापना पद ३० । ८ मतिश्रुतिज्ञा°–इति प्रतौ । द्रष्टव्या गा० ४०४–४४० । ९ °णोवायो को हे त । १० °हिं मि दि° जे । °हिं वि दि° त । ११ मासि° त । १२ सुतलंभं त ।

इति । यतो वाऽवग्रहादीनपि ग्रहणभेदान् वक्ष्यते, न चावग्रहादिभ्योऽन्यः श्रुतलाभः । बुद्धिगुणाश्चाष्टौ ॥५५७॥

**सुस्सूसति पडिपुच्छति सुणेति गेण्हति य ईहते यावि[1] ।**
**तत्तो अपोहते[2] वा धारेति करेति वा सम्मं ॥२१॥५५८॥**

**सुस्सूसति उ[3] सोतुं सुतमिच्छति सविणयो गुरुमुहातो ।**
**परिपुच्छति तं गहितं पुणो वि[4] णिस्संकितं कुणति ॥५५९॥**

[सुस्सू० गाहा । सुस्सू० गाहा ।] तच्च श्रुतं विनयसम्पन्नतया गुरुमुखाच्छ्रोतुमिच्छति शुश्रूषति । पुनः पृच्छति प्रतिपृच्छति, तदेव श्रुतमशङ्कितं करोतीत्यर्थः ॥५५८–५५९॥

**सुणति तदत्थमधीतुं गहणेहावायधारणा तस्स ।**
**सम्मं कुणति सुताणं अण्णं पि ततो सुअं लभति ॥५६०॥**

**सुण०** गाहा । तस्यैव श्रृणोत्यर्थमधीतस्य, तस्यैवार्थस्य ग्रहणादयोऽवग्रहेहावायधारणाः[5], तदाज्ञानुष्ठानाच्चान्यदपि लभत इति तदुपदेशक्रियापि तत्प्राप्तिहेतुरिति ॥५६०॥

**सुस्सूसति वा जं जं गुरवो[6] जंपंति पुव्वभणितो य ।**
**कुणति पडिपुच्छितूणं सुणेति सुत्तं तदत्थं वा ॥५६१॥**

**सुस्सूस०** गाहा । अथवा यद्यदाज्ञापयन्ति गुरवस्तच्छ्रोतुमिच्छति शुश्रूषति, पूर्वसंदिष्टश्च सर्वकार्याणि प्रतिपृच्छ्य करोति, श्रृणोति सूत्रमर्थं वा, शेषं पूर्ववत् । ॥५६१॥ श्रवणविधिश्चायम्—

**मूअं हुंकारं वा वाढकार पडिपुच्छ मीमंसा[7] ।**
**तत्तो पसंगपारायणं च परिणिट्ठ सत्तमए ॥२२॥५६२॥**

**मूअं** गाहा । प्रथमश्रवणे तूष्णीमासीत । द्वितीये हुमिति ब्रूयाद्वन्दनमित्यर्थः । तृतीये बाढमेवमेतत् । [चतुर्थे प्रतिपृच्छां कुर्यात्] पञ्चमे मातुमिच्छा मीमांसा प्रमाणजिज्ञासेत्यर्थः । षष्ठे तदुत्तरोत्तरप्रसङ्गपारगमनम् । सप्तमे गुरुवदनुभाषणं परिनिष्ठेति । ॥५६२॥ व्याख्यानविधिस्त्वयम्—

**सुत्तत्थो खलु पढमो बितिओ[8] णिज्जुत्तिमीसओ[9] भणितो ।**
**ततिओ[10] य णिरवसेसो एस विधी होति अणुयोगे[11] ॥२३॥५६३॥**

---

१ वावि त को त । २ अवोहते जे । ३ जो जे । त । ४ नीसं° हे को । ५ °णात्तदान्याज्ञु°- इति प्रतौ । ६ गुरुवो त । ७ वीमंसा को हे । ८ बीओ त को हे । ९ मीसिओ त । १० तईओ हे । ११ अणि° जे ।

**सुत्तत्थो** गाहा। सूत्रार्थ एवादौ, द्वितीये स एव सूत्रनिर्युक्त्या मिश्रः। तृतीये विधौ निरवशेष इति ॥५६३॥ श्रुतं समाप्तम् ॥छ॥

**भणितं परोक्खमधुणा पच्चक्खं तं च तिविधमोधादी।[1]**
**पुव्वोदिदसंबन्धं तत्थावधिमाति[३८–द्वि]तो वोच्छं ॥५६४॥**

**भणितं** गाहा। मति[:] श्रुतं चेति परोक्षमुक्तम् [गा०८८]। प्रत्यक्षमिदानीमवध्यादि। तत्र पूर्वोक्तसम्बन्धम्[गा० ८७]अवधिमादौ वक्ष्यामः ॥५६४॥

**संखातीताओ खलु ओधीणाणस्स सव्वपगं[2]दीओ।**
**कादी भवपच्चयिया खओवसमियाओ काओ वि ॥२४॥५६५॥**
**कत्तो मे वण्णेतुं सत्ती ओधिस्स सव्वपगदीओ[3]।**
**[4]चोद्दसविधणिक्खेवं इड्ढीपत्ते य वोच्छामि ॥२५॥५६६॥**
**तस्स जगुक्कोसयखेत्तकालसमं[5]यप्पएसपरिमाणं।**
**तण्णेयपरिच्छिण्णं तं [6]च्चिय से पयँ[7]दिपरिमाणं ॥५६७॥**

**संखा०** गाहा। **कत्तो** गाहा। **तस्स** गाहा। तस्यावधेरसंख्येयाः प्रकृतयो यतोऽङ्गुलासंख्येयभागादारभ्य प्रदेशोत्तरवृद्ध्या वक्ष्यमाणमुत्कृष्टमसंख्येयलोकक्षेत्रप्रदेशपरिमाणम्, कालतश्चावलिकाऽसंख्येयभागादारभ्य समयोत्तरवृद्ध्याऽसंख्येयोत्सर्पिण्यवसर्पिणीसंख्यं समयपरिमाणम्। ज्ञेयभेदाच्च ज्ञानभेद इत्यतस्तज्ज्ञेयपरिमाणा एवावधेः प्रकृतयः ॥५६५–५६६–५६७॥

**संखातीतमणंतं च तेण [8]तमणंतपयँ[9]दिपरिमाणं।**
**पेच्छति पोग्गलकायं जमणंतपदेसपज्जायं ॥५६८॥**

**संखा०** गाहा। संख्यातीतमनन्तं चोच्यते। माऽसंख्येयमेव। तेन तदवधिज्ञानमनन्तद्रव्यमनन्तपर्यायं च पुद्गलास्तिकायमङ्गीकृत्यानन्तप्रकृतिसंख्येयमपि। अथवा 'संखातीताओ खलु' [५६५]। किं खल्विति? विशेषणार्थः। क्षेत्रकालाभ्यामेव हि संख्यातीतास्ता द्रव्यभावज्ञेयतयाऽनन्ता इति ॥५६८॥

**भवपच्चइता णारगसुराण पक्खीण वा णभोगमणं।**
**गुणपरिं[10]णामणिमित्ता सेसाण खओवसमियाओ ॥५६९॥**

---

१ °मोहादि त। °मोहाइं को हे। २ °पयडीओ को हे त। ३ °पयँडीओ को हे त। ४ चउद्द° को हे। ५ °समए प्प° जे। ६ तं चिय को हे। ७ पयडि° को हे त। ८ तेणमणंत° को हे। ९ पयडि को हे त। १० °रिंमाणणि° त।

**भव०** गाहा । नारकदेवानामवधिप्रकृतयो भवप्रत्ययाः पक्षिणामाकाशगमनवत्, गुणपरिणामप्रत्ययाः क्षयोपशमिकाः शेषाणाम् ॥५६९॥

**ओधी खओवसमिए भावे भणितो भवो तधोदइये ।**
**तो किध भवपच्चईओ वोत्तुं जुत्तोऽवधी दोण्हं ॥५७०॥**

**ओधी०** गाहा । आह—ननु क्षायोपशमिके भावेऽवधिरुक्तः, नारकादिभवाश्चौदयिके, अतः कथं भवप्रत्ययोऽवधिर्युज्यत इति ॥५७०॥

**सो वि हु खयोवसमितो किंतु स एव तु खओवसमलाभो ।**
**तम्मि सति होतवस्सं भण्णति भवपच्चओ तो सो ॥५७१॥**

**सो वि** गाहा । उच्यते—असावपि क्षायोपशमिक एव । किंतु स एव हि क्षयोपशमलाभस्तस्मिन् नारकादिभवे सत्यवश्यं भवतीत्यतो भवप्रत्ययोऽवधिरुच्यत इति ॥५७१॥

**उदयक्खयक्खयोवसमोवसमा जं च कम्मुणो भणिता ।**
**दव्वं खेत्तं कालं भवं च भावं च संपप्प ॥५७२॥**

**उद०** गाहा । यतश्चोदयादयः कर्मणः द्रव्यादिनिमित्तमु(°त्ता उ)क्ताः, अतो यदि भवप्रत्ययः क्षयोपशमः स्यात्, को दोषः ? ॥५७२॥

**[३९–प्र०]इय सव्वपयदिमाणं किध कमवसवण्णवत्तिणी वाया ।**
**वोच्छिति सव्वं सव्वायुणा वि संखेज्जकालेणं ? ॥५७३॥**

**इय** गाहा । इत्यसंख्येयमनन्तं च सर्वप्रकृतिपरिमाणमवधिः, क्रम[व]शवर्णवर्त्तिन्या वा[चा] को हि सर्वायुषाऽपि शक्तो वक्तुम् ? अतः उक्तं "कत्तो मे वण्णेउं सत्ती" [५६६]त्ति ॥५७३॥ यत्तूक्तं "चोद्दसविधणिक्खेवं"[गा०५६६] तदपदिश्यते—

**ओधी खेत्तपरिमाणे, संठाणे आणुगामिए ।**
**अवट्ठिए चले तिव्वमन्दपदिवांउप्पतोतिय ॥२६॥५७४॥**
**णाणदंसणविब्भंगे[12] देसे खेत्ते गतीति य ।**
**इड्ढिपत्ताणुयोगे य एमेता पडिवत्तिओ ॥२७॥५७५॥**
**गतिपज्जंता चोद्दस रिद्धी चसमुच्चित त्ति पञ्चदसी ।**
**ओधिपदं पि [14]व मोत्तुं सेतरमणुगामियं काउं ॥५७६॥**

---

१ °इया वो° जे । २ °वसमओ को हे त । ३ एव क्खओ° को । एव खओ° हे । ४ होइव° त । ५ उदयखयखयो° जे हे । ६ संपप्प त को हे । ७ पयडि त को हे । ८ त्ति त । ९ अट्ठिए त । १० °पडिउप्प° त । °पडिवा° को हे । ११ °याई य । हे । १२ विब्भंगो त । १३ इड्ढीपत्ता° को हे त । १४ पि य जे ।

[1]केयिं चोद्दसभेतं भणंति ओधि त्ति ण पयंती[2] जम्हा ।
पयंदीण[3] य णिक्खेवो जं भणितो चोद्दसविधो त्ति ॥५७७॥

ओधी० गाहा । णाण०[सिलोगो] । गति० गाहा । [केयिं गाहा] । अवध्याद्या गतिपर्यन्ता निक्षेपाश्चतुर्दश इड्ढीपत्ते त्ति । वोच्छामो त्ति । ऋद्धिस्तु चसमुच्चित-त्वात्पञ्चदशी भवतीति । अथवा अवधिरित्येतत्पदं विहाय[4] आनुगामिकं सेतरं कृत्वा अनानु-गामिकीसहितामर्थतः केचिदेवं चतुर्दशभेदमाचक्षते, यस्मान्नावधिः प्रकृतिः, अवधेरेव च प्रकृतयश्चिन्त्यन्ते अधिकाराच्च यतः प्रकृतीनामेव चतुर्दशनिक्षेपोऽभिहितः ॥५७४–५७५–५७६–५७७॥

णामं ठवणा[5] दविए खेत्ते काले भवे य भावे य ।
एसो खलु[6] णिक्खेवो ओधिस्सा होति सत्तविधो ॥२८॥५७८॥

अवधि त्ति जस्स णामं जध मज्जाताऽवधि त्ति लोगम्मि ।
ठवणावधिणिक्खेवो[7] होदि जधक्खादि[३९-द्वि०]विण्णासो ॥५७९॥

णामं गाहा । अव० गाहा । नामावधिः– यस्यावधिरिति नाम क्रियते, यथा मर्यादायाः, स्थापनावधिः–अक्षादिन्यासः ॥५७८–५७९॥

अधवा णामं तस्सेव जमभिधाणं स पज्जयो तस्स ।
ठवणागारविसेसो[8] तद्दव्वखेत्तसामीणं ॥५८०॥

अध० गाहा । अथवाऽवधेरेव यदभिधानं वचनं पर्यायः स नामावधिः । स्थपना आकारविशेषो यस्तद् द्रव्यक्षेत्रस्वामिनाम् ॥५८०॥

दव्वोधी उप्पज्जति जत्थ तओ जं व पासते तेणं ।
जं वोवकारि दव्वं देहाति[9] तदुब्भवे होति ॥५८१॥

दव्वो० गाहा । द्रव्यावधिः– यत्र द्रव्येऽसावुत्पद्यते, यद्वामेन पश्यति, यच्चोत्पद्य-मानस्योपकारकं शरीरादि, तदवधिकारणत्वाद् द्रव्यावधिरिति ॥५८१॥

खेत्ते जत्थुप्पज्जति कधिज्जते पेच्छते व दव्वाइं ।
एवं चेव य काले ण तु पेच्छति खेत्तकाले सो ॥५८२॥ दारं ॥

खेत्ते गाहा । क्षेत्रावधिर्यत्र क्षेत्रेऽवधिरुत्पद्यते कथ्यते द्रव्याणि वा पश्यति । एवं कालावधिरपि । न त्वसौ क्षेत्रं पश्यति कालं च[10], अमूर्तत्वात् । द्रव्यवर्त्तनादि-रूपपुद्गलाश्रयं तु [कालं] पश्येत् । असौ तु तत्पर्यायान्तर्भूत एव ॥५८२॥

---

१ केई को हे । २ पयडी त को हे । ३ पयडोण को हे त । ४ विधाय–इति प्रतौ । ५ °वण द° को । ६ खलु ओहिस्सा निक्खेवो होइ को हे त । ७ °णाविधि त । ८ °सेसा त । ९ देहाई तब्भवे को । १० °लं चेहामूर्तिद्रव्यवर्तमानादि°–इति प्रतौ ।

**जम्मि भवे उप्पज्जति वट्टति पेच्छति व जं भवोधी सो ।**
**एमेव य भावोधी वट्टति य तओ खयोवसमे ॥५८३॥**

**जम्मि** गाहा । भवो नारकादिः । भाव औदयिकादिः । न चावधिज्ञानी भव-भावाभ्यामर्थान्तरम्, तदर्थान्तरं चावधिः, अतो यत्र भवे भावे वासावुत्पद्यते प्रागुत्पन्नोपि वा वर्त्तते यं वा पश्यति स भवावधिः,भावावधिश्च । स्वरूपतस्तु क्षायोपशमिके वर्त्तते अवधिरित्युक्तम् ॥५८३॥ क्षेत्रपरिमाणमिदानीम् । तच्च—

**ओधिस्स खेत्तमाणं जहण्णमुक्कोसमज्झिमं तत्थ ।**
**पाएण तदातीए जं तेण जहण्णयं वोच्छं ॥५८४॥**

**ओधि०** गाहा । इहावधेः क्षेत्रपरिमाणं जघन्यमुत्कृष्टं मध्यमं च । यतश्च प्रायेण जघन्यमादौ भवत्यतस्तदेवादौ वक्ष्यामः ॥५८४॥

**जावतिया तिसमयाहारगस्स सुहुमस्स पणगजीवस्स ।**
**ओगाहणा जहण्णा ओधीखेत्तं जहण्णं तु ॥२९॥५८५**
**जो जोयणसाहस्सो मच्छो णियए सरीरदेसम्मि ।**
**उववज्जंतो पढमे समए संखिवति आयामं ॥५८६॥**
**पतरमसंखेज्जंगुलभागतणुं मच्छदेहवित्थिण्णं ।**
**[3]बितिए ततिए सूचिं संखिवितुं होति तो पणओ ॥५८७॥**

**जाव०** गाहा । **जो** गाहा । **पत०** गाहा । यः किल योजनसहस्रायामो मत्स्यः स्वशरीरबाह्यदेश एवोत्पद्यमानः प्रथमसमये संक्षिपत्यायामं द्वितीयसमये-ऽङ्गुलासंख्येयभागबाहल्ये स्वदेहविष्कम्भविस्तीर्णं प्रतरम्, तृतीयसमयेऽङ्गुलासङ्ख्येयभाग-विष्कम्भां मत्स्यदेहविष्कम्भायामामात्मप्रदेशसूचीं संक्षिप्याङ्गुलासंख्येयभागमात्र एवो-पपद्यते । सूक्ष्मपनको नाम वनस्पतिविशेषः ॥५८५–५८७॥

**उववातातो ततिए समए जं देहमाण[४०–प्र०]मेतस्स ।**
**[4]तण्णेयदव्वभायणमोधीखेत्तं जहण्णन्तुं ॥५८८॥**

**उव०** गाहा । उपपादसमयात्तृतीये समये यावदस्य शरीरं तद्धि त[ज्]-ज्ञेयद्रव्यभाजनं जघन्यमवधिक्षेत्रमुच्यते ॥५८८॥

**किं मच्छोतिमहल्लो किं तिसमइयो व्व कीस वा सुहुमो ।**
**गहितो कीस व पणओ किं व जहण्णावगाहणओ ॥५८९॥**

---

१ °क्कोस्स° को हे । २ °च्छि° को जे ह त । ३ बीए को हे । ४ जण्णे° को । ५ °हन्नं तं ॥ हे को । ६ °मयओ व हे को ।

मच्छो महल्लकायो संखित्तो जो अ तीहि समएहिं ।
[1]स इर पयत्तविसेसेण सण्हमोगाहणं कुणति ॥५९०॥
सण्हतरा सण्हतरो सुहुमो पणओ जहण्णदेहो य ।
सुबहुविसेसविसिट्ठो सण्हतरो सव्वदेहेसु ॥५९१॥

**किं मच्छो** गाहा । प्रश्नमात्रम् । **मच्छो** गाहा । **सण्ह०** गाहा । उच्यते—यो योजनसहस्रायामो मत्स्यस्त्रिभिश्च समयैरात्मानं संक्षिपति, स किल प्रयत्नविशेषादतिसूक्ष्मावगाहनं कुरुते नान्यः । स एव सूक्ष्मः पनको जघन्यावगाहन इत्युत्तरोत्तरविशेषणा[त्] सूक्ष्मतरसूक्ष्मतमश्चेत्युक्तं भवति ॥५८९–५९१॥

पढमबितिएऽतिसण्हो जमतित्थूलो चउत्थयातीसु ।
ततियसमयम्मि जोग्गो[4] गहितो तो तिसमयाहारो ॥५९२॥

**पढम०** गाहा । प्रथमद्वितीयसमययोरतिसूक्ष्मः, चतुर्थादिष्वतिस्थूलः, तृतीयसमय एव तद(द्)योग्य इत्यतस्तद्ग्रहणम् ॥५९२॥

केयि[5] दो [6]झससमया ततिओ पणयत्तणोववातम्मि ।
अह तिसमयिओ[7] आहारगो य सुहुमो य पणओ य ॥५९३॥

**केयि** गाहा । केचिदाहुः—मत्स्यायाम-विष्कम्भसंक्षेपसमयद्वयं चोपपादसमयश्चेत्येतेभ्यः त्रयः समयाः [यस्य] स त्रिसमयोऽविग्रहाच्चाहारकः, ततश्च सूक्ष्मः पनकश्चेति ॥५९३॥

उववाते चेयं[8] तओ जतो जहण्णो ण सेससमएसु ।
तो इर तद्देहसमाणमोधिखेत्तं जहण्णं तु ॥५९४॥

**उव०** गाहा । उपपादसमय एवासौ जघन्यावगाहनो न शेषसमयेषु, यतश्च जघन्यावगाहन एवोक्तो न विमध्यावगाहनः, अतस्तत्प्रमाणमवधिक्षेत्रं जघन्यमिति । तच्च न, त्रिसमयाहारकत्वस्य पनकविशेषणान्मत्स्यसमयद्वय(या)प्रसङ्गः । अन्यभवाहारकत्वे वा त्रिसमयाहारकविशेषणमनर्थकं त्रिसमयाहारकापेक्षया जघन्यावगाहनायाः । न च प्रथमसमयोपपन्नोऽपि सर्वथा निषिध्यति तेन यस्त्रिसमयोपपन्नजघन्यावगाहनतुल्यः । किन्तु न त्वयं सूत्राभिप्राय इति ॥५९४॥

सव्वबहुअगणिजीवा णिरंतरं जत्तियं [9]भरेज्जंसु ।
खेत्तं सव्वदिसागं परमोधी खेत्तणिद्दिट्ठो ॥३०॥५९५॥

---

१ सो किर **को हे** । २ °यरो **जे** । ३ °मबिइए अति हे । ४ जोगो **त** । ५ केई **को हे** । ६ दो ज्झस° **त** । ७ तिसमओ **को हे** । । ८ चेव **को हे त** । ९ °भरि° **को हे** ।

अव्वाघाते सव्वासु कम्मभूमीसु जं तता[४०–द्वि]रम्भा ।
सव्वबहवो मणूसा होन्तजितजिणिन्दकालम्मि ॥५९६॥
उक्कोसया य सुहुमा जता तदा सव्वबहुगमगणीणं ।
परिमाणं संभवतो तं छद्धा पूरणं कुज्जा ॥५९७॥
एक्केकागासपदेसजीवरयणायं सावगाहे य ।
चतुरंसघणं पयॅरं सेढी छॅट्ठे सुतादेसो ॥५९८॥

**सव्व०** गाहा । **अव्वा०** गाहा । **उक्को०** गाहा । [**एक्के०** गाहा] । सर्वबहवोऽग्निजीवा गर्भजमनुष्यबाहुल्यात्तदारम्भकत्वात्तेषाम्, ते च सर्वबहवः प्रायेणाजितस्वामिकाले यदा चोत्कृष्टपदिनः । सूक्ष्मास्तु एते बहवोऽग्निजीवाः सम्भवतः षोढावस्थाप्येरन् बुद्ध्या एकैकाकाशप्रदेशजीवावगाहनया सर्वतश्चतुरस्रं घनमाद्यम् । एतदेव स्वावगाहनाभिः, एवं पुनरपि(प्रतरमपि) द्विभेदम् । श्रेणिश्च । षष्ठविरचनाविशेषस्तु सूत्राभिप्रायो न शेषम्, अतिस्तोकत्वात् ॥५९५–५९६–५९७–५९८॥

घणपतरसेढिगणितं णणु तुल्लं चिय विकप्पणा कीस ।
छॅद्धा कीरति भण्णति पुरीसपॅरिक्खेवतो भेदो ॥५९९॥

**घण०** गाहा । आह—ननु घनप्रतरश्रेणिगणितानामविशेषः क्षेत्रतस्संवेष्टितविततकम्बलोदाहरणात्, अतः प्रतिप्रतिप्रदेशस्वावगाहनाभेद एव युक्तः । उच्यते—अस्ति सर्वतः पुरुषपरिक्षेपकृतो भेदः । स च पश्चोत्तरमसङ्ख्येयगुणः॥५९९॥

णिययावगाहणागणिजीवसरीरावली समंतेणं ।
भामिज्जति ओधिणाणिदेहपज्जंततो सा य ॥६००॥
अतिगंतूणमंलोगं लोगागासप्पमाणमेत्ताइं ।
ठाति असंखेज्जाइं इदमोधिखेत्तमुक्कोसं ॥६०१॥

**णिय०** गाहा । [**अतिगं०** गाहा] । इह षष्ठो विरचनाविशेषः स्वावगाहनाभिरग्निजीवश्रेणिरवधिज्ञानिनः सर्वतः शरीरपर्यन्ताद् भ्राम्यते । सा चासङ्ख्येयानलोके लोकानतीत्यावसीयते । इदमवधिक्षेत्रमुत्कृष्टम् ॥६००–६०१॥

सामत्थमेत्तमेतं जति दट्ठव्वं भवेज्ज पेच्छेज्जं ।
ण तु[11] तं तत्थत्थि जतो सो रूविणिबंधणो भणितो ॥६०२॥

---

१ कुणइ को हे । २ °णाए को हे त । ३ °गाए त । ४ पकरं जे । ५ छट्ठो को हे त । ६ च्छट्ठा जे । ७ °पर° त । ८ °णाण° जे । ९ °ण अलो को हे । १० °उजा को हे । ११ ण य को हे ।

[1]वड्ढंतो उण बाहिं लोयत्थं चेव पासई दव्वं ।
सुहुमयरं सुहुमयरं परमोही जाव परमाणुं ॥६०२॥

**साम०** गाहा । सामर्थ्यमात्रमिदं–यदि हि तद् द्रष्टव्यं भवेदेतावति क्षेत्रे पश्येन्न परतः । न त्वलोके द्रष्टव्यमस्ति, रूपिद्रव्यविषयत्वादवधेः ॥६०२॥

भणितं जहण्णमुक्कोसयं च खेत्तं विमज्झिमं सेसं ।
[४१–प्र०]एतस्स कालमाणं वोच्छं जं जम्मि खेत्तम्मि ॥६०३॥

**भणितं** गाहा । उक्तं जघन्यमुत्कृष्टं चावधिक्षेत्रम् । इदानीं मध्यमं वक्ष्यामः ॥६०३॥

अंगुलमावलियाणं भागमसंखेज्ज दोसु संखेज्जा ।
अंगुलमावलिअंतो आवलिया अंगुलपुधत्तं[2] ॥३१॥६०४॥

हत्थम्मि मुहुत्तंतो दिवसंतो गाउदम्मि बोद्धव्वो ।
जोअण दिवसपुधत्तं पक्खन्तो पण्णवीसाए[3] ॥३२॥६०५॥

भरधम्मि अद्धमासो जंबुद्दीवे य[4] साधियो मासो ।
वासं च मणुअलोए वासपुहुत्तं[5] च रुयगम्मि ॥३३॥६०६॥

खेत्तमसंखेज्जंगुलभागं पासंतमेव कालेणं ।
आवलियाए भागं भूतमणागतं च जाणाति ॥६०७॥

**अंगुल०** गाहा । **हत्थ०** गाहा । **भरध०**गाहा । **खेत्त०**गाहा । इह क्षेत्रमङ्गुलस्यासङ्ख्येयभागमात्रं पश्यन् कालतोऽसंख्येयभागमात्रमेवावलिकायाः पश्यत्यनागतमतीतं च । तद्दर्शनं चोपचारान्मञ्चे क्रोशनवत् ॥ ६०४–६०७ ॥ अन्यथा हि–

तत्थेव य जे दव्वा तेसिं चिय जे हवेज्ज[6] पज्जाया ।
इय खेत्ते कालम्मि य जोएज्जा दव्वपज्जाए ॥६०८॥

**तत्थे०**गाहा । तावति क्षेत्रे यानि द्रव्याणि तद्दर्शनयोग्यानि तत्पर्याया एव च केचित्, नान्यस्येतीत्येवं सर्वत्र क्षेत्रे काले च द्रव्यपर्यायानायोजयेत्तदपेक्षत्वादेव क्षेत्रकालयोः ॥६०८

१ 'अन्यकर्तृका प्रक्षेपगाथा सोपयोगेति' कृत्वा कोट्याचार्यैः, हेमचन्द्रसूरिभिश्च व्याख्याता । सा च **जेतप्रत्योरपि** प्राप्यते ॥ चतुर्थपादे 'परमोही जाव परमाणुं' इति **कोहेत**प्रतिसंमतपाठस्थाने 'बहुबहुतर जाव परमाणू' इति **जे**पाठः । २ पहुत्तं **त** । पुहुत्तं **को हे** । ३ वीसाओ **को हे** । ४ दीवम्मि सा° **को हे त** । ५ वाससहस्सं च **जे** । ६ हवंति **त को हे**।

संखेज्जंगुलभाए आवलियाए वि मुणति ततिभागं ।
अंगुलमिह पेच्छंतो आवलिअंतो मुणति कालं ॥६०९॥
आवलियं मुणमाणो संपुण्णं खेत्तमंगुलपुधेत्तं ।
एवं खेत्ते कालं काले खेत्तं च जोएज्जा ॥६१०॥

**संखे**०गाहा । **आवलियं** गाहा । एवं क्षेत्रकालयोः परस्परायोजनं कण्ठ्यम् ॥ ६०९–६१० ॥

संखेज्जम्मि तु काले दीवसमुद्दा वि होन्ति संखेज्जा ।
कालम्मि असंखेज्जे दीवसमुद्दा तु भयणिज्जा ॥३४॥६११॥
[४१–द्वि०]काले असंखए दीवसागरा खुड्डया असंखेज्जा ।
भयणिज्जा तु महल्ला खेत्तं पुण तं असंखेज्जं ॥६१२॥

**संखे** गाहा । **काले** गाहा । वर्षसहस्रात्परतः संख्येयं कालं पश्यन् द्वीपसमुद्रानपि संख्येयान्, अपिशब्दादेकमपि महतो वा संख्येयभागमसंख्येयभागं वा पश्यति । असंख्येयं तु कालं पश्यन् ह्रस्वानसंख्येया[न्], इतरान् संख्येयान्, एकदेशमथवा तदंशं वा पश्येत् । क्षेत्रं तु योजनैरसंख्येयमेव तदिति ॥६११–६१२॥

काले चतुण्ह वुड्ढी कालो भइतव्वो[4] खेत्तवुड्ढीए ।
वुड्ढीयें दव्वपज्जव भयितव्वा खेत्तकाला तु ॥३५॥६१३॥
काले पवड्ढमाणे सव्वे दव्वा ततो पवड्ढन्ति ।
खेत्ते कालो भइतो वड्ढंति तु दव्वपज्जाया ॥६१४॥
भयणायँ खेत्तकाले परिवड्ढंतेसु दव्वभावेसु ।
दव्वे वड्ढति भावो भावे दव्वं तु भयणिज्जं ॥६१५॥

**काले** गाहा । **काले प०** गाहा । **भय**०गाहा । कालस्य वृद्धौ द्रव्यादिचतुष्टयस्य वृद्धिः । क्षेत्रवृद्धौ तु काल एव भाज्यो वर्द्धते न वा, द्रव्यं पर्यायाश्च वर्द्धन्त एव, द्रव्यपर्यायवृद्धौ क्षेत्रकालौ भजनीयौ वर्द्धेयातां न वा । द्रव्यवृद्धौ भावो वर्द्धते, भाववृद्धौ तु द्रव्यं भाज्यमिति ॥६१३–६१४–६१५॥

अण्णोण्णणिबद्धाणं जहण्णयादीण खेत्तकालाणं ।
समयप्पदेसमाणं किं तुल्लं होज्ज हीणधियं ॥६१६॥

---

१ पहुत्तं त । पुहुत्तं को हे । २ °हा य भइयव्वा । को हे । °हा य भ° त । ३ य को हे त । ४ °व्वु को । ५ वुड्ढीए त को हे । ६ °लाओ का हे । ७ °णाए खे° को हे ।

**अण्णो**०गाहा । इह जघन्ययोः क्षेत्रकालयोरङ्गुलावलिकाऽसंख्येयभागयोस्तथा विमध्यमयोर्द्वयोरुत्कृष्टयोर्वा परस्परतः प्रदेशसमयसंख्यया किं तुल्यता आहोस्विद्धी-नाधिकत्वमिति ? ॥६१६॥ उच्यते—सर्वतः प्रतियोगिनः कालादसंख्येयगुणं क्षेत्रम्. यतः-

**सुहुमो य होति कालो तत्तो सुहुमतरयं हवइ खेत्तं ।**
**अंगुलसेढीमेत्ते ओसप्पिणिओ असंखेज्जा ॥३६॥६१७॥**
**खेत्तं बहुतरमंगुलसेढीमेत्ते पदेसपरिमाणं ।**
**जमसंखेज्जोसप्पिणिसमयसमं थोवओ कालो ॥६१८॥**

**सुहु**०गाहा । **खेत्तं** गाहा । इह कालस्तावत्सूक्ष्मो यस्मादुत्पलपत्रशतव्येध-नकालाः पृथगसंख्येयसमयाः । न च विभाव्यन्ते, तथापि त्वस्मात् सूक्ष्मतरं क्षेत्रम्, यतोऽङ्गुलश्रेणिप्रदेशाग्रमसंख्येयावसर्पिणीसमयपरिमाणमुक्तम् ॥६१७–६१८॥

**कालो खेत्तं दव्वं भावो य जधुत्तरं सुहुमभेता ।**
**थोवाऽसंखाऽणंताऽसंखा य जमोधिविसयम्मि ॥६१९॥**
**सव्वमसंखेज्जगुणं कालातो [४२-प्र०]खेत्तमोधिविसयम्मि ।**
**अपरोप्परसंबद्धं समयपदेसप्पमाणेणं ॥६२०॥**
**खेत्तपएसेहिंतो दव्वमणंतगुणितं पदेसेहिं ।**
**दव्वेहिंतो भावो संखगुणोऽसंखगुणितो वा ६२१॥**

**कालो** गाहा । **सव्व**०गाहा । **खेत्त**०गाहा । इह काल-क्षेत्र-द्रव्य-भावानां यथो-त्तरं सूक्ष्मताऽनुमेया, यतः सर्वत्रावधिविषये पृथक्प्रतियोगिभ्यः स्तोकः कालः, ततः क्षेत्रमस-संख्येयगुणम्, ततो द्रव्यं प्रायोऽनन्तगुणम्, ततः पर्यायः संख्येयगुणोऽसंख्येगुणो वा, यतो वक्ष्यते—"दव्वाओ असंखेज्जे संखेज्जे आवि पज्जवे लभइ" [७५६]त्ति ॥६१९–६२०–६२१॥

**भणितं खेत्तपमाणं तं माणमितं भणामि दव्वमेतो ।**
**तं केरिसमारंभे परिणिट्ठाणे विमज्झे वा ॥६२२॥**

**भणि**०गाहा । उक्तं क्षेत्रपरिमाणम् । तच्च द्रव्यपरिसंख्यानार्थमेवोक्तम्, अत-स्तमिदानीं द्रव्यं वक्ष्यामः । तच्चारम्भेऽवसाने चावधेः किंविधं विमध्ये चेति ? ॥६२२॥

**तेयाभासादव्वाण अंतरा एत्थ लभति पट्ठवओ ।**
**गुरुलहु अगुरुयलहुअं तं पि य तेणेव णिट्ठाति ॥३७॥६२३॥**

---

१ °मयरं को हे । २ °खेज्ज जे । ३ खेत्तविसेसेहिंतो जे । ४ °मियं त ।

पट्ठवओ णामाऽवधिणाणस्सारंभओ ततादीए ।
उभयायोग्गं पेच्छति तेयाभासंतरे दव्वं ॥६२४॥

तेया०गाहा । पट्ठ०गाहा । प्रस्थापको नामारम्भकोऽवधेः । स तैजस-वाग्-द्रव्ययोरन्तराले तयोरयोग्यमन्यदेव द्रव्यं लभते पश्यतीत्यर्थः ॥६२३–६२४॥

गुरुलहु तेयासण्णं भासासण्णमगुरुं य पासेज्जा ।
आरंभे जं दिट्ठं दट्ठूणं पडति तं चेव ॥६२५॥

गुरु०गाहा । तच्च यदि तैजसद्रव्यासन्नमतो गुरुलघु, वाग्द्रव्यासन्नं चेदगुरु-लघु । यच्चारम्भे दृष्टं गुरुलघु चावसानेऽपि तदेवागत्य प्रच्यवते ॥६२५॥

तेयाभासाजोग्गं किमँओग्गं वा तदंतराले जं ।
ओरालियातितणुवग्गणाकमेणं तयं सँज्झं ॥६२६॥

तेया गाहा । आह—किं तत्कियत्प्रदेशं वा यत्तैजसभाषयोर्योग्यं तदन्तराले वा तयोरयोग्यम्? उच्यते— तत्परमाण्वादिक्रमोपचयादौदारिकादिवर्गणानुक्रमेण साध्यम् । ॥६२६॥ अत उच्यते—

ओरालविउव्वाहारतेयभासाणपाणमणकम्मे ।
अह दँव्ववग्गणाणं कमो विवज्जासतो खेत्ते ॥३८॥६२७॥

कुवियण्णगोविसेसोवँलक्खणोवँम्मतो विणेयाणं ।
[४२–द्वि]दव्वातिवग्गणाहिं पोग्गलकायं पँदंसेति ॥६२८॥

ओराल०गाहा । कुवि०गाहा । यथेह कुंचिकर्णो गवामतिबाहुल्याद्विशेषानभिज्ञानां विवदतां गोपानामव्यामोहार्थं समानवर्णादिवर्गविभागतो विभज्यावस्थापितवान् । एव-मिह गोपतिकल्पोऽर्हन् गोपकल्पेभ्यो विनेयेभ्यो गोरूपरूपं पुद्गलास्तिकायमण्वादिवर्ण-विभागतो निरूपयति ॥६२७॥६२८॥

एगा परमाणूणं एगुत्तरवड्ढिता ततो कमसो ।
संखेज्जपतेसाणं संखेज्जा वग्गणा होंति ॥६२९॥

तत्तो संखातीता संखातीतप्पदेसमाणाणं ।
तत्तो पुणो अणंताणंतपतेसाण गंतूणं ॥६३०॥

---

१ °याजोग्गं को हे । २ °मजोग्गं को हे । ३ सव्वं त । मज्झं जे । ४ साणुपा° त । ५ कम्मव° त । ६ °सो विल° त । ७ °णो घ° त । ८ पयंसंति त । पयंसेंति को हे । ९ 'कुविकर्णः' हेटी ।

**ओरालियस्स गहणप्पाओग्गा वग्गणा अणंताओ ।**
**अग्गहणप्पाओग्गा तस्सेव ततो अणंताओ ॥६३१॥**

**एगा** गाहा । **तत्तो** गाहा । **ओरा०** गाहा । तत्र परमाणूनामेकवर्गणा, वर्गो राशिरिति पर्यायाः । द्विप्रदेशिकानामप्येका वर्गणा । एवमेकैकपरमाणुपरिवृद्धा संख्येयप्रदेशिकानां संख्येया वर्गणाः, असंख्येयप्रदेशिकानामसंख्येयाः, ततोऽनन्तप्रदेशिकानामनन्ता विलङ्घ्याऽनन्ता एवौदारिकशरीरयोग्याः, तस्यैवाग्रहणयोग्यास्ततोऽनन्ताः ॥६२९–६३१॥

**एवमओग्गा योग्गा पुणो अओग्गा य वग्गणाऽणंता ।**
**वेउव्वियादियाणं णेयं तिविकप्पमेक्केक्कं ॥६३२॥**

**एव०** गाहा । एवं वैक्रियस्याहारकस्य तैजसस्य भाषायाः प्राणापानस्य मनसः कर्मणश्चानन्तानां त्रयं त्रयमायोजनीयम्—अयोग्यानां योग्यानामयोग्यानां चेति ॥६३२॥

**एक्केक्कस्सादिए पज्जन्तम्मि य हवंतेऽयोग्गाइं[1] ।**
**उभयाजोग्गाइं जतो तेयाभासंतरे पढति ॥६३३॥**

**एक्के०** गाहा । कथं पुनरिदमेकैकस्य त्रयं गम्यते ? यतोऽन्ते तैजसस्यायोग्यानि पठत्यतः सर्वस्य गम्यन्ते, यतश्च भाषादावयोग्यान्यतः सर्वस्यादावयोग्यानि–इति । अयोग्यत्वेऽपि च यथासन्नं तदाभासता गम्यते तैजसभाषोभयाऽयोग्यवत् ॥६३३॥

**कम्मोवरिं धुवेतरसुण्णेतरवग्गणा अणंताओ ।**
**चतुधुवणंतरतणुवग्गणा य मीसो तधच्चित्तो[2] ॥३९॥६३४॥**
**णिच्चं होन्ति धुवाओ इतरा लोए ण होन्ति वि कताइं[3] ।**
**एगुत्तरवेड्ढीए[4] कताइ सुण्णन्तराओ वि ॥६३५॥**
**जाओ हवन्ति ताओ सुण्णन्तरवग्गण त्ति भणन्ति ।**
**णियतं णिरन्तराओ होन्ति असुण्णन्तराओ त्ति ॥६३६॥**

**कम्मो०** गाहा । **णिच्चं** गाहा । **जाओ** गाहा । उपरि कर्मणोऽनन्ताः ध्रुववर्गणाः । ध्रुवा इति नित्याः । ततोऽनन्ता एवाध्रुवाः । अध्रुवा इति कदाचिन्न सन्त्यपि । ततोऽनन्ताः शून्यान्तरवर्गणा एकोत्तरवृद्ध्या व्यवहितान्तरा अपीत्यर्थः । ततोऽनन्ता एवाऽशून्यान्तरवर्गणाः अव्यवहितानन्तरा इत्यर्थः ॥६३४–६३६॥

---

१ हवंति जो° हे । हवंतिऽजो को । २ तहाऽचित्तो को हे । ३ कयाई को हे । ४ वुड्ढी° को हे त ।

धुवणंतराइं चत्तारि जं धु[४३-प्र०]वाइं अणंतराइं [1]च ।
भेतपरि[2]णामतो जा सरीरजोग्ग[3]त्तणाभिमुहा ॥६३७॥
खं[4]धदुअदेहजोग्गत्तणेण वा देहवग्गणाओ[5] त्ति ।
सुहुमो दरगतबा[6]दरपरिणामो मीसयक्ख[7]न्धो ॥६३८॥

धुव० गाहा । [खंध० गाहा ।] ध्रुवाण्यनन्तराणि चेति ध्रुवानन्तराणि । अतश्च-त्वारि भेदपरिणामाभ्यामौदारिकादियोग्यताभिमुखान्मिश्राचित्तस्कन्धद्वयशरीरयोग्यत्वाद्वा चतस्रः शरीरवर्गणाः । सूक्ष्म एवेषद्बादरपरिणामाभिमुखो मिश्रस्कन्धः ॥६३७-८॥

जइणसमुग्घातगतीय[8] चतुहिं समएहि पूरणं कुणति ।
लोगस्स तेहि चेव य संहरणं तस्स पडिलोमं ॥६३९॥

जइ० गाहा । इह विश्र(स्र)सापरिणामविशेषात् केवलिसमुद्घातगत्या लोकमापूरयन् उपसंहरंश्चाचित्तमहास्कन्धो भवति ॥६३९॥

जइणसमुग्घातसचित्तकम्मपोग्गलमयं महाखन्धं ।
पति तस्समाऽणुभावो होति अचित्तो महाखंधो ॥६४०॥

जइ० गाहा । केवलिसमुद्घातसचित्तकर्मपुद्गलमहास्कन्धापेक्षया तत्समक्षेत्र-कालानुभावत्वादचित्तमहास्कन्धव्यपदेशः ॥६४०॥

सव्वुक्कोसपदेसो एसो[10]केयिं[9] ण चायमेगंतो ।
उक्कोसपतेसो जमवगाहठितितो चतुट्ठाणो ॥६४१॥
अट्ठप्फासो य जतो भणितो एसो य जं चतुप्फासो ।
अण्णे वि ततो पोग्गलभेता संति त्ति सद्धेयं ॥६४२॥

सव्वु० गाहा । अट्ठ० गाहा । अयं च सर्वोत्कृष्टप्रदेश इति केचिदाचक्षते । न चायमेकान्तः, यस्मादुत्कृष्टप्रदेशोऽवगाहनास्थितिभ्यामसंख्येयभागहीनादिभेदाच्चतुः-स्थानपतितः । अयं च तुल्यः अष्टस्पर्शश्च पठ्यते । चतुःस्पर्शश्चायमतो नावश्यमुत्कृष्ट-प्रदेशोऽयम्, अत एव चान्येऽपि पुद्गलविशेषास्सन्तीति श्रद्धेयम् ॥६४१-६४२॥ ते एवेदानीं पुद्गलाः क्षेत्रतश्चिन्त्यन्ते—

एगपतेसोगाढाण वग्गणेग्गो[12] पदेसव[13]ड्ढीए ।
संखेज्जोगाढाणं संखेज्जा वग्गणा त्तो ॥६४३॥

---

१ 'च' नास्ति जे । २ °रिमाणतो त । ३ °जोगत्त° त । ४ गंध° जे । ५ °णाउ को हे । ६ बायर को हे । ७ मीसयख° जे । ८ गतीए को हे त । ९ महक्खं° को । १० केई को हे । कोई त । ११ °हट्ठी° को हे । १२ °णेगा को हे । १३ °वुड्ढी° को हे त ।

**तत्तो संखातीता संखातीतप्पदेसमाणीणं ।**
**गंतुमसंखेज्जाओ जोग्गाओ [२]कम्मणो भणिता ॥६४४॥**
**तत्तो संखातीता तस्सेय पुणो हवंत[३]ऽयोग्गाओ ।**
**[४३-द्वि] माणसदव्वादीण वि एवं तिविकप्पमेक्केक्कं ॥६४५॥**

**एग०** गाहा । **तत्तो०** गाहा । [ **तत्तो०** गाहा ] तत्रैकप्रदेशोहिनामै(*शावगाहिनामे)का वर्गणा । ते पुनः परमाणवः, स्कन्धाश्च केचिद् । द्विप्रदेशावगाहिनामप्येका वर्गणा । ते तु स्कन्धा एव द्व्यणुकादयः । एवमेकैकप्रदेशवृद्ध्याऽसंख्येयप्रदेशावगाहिनामसंख्येया विलङ्घ्य कर्मणो योग्यानामसंख्येयाः । ततस्तस्यैव(वा)योग्यानां पु[नः] असङ्ख्येयत्व[म्,] मनोद्रव्यादीनामप्येवमेव त्रयं त्रयमायोजनीयमिति ॥६४३-६४४-६४५॥ कालतः—

**[४]एक्का समयंठितीणं संखेज्जा संखसमयंठितियाणं ।**
**होन्ति असंखेज्जाओ ततो असंखेज्जसमयाणं ॥६४६॥**

**एक्का** गाहा । एकसमयस्थितीनामेका वर्गणा । ते पुनरविशेषेणाणवः स्कन्धाश्च । एवमेकैकसमयवृद्ध्या सङ्ख्येयसमयस्थितीनां संख्येयाः, असंख्येयसमयस्थितीनामसंख्येयाः ॥६४६॥ भावतः—

**एगा एगगुणाणं एगुत्तरवं[६]ड्ढिता ततो कमसो ।**
**संखेज्जगुणाण ततो संखेज्जा वग्गणा होन्ति ॥६४७॥**
**संखातीतगुणाणं संखातीता य वग्गणा तत्तो ।**
**होन्ति अणंतगुणाणं दव्वाणं वग्गणाऽणन्ता ॥६४८॥**
**वण्णरसगंधफासाण होन्ति वीसं समासभेतेणं ।**
**गुरुलहुअगुरुलहूणं बातरसुहुमाण दो वग्गा ॥६४९॥**

**एगा** गाहा । **संखा०** गाहा । **वण्ण०** गाहा । एकगुणानामेका वर्गणा । एकगुणकृष्णादीनामित्यर्थः । तेऽप्यविशेषेणाऽणवः स्कन्धाश्च । एवमेकैकगुणवृद्ध्या संख्येयगुणानां संख्येयाः, असंख्येयगुणानामसंख्येयाः, अनन्तगुणानामनन्ताः । इत्येवं वर्णगन्धरसस्पर्शानां पृथक् स्वभेदतो विंशतिर्विधयः[७] सन्ति । गुरुलघूनां बादराणमेका वर्गणा । अगुरुलघूनां सूक्ष्माणामेका । एवमेते भावविधयः[८] ॥६४७-६४८-६४९॥

---

१ °मतीणं जे । २ कम्मु° को हे त । ३ हवति जो° को हे जे । ४ एगा को हे । ५ °यट्ठि° हे । ६ °वुड्ढि त का हे । ७ °यसतो गु°-इति प्रतौ । ८ अत्र प्रतौ-'०२'-इति दृश्यते ।

**भणितं तेयाभासाविमज्झदव्वावगाहपरिमाणं ।**
**[1]ओधीणाणारंभो परिणिट्ठाणं च [2]जं तेसु ॥६५०॥**

**भणितं** गाहा । उक्तं तैजसभाषावैर्गणयोरन्तराले यत्तदयोग्ययोर्द्रव्यावगाहनादिस्वाभाव्यम्, यत्रावधिरुत्पद्यतेऽवसीयते च [ गा० ६२३–६२५ ] ॥६५०॥

**गुरुलहुदव्वारद्धो गुरुलहुदव्वाइं पेच्छितुं पच्छा ।**
**इतराइं कोइ पेच्छइ विसुज्झमाणो कमेणेव ॥६५१॥**
**अगुरुलहुसमारद्धो उँड्ढं वद्धति कमेण सो णाधो ।**
**वद्धंतो च्चिय कोई पेच्छति इतराइं सयराहं ॥६५२॥**

**गुरु०** गाहा । **अगुरु०** गाहा । तत्र किल यो गुरुलघुद्रव्येषूत्पद्यते स वर्द्धमानो अधस्तान्येव तावत्पश्यति, कश्चित्पश्चात्क्रमेणैवागुरुलघूनि । अगुरुलघुषूत्पन्नस्तूर्ध्वमेव प्रवर्द्धमान एव कश्चिद् गुरुलघून्यपि [ पश्यति इति ] ॥६५१–६५२॥

**गुरुलहुमगुरुलहुं वा तेयाभासंतरे त्ति णिद्दिट्ठं ।**
**ओरालियादियाणं किं गु[४४–प्र०]रुलहुमगुरुलहुअं वा ॥६५३॥**

**गुरु०** गाहा । इह तैजसभाषयोरन्तराले गुरुलघ्वगुरुलघु चेत्युक्तम्, नौदारिकादेः* । तत्र किं गुरुलघु [अ]गुरुलघु वेति ? ॥६५३॥

**ओरालियवेउव्वियआहारगतेय गुरुलहू दव्वा ।**
**कम्मर्गमणभासाई एताइं अगुरुलहुआइं ॥४०॥६५४॥**

**ओरालि०** गाहा । औरालिकादिचतुष्टयं तदाभासद्रव्याणि च गुरुलघूनि, शेषाण्यगुरुलघूनि ॥६५४॥

**गुरुअं लहुअं उभयं णोभयमिति वावहारियणयस्स ।**
**दव्वं [9]लेट्ठू दीवो वायू वोमं जधासंखं ॥६५५॥**
**णिच्छयतो सव्वगुरुं सव्वलहुं वा ण विज्जते दव्वं ।**
**बातरमिह गुरुलहुअं अगुरुलहुं सेसयं सव्वं ॥६५६॥**

**गुरु०** गाहा । **णिच्छ०** गाहा । गुर्वादिचतुष्टयं व्यवहाराभिप्रायः । निश्चयतो गुरुलघ्वगुरुलघू चेति ॥६५५–६५६॥

**जइ गुरुअं लहुअं वा ण सव्वधा दव्वमेंत्थि तो कीस ।**
**[11]उड्ढमधो वि य गमणं जीवाणं पोग्गलाणं च ॥६५७॥**

---

१ ओहिन्नाणा° को हे त । २ च तं जेसु को हे । ३ °षाणास्तदन्तं°–इति प्रतौ । ४ उड्ढं वड्ढइ को हे । ५ °राहिं त । ६ ओरालाईयाणं को हे । ७ °कायस्त्र–इति प्रतौ । ८ कम्मगम° को हे त । ९ लद्धु जे । लेद्धू त । १० °मिच्छओ की° त । ११ उड्ढ° हे को त ।

उड्ढं लहुकम्माणं भणितं गुरुकम्मणामधोगमणं ।
जीवाणं पोग्गला वि य उड्ढाधोगामिणो पायं ॥६५८॥

जइ० गाहा । उड्ढ० गाहा । व्यवहाराभिप्रायो व्यवहाराभिधानम् । ॥६५७–६५८॥

अण्ण च्चिय गुरुलहुता अण्णो दव्वाण विरियपरिणामो ।
अण्णो गतिपरिणामो णावस्सं गुरुलहुंण्णिमित्तो ॥६५९॥

परमलहूणमणूणं जं गमणमधो वि तत्थ को हेतू ।
उड्ढं धूमातीणं थूलतराणं पि किं कज्जं ? ॥६६०॥

किं व विमाणातीणं णाधोगमणं महागुरूणं पि ।
तणुतरदेहो देवो ह[४४–द्वि०]क्खुवति व किं महासेलं ? ॥६६१॥

अध तस्स वीरियं तं तो णाधोगमणकारणं गुरुता ।
उड्ढंगतिकारणं वा लहुता एगंततो जुत्ता ॥६६२॥

विरियं गुरुलहुयाणं जधाधियं गतिविवज्जयं कुणति ।
तध गतिठितिपरिणामो गुरुलहुताओ विलंघेति ॥६६३॥

अण्ण० गाहाओ पञ्च । निश्चयनयाभिप्रायात्प्रत्यवस्थानमिह–नावश्यं गुरुलघुताभ्यामेव गतिरनैकान्तिकत्वात्, किन्तु वीर्यमपि हि गतिस्थित्योः कारणम्, तत्परिणामश्च, यथा चेदं देवस्य वीर्यं महाशैलगुरुतातोऽतिरिच्यमानमधोगतिघाताय, अग्न्यादीनां चोर्ध्वगतिविघाताय, तथा गतिपरिणामोऽपि गुरुलघुशक्तिविघाताय, स्थितिपरिणामश्चेति ॥६५९–६३॥

भणितो खेत्तद्धाणं सुद्धाणं चिय परोप्परणिबन्धो ।
इह ताणं चिय भण्णति दव्वेण समं णिबन्धोऽयं ॥६६४॥

भणितो गाहा । इह क्षेत्रकालयोः शुद्धयोरेव परस्परनिबन्धोऽङ्गुलावलिकासंख्येयभागादिरुक्तः । तयोरेव चेदानीमुक्तलक्षणेन द्रव्येण सह निबन्धोऽभिधीयते ॥६६४॥

संखेज्ज मणोदव्वे भागो लोगपलियस्स बोधव्वो ।
संखेज्जकम्मदव्वे लोगे थोवूणयं पलियं ॥४१॥६६५॥

१ उड्ढं को हे ता । २ जीवा य पो° को हे त । ३ उड्ढा° को हे त । ४ वीरि° को हे । ५ °णिमित्ता । ६ जे उड्ढं को हे । ७ उड्ढं को हे । ८ °हुताणं जे । ९ ताइं जे । १० सुद्दठाणं त । ११ थोऊ° को हे । थोवू त ।

**लोगपलियाण भागं संखतिमं मुणति जो मणोदव्वं ।**
**संखेज्जे पुणो[1] भाए पासति जो[2] कम्मणो[3] [4]जोग्गे ॥६६६॥**

**संखे०** गाहा । **लोग०** गाहा । इह मनोद्रव्यं [5]पश्यन् क्षेत्रतो लोकस्य संख्येयं भागं, कालतस्तु पल्योपमस्य जानीते । कर्मद्रव्यं पश्यन् लोकपल्योपमयोः पृथक् संख्येयान् भागान् जानीते ॥६६५–६६६॥

**सयलं लोगं पासं पासति पल्लोवमं स देसूणं ।**
**सुद्धाण किमत्थाणे गहणमिधं खेत्तकालाणं[6] ॥६६७॥**
**कम्मद[7]व्वमतीतो पेच्छति दुगमेत्तियं ति जं भणितं ।**
**उवरिं पि ततो कमसो साधेज्जा[8] तदणुमाणेणं ॥६६८॥**

**सय०**गाहा । **कम्म०**गाहा । समस्तं लोकं पश्यन् पल्योपमं देशोनम् । [आ]ह—किमिह शुद्धयोरेव लोकपल्योपमक्षेत्रकालयोर्ग्रहणं द्रव्योपनिबन्धनाधिकारे ? उच्यते—कर्मद्रव्यमतिक्रम्य इयत् क्षेत्रं कालं च पश्यतीत्येतस्य ज्ञापनार्थम् । अत एव च तदुपर्यपि ध्रुववर्गणादिद्रव्यं पश्यतः क्षेत्रकालवृद्धिरनुमेया ॥६६७–६६८॥

**तेया कम्मसरीरे तेयादव्वे य भासदव्वे य ।**
**[४५–प्र०]बोद्धव्वमसंखेज्जा दीवसमुद्दा य कालो य ॥४२॥६६९॥**
**एताइं जतो कम्मदव्वेहिंतोऽतिथूलतरयाइं ।**
**तेयातियाइं तम्हा थोवतरा खेत्तकाल त्थ ॥६७०॥**

**तेया** गाहा । **एता०** गाहा । यतस्तैजसादीनि कर्मद्रव्येभ्यः स्थूलतराणि, अतस्तत्क्षेत्रकालाभ्यामेषां क्षेत्रकालावल्पतरौ । एषां तु यथोत्तरं सूक्ष्मत्वात् क्षेत्रकालबाहुल्यं प्रत्येतव्यम् । आह—जघन्यावधेस्त्रिसमयाहारकावगाह[9]काऽभिधानात्तत्रस्थानामेव केषाञ्चिद् द्रव्याणां दर्शनमुक्तं न सर्वेषाम्, यस्मादुत्पत्तौ गुरु लघु वा पश्यतीत्युक्तं न सर्वम् । अत एव च विमध्यमस्यापि च प्रदेशसमयादिवृद्ध्याङ्गुलावलिकाऽसङ्ख्येयभागादिवचनात्तत्रस्थानामेव दर्शनमुक्तम्, तथा मनोद्रव्यादीनाम् । ॥६६९–६७०॥ परमावधेस्तु साक्षादुक्तमतः किमसावप्यसर्वपुद्गलविषयो जघन्यमध्यमवत् ? उच्यते—

**एगपदेसोगाढं परमोधी लभति कम्मगसरीरं ।**
**लभति य अगुरुअलहुअं तेयसरीरे भवपुधत्तं[10] ॥४३॥६७१॥**

---

१ पुण को हे । २ जं त । ३ कम्मुणो को हे । ४ जोग्गं जे को हे । जुग्गे त । ५ पश्येत् इति प्रतौ । ६ °लेणं त । ७ °कम्मद° हे । ८ °ज्जो जे । ९ °हकेमि° इति प्रतौ । १० °पुहुत्त को हे ।

एगपदेसोगाढं पेच्छति पेच्छति य कम्मगतणुं पि ।
अगुरुलहुदव्वाणि य चसद्दतो गुरुलहूइं[1] पि ॥६७२॥
तेयसरीरं पासं पासति सो भवपुंधत्तमेगभवे[2] ।
णेगेसुं बहुतरए सरेज्ज ण तु पासंती[3] सव्वे ॥६७३

एग० गाहा । [एग० गाहा । तेय० गाहा । ] एकप्रदेशावगाढः परमाणुः, द्व्यणुकादयश्च केचित्, कार्मणं च शरीरमित्येतत् परमावधिर्लभते, पश्यतीत्यर्थः, लभते अगुरुलघुद्रव्यमपि, चशब्दाद्गुरुलघू द्रव्यं च । एकवचनं च जात्यपेक्षया । अन्यथा हि सर्वाण्येकप्रदेशावगाढानीत्युक्तं भवेत्[4] । यः पुनस्तैजसं शरीरं पश्यति स भवपृथक्त्वं[5] पश्यति । पृथक्त्वसंज्ञा च सर्वत्र द्वाभ्यामारभ्यानवभ्यः । य एव हि तैजसं पश्यतः प्रागसङ्ख्येयः कालोऽभिहितः, स एवेह भवपृथक्त्वेन विशेषितः ॥६७१–६७२–६७३॥

एगपदेसोगाढे भणिते किंधं[6] कम्मयं पुणो भणितं ।
एगपदेसोगाढे दिट्ठे का कम्मए चिन्ता ॥६७४॥
अगुरुलहुगहणं पि य एगपदेसावगाहतो सिद्धं ।
सव्वं वा सिद्धमंतो[7] रूवगतं लभति सव्वं[8] पि॥६७५॥
एगोगाढे भणिते वि[9] संसयो सेसएं[10] जहाऽऽरंभे ।
सण्हतरं पेच्छंतो थूलतरं ण मुणति घडादी ॥६७६॥
जध वा मणोविदो[11] णत्थि दंसणं सेसएऽतिथूले वि ।
[४५–द्वि] एगोगाढे गहिते तध सेसे संसयो होज्ज ॥६७७॥
इय णाणविसयवइचित्तसंभवे संसयावणोदत्थं ।
भणिते वेगोगाढे केयि विसेसे पदंसेन्ति[12] ॥६७८॥

एग० गाहा । अगु० गाहा [एगो० जध वा० इय० गाहा] । आह—एकप्रदेशावगाढस्यातिसूक्ष्मत्वात्तद्दर्शनादेव कार्मणादीनामपि दर्शनं गम्यते । किमिह तद्ग्रहणम् ? अथवैकप्रदेशावगाढदर्शने सत्यप्यत्र संशयो भवेत् । इत्येवं ज्ञानविषयवैचित्र्यसम्भवे सति संशयापनोदार्थमेकप्रदेशावगाहिग्रहणे सत्यपि शेषोपदर्शनमिति ॥६७४–६७८॥

एगोगाढग्गहणेऽणुगादयो कम्मयं ति जा सव्वं ।
तदुवरिमं[13]गुरुलहूइं[14] चसद्दतो गुरुलहूइं पि ॥६७९॥

---

१ °इं ति को हे । २ °पुहुत्त° को हे त । ३ पासए को हे । ४ भवति–इति प्रतौ । ५ भवात्पृ°–इति प्रतौ । ६ किं को हे त । ७ °मितो को हे त । ८ सव्वं ति को हे त । ९ °तें सं° को । १० सेसपञ्जवारंभे जे । ११ विउ हे । १२ पयंसति को हे । °सं पदं° त । १३ °रि अगु° को हे । १४ °हूणं च° जे ।

**एवं वा सव्वाइं गहिताइं तेसिमेव णियमत्थं ।**
**सव्वं रूवगतं ति य [1]एतं चिय णावरमतो त्थि ॥६८०॥**

**एगो** गाहा । **एवं** गाहा । अथवैकप्रदेशावगाहिग्रहणात् परमाण्वादि-ग्रहण[मा]कार्मणात् । तस्य च कण्ठ्याभिधानात्तदुत्तरेषां चाऽगुरुलघुग्रहणात्, चशब्दाच्च गुरुलघूनामित्येवं वा सर्वपुद्गलविशेषोपदर्शनम् । अस्यैव च नियमार्थमुत्तरत्र सर्वरूपगत-ग्रहणम् । एतदेव हि सर्वरूपगतं नान्यदिति ॥६७९–६८०॥

**परमोधि असंखेज्जा लोग[2]मेत्ता समा असंखेज्जा ।**
**रूवगतं लभति सव्वं खेत्तोवमियं अगणिजीवा ॥४४॥६८१॥**
**खेत्तमसंखेज्जाइं लोगसमाइं [3]समाओ कालं च ।**
**दव्वं सव्वं रूवं पासति तेसिं च पज्जाए ॥६८२॥**

**पर०** गाहा । **खेत्त०** गाहा । परमावधिविषयं क्षेत्रतः असंख्येयानि लोक[4]मा-त्राणि, कालतोऽवसर्पिण्युत्सर्पिण्यः, द्रव्यतः सर्वं रूपगतम्, भावतो वक्ष्यमाणास्तत्पर्याया एव ॥६८१–६८२॥

**खेत्तोवमाणमुत्तं जमगणिजीवेहिं किं पुणो[5]ऽभिहितं ।**
**तं चिय संखा[6]तीताइं लोगमेत्ताइं णिद्दिट्ठं ॥६८३॥**

[**खेत्तो०** गाहा] । आह–पूर्वमेवाग्निजीवोपमानमुक्तम् । इह किं पुनरुच्यते ? सत्यमुक्तम्, इह तदेवासङ्ख्येयलोकतया विशेष्यते ॥६८३॥

**अधवा दव्वं भणितं इध रूवगतं ति खेत्तकालदुगं ।**
**रूवाणुगतं पेच्छति ण [7]तयं चिय तं जतोऽमुत्तं ॥६८४॥**

**अधवा** गाहा । अथवैकप्रदेशावगाढमित्येतस्यामेव गाथायां[६७१] परमावधि-द्रव्यपरिमाणमुक्तम्, इह तु 'रूपगतं लभते' इति क्षेत्र-कालद्वयविशेषणरूपद्रव्यानुगतं क्षेत्रकालद्वयं लभते, न केवलम्, अरूपत्वात् । अग्निजीवोपमितं वा यत्र सर्वरूपिद्रव्या-नुगतं लभत इति सम्बन्धनीयम् ॥६८४॥

**परमोधी[8]णाणविदो केवलमंतोमुहु[४६–प्र०]त्तमेत्तेण ।**
**मणुअक्खयोवसमियो भणितो तिरियाण वोच्छामी ॥६८५॥**

**पर०** गाहा । इह परमावधिज्ञानिनां किल केवलमन्तर्मुहूर्त्तमात्रेणोत्पद्यते । मनुष्य-क्षायोपशमिकोऽभिहितस्तिरश्चां वक्ष्यामः ॥६८५॥

---

१ एवं **त** । २ लोगमि° **हे** । लोगमि° **को** । ३ समाणका° **को** । समाउ **हे** । ४ °कयात्रा–इति प्रतौ । ५ पुणो भणियं । **को हे त** । ६ संखाइयाइं **हे त** । ७ न य तं चिय **को हे त** । ८ °मोहिण्णाणविऊ **त** । °मोहिन्नाण° **हे** ।

**आहारतेयलंभो उक्कोसेणं तिरिक्खजोणीसु[1]।**
**गाउत जहण्णमोधी णरएसु तु जोयणुक्कोसो ॥४५॥६८६॥**
**ओरालियवेउव्विय आहारगतेयगाइं [2]तिरिएसु ।**
**उक्कोसेणं पेच्छति जाइ च तदंतरालेसु ॥६८७॥**

**आहार०** गाहा । **ओरालि०** गाहा । इहौदारिका[दा]रम्याहारतेजोद्रव्याणि यावत्तदन्तरालाऽयोग्यानि च तिर्यक्ष्[3]वैवधिविषयाः ॥६८६–६८७॥ भवप्रत्ययोऽधुना । स चादौ नारकाणामुच्यते—

**भणितो खओवसमियो भवपच्चइयस्स[4] चरिमपुढवीए ।**
**गाउअमुक्कोसेणं पढमाए जोयणं होति ॥६८८॥**
**चत्तारि गाउताइं अद्धुट्ठाइं तिगाउअं चेयं[5] ।**
**अड्ढातिज्जा दोण्णि तु[6] दिवड्ढमेगं च णरएसु ॥४६॥६८९॥**
**[7]अद्धुट्ठगाईआइं जहण्णयं अद्धगाउतंताइं ।**
**जं गाउतं ति भणितं तं पति उक्कोसयजहण्णं ॥६९०॥**

[8]**भणितो** गाहा । **चत्ता०** गाहा । **अद्धु०** गाहा । चतुर्गव्यूतादिप्रमाणमुत्कृष्टं रत्नप्रभादिषु, तदेव सर्वत्रार्द्धगव्यूतोनं जघन्यम् । यत्तूक्तं 'गाउत जहण्णमोधी' [६८६] त्ति तदुत्कृष्टानामेव सतानां जघन्यमङ्गीकृत्य य(अ)स्तु । सप्तम्यां जघन्यः सा(अ)र्द्ध-गव्यूतमिति ॥६८८–६९०॥ देवानामुच्यते ।

**सक्कीसाणा पढमं दोच्चं च सणंकुमारमाहिन्दा ।**
**तच्चं च बंभलंतय सुक्कसहस्सारग चउत्थिं ॥४७॥६९१॥**
**आणतपाणतकप्पे देवा पासंति पंचमिं पुढविं ।**
**तं चेव आरणच्चुत ओधी[9]णाणेण पा[10]संति ॥४८॥६९२॥**
**छट्ठिं हेट्ठिममज्झिमगेवेज्जा सत्तमिं च उवरिल्ला ।**
**संभिण्णलोगणालिं पासन्ति अणुत्तरा देवा ॥४९॥६९३॥**

**सक्की०** गाहा । **आणत०** गाहा । **छट्ठिं०** गाहा । इदमधोवधिप्रमाण-मुक्तम् ॥६९१–९३॥

**[ ४६–द्वि ] एतेसिमसंखेज्जा तिरियं दीवा य सागरा [11]च्चेव ।**
**बहुतरयं उवरिमया उड्ढं च सकप्पथूभाती ॥५०॥६९४॥**

---

१ °सु य जो° **को हे त** । २ निरएसु **को** । ३ °क्ष्वविधि°-इति प्रतौ । ४ °इओ स च° **को हे त** । ५ चेव **को हे त** । ६ य **को हे त** । ७ अद्धुट्ठग इयाइं **हे** । अद्धुट्ठाईआइ **त** । अद्धुट्ठाईआइं **जे** । अद्धुट्ठगाउयाइं **को** । ८ एते द्वे प्रतीके प्रतौ व्यत्ययेन वर्तेते । ९ ओहिण्णा° **को हे** । १० पिच्छंति **त** । ११ चेव **को हे** ।

**एतेसिं** गाहा । एतेषामेव हि शक्रादीनां तिर्यगसंख्येयाः द्वीपसमुद्राः। त एवोपर्युपरि बहुतराः प्रत्यवसेयाः । ऊर्ध्वं तु स्वकल्पविमानस्तूपध्वजादयः। इदं तावद्वैमानिकानामुक्तम् ॥६९४॥ शेषदेवानामिदं सामान्यमुच्यते—

**संखेज्जजोयणा खलु देवाणं अद्धसागरे ऊणे ।**
**तेण परमसंखेज्जा जहण्णयं पण्णवीसं तु ॥५१॥६९५॥**
**वेमाणियवज्जाणं सामण्णमिणं तधा वि तु विसेसो ।**
**उड्ढमधे तिरियं[2] पि य संठाणवसेण विण्णेयो ॥६९६॥**

**संखेज्ज०** गाहा । [वेमाणि० गाहा]। इहोनार्द्धसागरोपमस्थितीनां संख्येयानि योजनानि, अर्द्धसागरोपमादिस्थितीनामसंख्येयानि योजनानि । वैमानिकवर्जानामेतत् सामान्यमुक्तं तथापि तूर्ध्वमधस्तिर्यक् च संस्थानविशेषात् प्रमाणविशेषो विज्ञेयः ॥६९५–६९६॥

**[4]पणुवीसजोयणाइं दसवाससहस्सिया [5]ठिती जेसिं ।**
**दुविधो वि जोतिसाणं संखेज्जो[6] ठितिविसेसेण ॥६९७॥**
**वेमाणियाणमंगुलभागमसंखं जहण्णओ होति ।**
**उववाते परभविओ तब्भवजो होति तो पच्छा ॥६९८॥**

**पणु०** गाहा। **वेमाणि०** गाहा। पञ्चविंशतियोजनो जघन्यः। स च दशवर्षसहस्रस्थितीनाम्। संख्येययोजन एव हि ज्योतिष्काणाम्, असंख्येयस्थितित्वात्। वैमानिकानामङ्गुलस्यासङ्ख्येयभागः। स च किलोपपाद एवान्यभवप्रत्ययस्त[त्पश्चात्त]-द्भवज इति ॥६९७–९८॥

**उक्कोसो मणुयेसुं मणुस्सतेरिच्छएसु तु जहण्णो ।**
**उक्कोसो[8] लोगमेत्तो पडिवाति परं अपडिवादी ॥५२॥६९९॥ दारं ।**

**उक्कोसो** गाहा । उत्कृष्टो मनुष्येष्वेव नान्येषु। मनुष्यतिर्यग्योनिष्वेव जघन्यः। शेषाणां मध्यम एव । उत्कृष्टो लोकमात्र एव प्रतिपाती न परत इति क्षेत्रमानमुक्तम् ॥६९९॥ संस्थानमुच्यते—

**थिबुआगारजहण्णो वट्टो उक्कोसमायतो किंचि[9] ।**
**अजहण्णमणुक्कोसो य खेत्ततोऽ[10]णेगसंठाणो ॥५३॥७००॥**

---

१ य त। २ तिरियम्मि य को हे त । ३ संठाण को हे। ४ पण्णवी हे । पणवी को। ५ ठिई को हे। ६ °ज्जठिई को हे त। ७ °रिच्छिएसु य को हे त । ८ °सलो° को हे त। ९ किंची को। १० °त्तओ अणे° हे।

पणओ थिबुआगारो तेण जहण्णाऽ[1]वधी तदागारो ।
इतरो सेढिपरिक्खेवतो [ ४७-प्र० ] सदेहाणुवत्तीए ॥७०१॥

**थिबु०** गाहा । [**पणओ** गाहा ।] स्तिबुको [2]बिन्दुरपदिश्यते । तदाकारो जघन्यावधिः, सर्वतो वृत्त इत्यर्थः, पनक[3]क्षेत्रस्य तदाकारत्वात् । उत्कृष्टस्त्वायतः किञ्चिद-ग्निजीवश्रेणिपरिक्षेपात् स्वदेहानुवृत्तितः । अजघन्योत्कृष्टोऽनेकाकृतिः । तत्र नानाकारत्वेऽपि प्रतिनियताकारोऽवस्थिता[4]ऽऽकारश्च नारकदेवानाम्, मनुष्यतिरश्चामनेकाकारोऽवस्थितोऽ-नवस्थितश्च[5] ॥७००-७०१॥

तप्पागारे पल्लगपडहगझल्लरि[6]मुतिंगपुप्फजवे ।
तिरियमणुएसु ओधी णाणाविधसंठितो भणितो ॥५४॥७०२॥

णेरइयभवणवणयरजोतिसकप्पालयाणमोधिस्स ।
गेवेज्जणुत्तराण य होन्तागि[7]तियो जधासंखं ॥७०३॥

तप्पेण समागारो तप्पागारो [8]स चाययत्तंसो ।
[9]उद्धायतो य पल्लो उवरिं च स किंचि संखित्तो ॥७०४॥

णच्चायतो समो विय पडहो हे[10]ट्ठूवरि[11]पि तितो सो ।
चम्पावण[12]द्ध वित्थिण्णवलयरूवा य झल्लरिया ॥७०५॥

उद्धायतो [13]मुतिंगो हे[14]ट्ठे रुंदो तधोवरिं तणुओ ।
पुप्फसिहावलिरइता चंगेरी पुप्फचंगेरी ॥७०६॥

जवणालओ त्ति [15]भण्णाति उब्भो सरकं[16]चुओ कुमारीए ।
अह सव्वकालनियतो कातादिक्को[17] व सेसाणं ॥७०७॥

णाणागारो तिरियमणुएसु मच्छा सयंभुरमणे[18] व्व ।
तत्थ वलयं णिसिद्धं [19]तस्सिह पुण [20]तयं पि होज्जाहि[21] ॥७०८॥

भवणवति[22]वणयराणं उद्धं[23] बहुगो अधो य सेसाणं ।
णारगजोतिसियाणं तिरियं [४७-द्वि०] ओरालिओ चित्तो ॥७०९॥

**तप्पा०** गाहा [८] । संस्थानमुक्तम् ॥७०२-७०९॥ आनुगामुकादयो-ऽपदिश्यन्ते—

अणुगामिओ [24]तु ओधि णेरइयाणं तधेव देवाणं ।
अणुगामि[25]येऽणणुगामी मीसो य मणुस्सतेरिच्छे ॥५५॥७१०॥

---

१ °ण्णोवधी जे । २ थिंबु-इति प्रतौ । ३ पडक°-इति प्रतौ । ४ °ताभार°-इति प्रतौ । ५ °तस्य-इति प्रतौ । ६ मुयंग त । ७ गिईओ को हे त । ८ सया भवे त्तंसो जे । ९ उब्ढा° को हे त । १० हिट्ठो हे को । ११ पईए त । पईओ हे को । १२ °विच्छ° हे को त । १३ मुयंगो त । १४ हेट्ठा को हे । हिट्ठो त । १५ भणिओ हे को । १६ कंबु त १७ क्को विसेसाणं हे त को । १८ मणो व्व त । १९ तस्स पु° जे । २० तंपि को हे त । २१ होज्जाति को । २२ °तिवंतरा° को हे त । २३ उड्ढं का हे त । २४ य को हे । २५ °गामी अण° को हे ।

अणुगामिओऽणुगच्छति गच्छंतं लोअणं जधा पुरिसं ।
इतरो य णाणुगच्छति ठित[1]प्पदीवो व्व गच्छंतं ॥७११॥

उभयसभावो मीसो देसो जस्साणुजाति णो अण्णो ।
कासइ गतस्स [2]गच्छइ एगं उवह[3]यम्मि जधच्छि ॥७१२॥

अणु० गाहाओ ३ । अनुगामुकोऽनुगमनशीलो लोचनवत् । इतरोऽनानुगामुकः, स्थितप्रदीपवत् । एकदेशानुगमनशीलो मिश्रो देशान्तरैकलोचनोपघातवत् । ॥७१०–७१२॥ अवस्थितोऽधुना–

खेत्तस्स अवट्ठाणं तेत्तीसं सागरा[4] तु कालेणं ।
दव्वे भिण्णमुहुत्तो पज्जवलंभे य सत्तट्ठ ॥५६॥७१३॥

अद्धाए अवट्ठाणं [5]च्छावट्ठिं सागरा तु कालेणं ।
उक्कोसयं तु एतं एक्को समओ जहण्णेणं ॥५७॥७१४॥

आधारे उवओगे लद्धीए वा [6]भवेज्जऽवत्थाणं ।
आधारो से खेत्तं तेत्तीसं सागरा तत्थ ॥७१५॥

विजया[7]तिसूववाते जत्थोगाढो भवक्खयो[8] जाव ।
खेत्तऽवे[9]तिट्ठति तहिं दव्वेसु अ देहसयणेसु ॥७१६॥

खेत्त० गाहा ४ । इहावधेरवस्थानम्–आधारो(रः–उ)पयोगलब्धितश्चिन्त्यते । क्षेत्रमस्याधारस्तत्राविचलितस्त्रयस्त्रिंशत् सागरोपमाण्यवतिष्ठते विजयादिषु द्रव्येषु च शरीरादिषु ॥७१३–७१६॥

दव्वे भिण्णमुहुत्तं तत्थऽण्णत्थ व हवेज्ज खेत्तम्मि ।
उवयोगो ण तु परतो सामत्थाभावतो तस्स ॥७१७॥

दव्वे गाहा । उपयोगस्तद्व्यापारः । स च द्रव्येऽन्तर्मुहूर्त्तमेव स्यान्न परतः । ॥७१७॥

दव्वे तत्थेव गुणे[10] संचरतो सत्त [४८–५०] वऽट्ठ वा समेया[11] ।
अण्णे पुण अट्ठगुणे भणंति तप्पज्जवे सत्त ॥७१८॥

---

१ ठियपईवो को हे । २ कत्थइ जे । ३ °हम्मति जे त । ४ सागराइ का° त ।
५ °णं छावट्ठी को । णं छावट्ठि हे । ६ वा हविज्ज को हे । ७ °याईसु° को हे ।
८ °क्खए त । ९ °वचिट्ठ° को । १० गुणा को हे । ११ वाससया जे ।

दव्वे गाहा। तत्रैव द्रव्ये रूपादावन्यत्रान्यत्र च गुणे सञ्चरतः सप्ताष्टौ वा समयाः। अन्ये तु गुणे अष्टौ समयान्मन्यन्ते तत्पर्याये सप्तेति ॥७१८॥

जध जह सुहुमं वत्थुं तध तध थोवोवयोगता होति[1]।
दव्वगुणपज्जवेसुं तध पत्तेयं पि णातव्वं ॥७१९॥

जध गाहा। यथोत्तरं द्रव्यगुणपर्यायाणां सूक्ष्मत्वात् स्तोकोपयोगता। पृथक् पृथगपि च सूक्ष्मत्वादेव द्रव्यादिषूपयोगभेदः ॥७१९॥

तत्थण्णत्थ य खेत्ते दव्वे गुणपज्जवोवयोगे अ।
चिट्ठति लद्धी सा पुण णाणावरणक्खयोवसमो ॥७२०॥
[2]सा सागरोवमाइं [3]च्छावट्ठिं होज्ज सातिरेगाइं।
विजयोतिसु दो वारे गतस्स णरजम्मणा समयं ॥७२१॥

तत्थ० गाहा। सा सा० गाहा। लब्धिस्तदावरणक्षयोपशमलाभः। सा हि तत्रान्यत्र क्षेत्रे तदन्यद्रव्यगुणपर्यायोपयोगे यावत्तिष्ठत एव। सा च षट्षष्टिः सागरोपमाण्यधिकानीति ॥७२०–७२१॥

सव्वजहण्णो समयो दव्वातिसु होति सव्वजीवाणं।
[6]सो तु सुरणारयाणं हवेज्ज किध खेत्तकालेसु ॥७२२॥
चरिमसमयम्मि सम्मं पडिवज्जंतस्स जं चिय विभंगं।
तं होति ओधिणाणं मंतस्स बितियम्मि से [8]पडति ॥७२३॥

सव्व० गाहा। चरि० गाहा। सर्वद्रव्यादिषु जघन्यतः समयमवस्थानम्। तच्च मनुष्यतिरश्चां प्रतिपातादुपयोगाच्च सर्वथाऽप्यविरुद्धम्। देवनारकाणां तु क्षेत्र-कालतश्चरमसमयसम्यक्त्वप्रतिपत्तौ विभङ्गाज्ञानमेवावधिः सम्पद्यतेऽनन्तरसमयप्रच्युतस्य प्रच्यवत इति ॥७२२–७२३॥ चलो हि पुनरनवस्थित इत्यर्थः। संवर्द्धमानो हीयमानो वा। तत्र च–

[9]वड्ढी वा हाणी वा चतुव्विधा होति खेत्तकालाणं।
दव्वेसु होति दुविधा[10] छव्विह पुण पज्जवे होति॥५८॥७२४॥
[11]वड्ढी वा हाणी वाऽणंताऽसंखेज्जसंखभागाणं।
संखेज्जाऽसंखेज्जाऽणंतगुणा चेति [12]च्छब्भेता ॥७२५॥

१ होइं त। २ सो को। ३ छा° को हे त। ४ °याईसु हे। ५ दव्वाईसु हे। ६ स पुण ह्व° को हे त। ७ गतस्स को हे। ८ पड्ढति त। ९ °वु को हे त। १० °धा तु पज्जवे छव्विधा होति जे। ११ वु° को हे १२ चेति छ को हे त।

**वड्ढी** गाहा । [वड्ढी गाहा] इह वृद्धिर्हानिर्वा षड्विधा चिन्त्यते । तद्यथाऽनन्तभागवृद्धिरसङ्ख्येयभागवृद्धिः सङ्ख्येयभागवृद्धिः सङ्ख्येयगुणवृद्धिरसङ्ख्येयगुणवृद्धिरनन्तगुणवृद्धिरिति ॥७२४–७२५॥ तत्र क्षेत्रकालयोश्चतुर्विधा वृद्धिर्हानिर्वा । तद्यथा—

**पतिसमय[1] असंखेज्जतिभागधियं कोइ संखभागधियं ।**
**अण्णो [ ४८–द्वि ] संखेज्जगुणं खेत्तमसंखेज्जगुणमण्णो ॥७२६॥**
**पेच्छति विवड्ढमाणं हायंतं वा तधेव कालं पि ।**
**णाणंतवड्ढिहाणी पेच्छति जं दो वि णाणंते ॥७२७॥**

**पति०** गाहा । **पेच्छ०** गाहा । नानन्तभागवृद्धिरनन्तगुणवृद्धिर्वा क्षेत्रस्य कालस्य वा, तयोरनन्तयोरदर्शनात् ॥७२६–७२७॥

**दव्वमणंतं सहियं अणंतगुणवड्ढितं च पेच्छेज्जा ।**
**हायंतं वा भावम्मि छव्विधा वड्ढिहाणीयो ॥७२८॥**

**दव्वं** गाहा । द्रव्यस्यानन्तभागवृद्धिरनन्तगुणवृद्धिर्वा, तथा हानिरपि । पर्यायाणां षड्विधापि वृद्धिर्हानिर्वा ॥७२८॥

**वड्ढीए च्चिय वड्ढी हाणी हाणीए ण तु विवज्जासो ।**
**भागे भागो गुणणे गुणो य दव्वातिसंजोए ॥७२९॥**

**वड्ढी०** गाहा । इह द्रव्यादिचतुष्टयस्य परस्परतो वृद्धौ वृद्धिरेव, हानौ हानिरेव, अवस्थानं वा भवेत् । न तु विपर्यासः । तथा भागवृद्धौ भागवृद्धिरेव गुणवृद्धौ च गुणवृद्धिरेव प्रायेण ॥७२९॥

**किध खेत्तमसंखभागादिसंभवे संभवो ण दव्वे वि ।**
**किध वा दव्वेऽणंते पज्जवसंखेज्जभागाति ॥७३०॥**

**किध** गाहा । आह– कथं हि क्षेत्रस्यासंख्येयभागादिवृद्धौ सत्यां त[द्] द्रव्याणामसङ्ख्येयभागादिवृद्धिर्न स्यात्,तद्विपञ्चनत्वात् द्रव्यस्य ? कथं वा द्रव्यस्यानन्तभागवृद्धौ तत्पर्यायाणामसंख्येयभागादिवृद्धिः, द्रव्यानन्तगुणवृद्धौ वा पर्यायाणामसंख्यातगुणादिवृद्धिस्तन्निबन्धनत्वात्तेषाम् ? ॥७३०॥ उच्यते—

**खेत्ताणुवत्तिणो पोग्गला गुणा पोग्गलाणुवत्ती य ।**
**सामण्णा विण्णेया ण [13]तु ओधिण्णाणविसयम्मि ॥७३१॥**

---

१ °यमसं° को हे । २° ज्जइभा° को हे । ३ °वुड्ढि° को हे त । ४ °णंतब्भधियं जे । ५ °वुड्ढि° को हे त । ६ वु° को हे त । ७ भागो भागे त । ८ प्रतौ–वड्ढी । ९ तस्स° जे । °स अस° हे को । १० दव्वाणं° को हे त । ११ गाइं को हे । १२ °द्धिरनन्तुणवृद्धिस्तन्नि°–इति प्रतौ । १३ °ण ओ° त ।

दव्वाइं सखेत्तातोऽणंतगुणा पज्जवा सदव्वातो ।
णिययाधाराधीणा तेसिं [1]वड्ढी य हाणी य ॥७३२॥
ण तु णिययाधारवसादे[2]वधिणिबंधो जतो परित्तो सो ।
चित्तो तधण्णधा वि य आणंगेज्झो[3] य पाएण ॥७३३॥

खेत्ता० गाहाओ ३ । इह ये क्षेत्रानुवृत्त्या पुद्गला परिसंख्यायन्ते पुद्गलानुवृत्त्या च तद्गुणास्तत्सामान्यतो[4] न त्ववधिविषये । तत्र स्वक्षेत्रादनन्तगुणाः पुद्गलाः, पुद्गलेभ्यश्च स्वपर्याया इत्यतो यावत्येव क्षेत्रस्य वृद्धिर्हानिर्वा तावत्येव हि द्रव्यस्य, तदाधारकत्वात् । यावती च द्रव्यस्य तावत्येव पर्यायस्य । न त्विह सामान्यमाश्रीयते प्रतिनियतविषयत्वाच्चित्रत्वाच्चावधिनिबन्धनस्येति । चलोऽभिहितः ॥७३१–७३३॥ तीव्रमन्दाविदानीम्—

फड्ढा[5] य असंखेज्जा संखेज्जा यावि एगजीवस्स ।
[४९–५०]एगप्फड्डु[6]वयोगे णियमा सव्वत्थ उवयुत्तो ॥५९॥७३४॥
फड्ढा[7] य आणुगामी अणाणुगामी य मीसया च्चेवं[8] ।
पडिवाति[9]अपडिवाती मिस्सा[10] य मणुस्सतेरिच्छे ॥६०॥७३५॥
जालंतरत्थदीवप्पभोवमो फड्ड[11]गावधी होति ।
तिव्वो विमलो मंदो मलीमसो मीसरूवो य ॥७३६॥

फड्ढा गाहा । फड्ढा गाहा । जालं० गाहा । इह फड्डगमवधिज्ञेयविशेषः । तानि चासंख्येयानि संख्येयानि चैकजीवस्य गवाक्षजालादिव्यवहितप्रदीपप्रभावत् । तच्च तीव्रो विशुद्धः मन्दश्चाविशुद्धश्शेषः साधारणतीव्रमन्दोभयप्रकृतिरूपो वा ॥७३४–३६॥

उवयोगं एगेण वि [12]दंतो सो फड्ड[13]एहि सव्वेहि ।
उवयुज्जति जुगवं[14] च्चिय जध समयं दोहि णयणेहि ॥७३७॥

उव० गाहा । तत्रैकेनाप्यंशेनोपयुज्यमानः सर्वे एवोपयुज्यते, एकोपयोगत्वादात्मनो नयनद्वयोपयोगवत् । अथवा प्रकाशमयत्वात् प्रदीपोपयोगवत् ॥७३७॥ आह—

[15]किध णोवयोगबहुता भण्णति ण विसेसतो स सामण्णो ।
तग्गतविसेसविमुहो खं[16]धावारोवयोगो[17] व्व ॥७३८॥

---

१ वुड्ढी को हे त । २ °वसा अव° को हे । ३ °गज्झो त । °गब्भो हे । ४ °तो नभो न त्वविधिविषये–इति प्रतौ । ५ फड्ढा को हे । पुड्ढा त । ६ °फड्ड° को हे । एग य फड्डुव° त । ७ फड्ढा को हे त । ८ चेव का हे । ९ °वाई का हे । १० मीसाणि म° त । ११ फड्ड° को हे त । १२ दिंतो को हे । १३ फड्ड° को हे त । १४ चिय को हे । १५ कह को । १६ °धागारो° त । १७ °योग्गो जे ।

**किध** गाहा।[1] कथमनेकैरुपयुज्यमानस्याप्यनेकोपयोगता न स्यात्? उच्यते–ननूक्तमेकोपयोगत्वादात्मनो न द्वयोपयोगवचनम्, अथवानेकवचनम्। अथवाऽनेकवस्तुविशेषोपयोगे एतत् स्यात्, न चायं तद्धर्मा। किं तर्हि? सामान्योपयोगोऽयं तद्गतविशेषवैमुख्या[त्] स्कन्धावारोपयोगवत् ॥७३८॥

**अणुगामिणियतसुद्धाइं सेतराइं[2] च मीसयाइं च।**
**एक्केक्कसो विभिण्णाइं फड्डयाइं विचित्ताइं ॥७३९॥**

**अणु०** गाहा। इहानुगामिकादीनि फड्डकानि एकैकशः प्रतिपातीन्यप्रतिपातीनि मिश्राणि च। पुनश्च पृथक् तीव्रमध्यमन्दादीनि ॥७३९॥

**णियताणुगामियाणं को भेतो को व[3] तव्विवक्खाणं।**
**णियतोऽणुजाति णियमा णियतो[4]ऽणियतो व[5] अणुगामी ॥७४०॥**

**णिय०** गाहा। नियतानुगमिकयोः[6] कः प्रतिविशेषः?, अनानुगामुकप्रतिपातिनोः वेति? अप्रतिपात्यनुयात्येव[7]। अनुगच्छत् पुनः प्रतिपात्यप्रतिपाती वेति शेषः ॥७४०॥

**चयति[8] च्चिय पडिवाती अणाणुगामी चुतो पुणो होति।**
**णरतिरिगहणं[9] पायो जं तेसु विसोधिसंकेसा ॥७४१॥**

**चय०** गाहा। पतत्येव प्रतिपाती। पतितोऽपि सन्पुनरुत्पद्यतेऽनानुगामुक इति। तीव्रमन्दता च विशुद्धिसंक्लेशविशेषात्। स च तिर्यक्षु मनुष्येषु चेत्यतस्तद्ग्रहणम्। ॥७४१॥

**[४९-द्वि०]गहणमणुगामियादीण किं कतं तिव्वमंदचिन्ताए।**
**पायमणुगामिणियता तिव्वा मन्दा य जं इतरे ॥७४२॥**

**गह०** गाहा। आह–तीव्रमन्दाधिकारे किमानुगामुकादिग्रहणम्? उच्यते–यतः प्रायेणानुगामुको[10]ऽप्रतिपातिनौ[11] तीव्रौ, इतरौ मन्दौ, उभयस्वभावता मिश्रयोरिति ॥७४२॥

**अण्णे पडिवातुप्पातदारं[12] एवाणुगामियादीणि।**
**णरतिरियग्गहणेणं अधवा दोसुं पि ण विरुद्धं[13] ॥७४३॥**

---

१ आह क०–इति प्रतौ। २ सेसतराइं त। ३ वि त। ४ °यताणि° जे। ५ व्व त। ६ °गतिक°–इति प्रतौ ७ °नुपातेवानु°–इति प्रतौ। ८ चयए त। ९ °ग्गह°–हे। १० °मुकोप्र°–इति प्रतौ। ११ °तिनो–इति प्रतौ। १२ °दारमेव जे। १३ °द्धा जे।

**अण्णे** गाहा। अन्ये त्वाचार्याः प्रतिपात्युत्पादिद्वार एवानुगामुकादीनाऽऽचक्षते तिर्यङ्मनुष्यग्रहणलिङ्गात्। न चेदमुभयत्रापि न घटतेऽर्थत इति ॥७४३॥ प्रतिपात्युत्पादिनाविदानीम्—

**बाहिरलंभे भज्जो दव्वे खेत्ते य काल-भावे य।**
**उप्पा[1]-पडिवातो वि य तदुभयं चेगसमएणं ॥६१॥७४४॥**
**बाहिरओ एगदिसो फड्डोधी वाऽहवा असंबद्धो।**
**दव्वातिसु भयणिज्जा तत्थुप्पातातयो समयं[2] ॥७४५॥**

**बाहि०** गाहाओ ३(२)। तत्र द्रष्टुर्बहिर्योऽवधिस्तस्य लाभो बहिर्लभः। तस्य चैकस्यां दिशि यः स बाह्यः, अनेकस्यां वा विच्छिन्नः द्रष्टुरसम्बद्धो[3] वेति तद् द्रव्यादिचतुष्टयेषु युगपदुत्पादादयो भजनीया विकल्प्या इत्यर्थः ॥७४४–७४५॥ कथम्?

**उप्पातो पडिवातो उभयं वा होज्ज एगसमएणं।**
**कधमुभयमेगसमए विभागतो तं ण सव्वस्स ॥ ७४६॥**

**उप्पा०** गाहा। इहैकस्मिन् समये कदाचिदुत्पादः, कदाचिद्व्ययः, कदाचिदुभयमपि स्यात्। आह—कथमुत्पादव्ययोभयमेकधर्मस्यैकसमये युक्तम्? उच्यते—नैव हि तत्समस्तस्यावधेः, किन्तु विभागतः। ॥७४६॥ कथम्?

**दावाणलो व्व कत्थइ लग्गति विज्झाइ[4] समयमण्णत्तो[5]।**
**तध कोइ ओधिदेसो[6] संजायति णासते[7] बितिओ ॥७४७॥**

**दावा०** गाहा। यथेह दावानलो युगपदेकतो विदीप्यतेऽन्यतश्च ध्वंसते तथावधेरप्येकदेशो[8] ऽञ्जायतेऽन्यतश्च प्रच्यवत इति ॥७४७॥

**अ[9]ब्भिन्तरलद्धीए[10] तु तदुभयं णत्थि एगसमएणं।**
**उप्पा[11]पडिवातो वि ये[12] एगतरो एगसमएणं ॥६२ ॥७४८॥**
**अ[13]ब्भिन्तरलद्धी सा जत्थ पदीवप्पभ व्व सव्वत्तो।**
**संबद्धमोधिणाणं अ[14]ब्भिन्तरतोऽवे[15]हिण्णाणी ॥७४९॥**

**अब्भि०** गाहाओ[२]। अभ्यन्तरलब्धिर्नाम यत्र द्रष्टुरवधिः सर्वतः सम्बद्धः प्रदीपप्रभावत् ॥७४८–७४९॥

---

१ उप्पायप° हे। २ समये को हे। ३ °द्धावे°–इति प्रतौ। ४ °इ वि स° त। ५ °मन्नंतो हे। ६ सेजा° हे। ७ बिईओ हे। ८ शोपजा° इति प्रतौ। ९ अब्भं° त। अभिं° को। १०°ए तदु° त। ११ उप्पायप° त। १२ वि एग° हे। १३ अंभि° जे। अब्भ° त। १४ संभिन्त° जे। अब्भ° को हे, १५ °तोवविण्णा° जे। °रओऽवही नाणी को हे त।

[५०-प्र०]उप्पातो विगमो वा दीवस्स व तस्स णोभयं समयं ।
ण भवणणासा समयं वत्थुस्स जमेगधम्मेणं ॥७५०॥

उप्पा० गाहा । न[1] च प्रदीपस्येवोत्पादः प्रतिपातो[3] वैकसमये भवेत् । न तूभयमादशावधित्वात् (?) । न चैकस्यैकपर्यायेणोत्पादव्ययौ युगपदङ्गुल्याऽऽकुञ्चनप्रसारणवत् । धर्मान्तरेण स्याताम् ॥७५०॥

उप्पातव्वयधुवता समयं धम्मन्तरेण ण विरुद्धा ।
जध रिवुवक्कंगुलिया सुरणरजीवत्तणाइं वा ॥७५१॥
उप्पज्जति रिवुताए णासति वक्कत्तणेण तस्समयं ।
ण[4] तु तम्मि चेय[5] रिवुताणासो वक्कत्तभवणं च[6] ॥७५२॥

उप्पा० गाहा [२] । यथेह युगपदृजुतोत्पद्यते वक्रता हीयते अङ्गुलिताऽवतिष्ठते । यथा चेह देवता जायते मनुष्यतोपरमति जीवतो(ता)ऽवतिष्ठते, न तथा यस्मिन्नेवध्येति (?) ॥७५१-७५२॥

लद्धत्तलाभणासो जुज्जति लाभो य तस्स समएणं ।
जति तम्मि चेय णासो णिच्चविणट्ठे[7] कुतो भवणं ॥७५३॥
सव्वुप्पाताभावो[8] तदभावे य विगमो भवे कस्स ।
उप्पातवयाभावे काऽवट्ठिती[9] सव्वधा सुण्णं ॥७५४॥

लद्ध० गाहा [२] । लब्धात्मलाभस्य हि नाशो युज्यते । यदि चात्मलाभसमय एव नाशः स्यात्, नित्यविनष्टत्वाद्भवनमेव न स्यात् ततश्च सर्वाभाव इति ॥७५३-७५४॥

दव्वातीणं तिण्हं पुव्वं भणितो परोप्परणिबन्धो ।
इध दव्वस्स गुणेणं भण्णति दव्वासितो जं सो ॥७५५॥

दव्वा० गाहा । इह 'संखेज्जमणोदव्वे भागो लोगपलितस्स संखेज्जो' (गा०६६५) इत्यादौ द्रव्यादित्रयस्य परस्परनिबन्धोऽभिहितः । इहेदानीं द्रव्य[स्य] गुणेनोच्यते, तस्य द्रव्याश्रितत्वात् ॥७५५॥

दव्वातो असंखेज्जे संखेज्जे यावि पज्जवे लभति ।
दो पज्जवे दुगुणिते लभति अ एगाओ दव्वातो ॥६३॥७५६॥

१ तत्र प्र°-इति प्रतौ । २ °स्य चोत्पा°-इति प्रतौ । ३ °पातोधिक°-इति प्रतौ । ४ णो त° त । ५ चेव त क हे । ६ वा जे । ७ °ट्ठो जे । ८ °भावा को हे । ९ °वट्ठि° हे ।

एगं दव्वं पेच्छं खंधमणुं वा स पज्जवे तस्स ।
उक्कोसमसंखेज्जे संखेज्जे पेच्छते कोयि[1] ॥७५७॥
दो पज्ज[५०–द्वि०]वे दुगुणिते सव्वजहण्णेण पेच्छते ते य ।
वण्णातीयी[2] चतुरो णाणंते पेच्छति कैतायि[3] ॥७५८॥

**दव्वा०** गाहा । **एगं०** गाहा । **दो प०** गाहा । परमाण्वादिद्रव्यं एकं पश्यंस्तत्पर्यायानसङ्ख्येयानुत्कृष्टतः पश्यति, विमध्यमतः संख्येयान्, जघन्यतो वर्णगन्धरसस्पर्शानेव प्रतिद्रव्यम्, न त्वनन्तान् । सामान्यतस्तु द्रव्यानन्तत्वादेवानन्तानिति ॥७५६–५८॥ ज्ञानदर्शनविभङ्गव्यापारः अधुना । किमत्र ज्ञानं दर्शनं विभङ्गो वा । किं वा परस्परतस्तुल्यमधिकं वेति ?—

सागारमणागारा ओधिविभंगा जहण्णया तुल्ला ।
उवरिमगेवेज्जेसु तुं[4] परेण ओधी असंखेज्जो ॥६७॥७५९॥
सविसेसं सागारं तं णाणं णिव्विसेसमणगारं ।
तं दंसणं ति ताइं ओधिविभंगाण तुल्लाइं ॥७६०॥
आरब्भ जहण्णाओ उवरिमगेवेज्जगावसाणाणं ।
परतोऽवधिणाणं चिय ण विभंगमसंखयं तं च ॥७६१॥

**सागार०** गाहा । **सवि०** गाहा । **आरब्भ** गाहा । तत्र यद्विशेषग्राहकं तत्साकारम्, तच्च ज्ञानमिष्टम् । यत्सामान्यग्राहकं तदनाकारम्, तच्च दर्शनम् । तेगवधिर्ज(?)घन्याभ्यामारभ्य सर्वत्र तुल्ये भवतः । पृथक्त्वविभङ्गस्य अवधि[वि]भङ्गयोरपि च परस्परतो जघन्याभ्यामेवारभ्य यावदुपरितन[5]ग्रैवेयकेषु, परतोऽवधिरेव, न विभङ्गः । स चा[6]सङ्ख्येय एव परमावधिरिति ॥७५९–६१॥ इदानीं कस्य देशतः सर्वतो वेति चिन्त्यते—

णेरइय देव तित्थंकरा य ओधिस्सऽबाहिरा होंति ।
पासंति सव्वतो खलु सेसा देसेण पासंति ॥६५॥७६२॥
ओधिण्णाणक्खेत्तब्भन्तरगा होन्ति णारगादीया ।
सव्वदिसोऽवधिविसयो तेसिं दीवप्पभोवम्मो ॥७६३॥

**णेर०** गाहा । **ओधि०** गाहा । नारकदेवास्तीर्थकृतश्चावधिक्षेत्रस्याभ्यन्तरतो वर्त्तन्ते सर्वतो[7]ऽवभासकत्वात् प्रदीपवत् ॥७६२–७६३॥

---

१ कोई को । कोइ त हे । २ वण्णाए य च॰ को । वण्णाई य च॰ हे । ३ कयाई को । कयाइ हे । ४ ॰ज्जेसुं प॰ को । ॰ज्जेसु प॰ हे । ५ ॰रिमाग्रै॰–इति प्रतौ । ६ च सं–प्रतौ । ७ ॰न्ते तसेकत्वत्प्र॰–इति प्रतौ ।

अब्भिन्तर त्ति भणिते भण्णइ पासंति सव्वतो कीस ? ।
[1]ओयति जमसंततदिसो अंतो वि ठितो ण सव्वत्तो ॥७६४॥

अब्भि० गाहा । आह--अभ्यन्तराभिधानादेव सर्वत इति सिद्धम्, किमिह भूयः सर्वग्रहणम् ? उच्यते—यतोऽभ्यन्तरत्वे सत्यपि न सर्वः सर्वतः पश्यति दिगन्तराल[2]ऽदर्शनात् ॥७६४॥

णियतावधिणो अब्भंतरं ति वा संसयावणोदत्थं ।
तो सव्वतोऽभिधाणं भोतु किमब्भिंतरग्गहणं ॥७६५॥

णिय० गाहा । अथवाभ्यन्तरग्रहणात् किं सर्वतः पश्यन्त्याहोश्वित् नियतावधय इति संशयः स्यात् । स मा भूदतः सर्वतोऽभिधानम् । आह—यद्येवं सर्वतो ग्रहणमेवास्तु । अभ्यन्तरग्रहणमनर्थकम् ॥७६५॥

[५१-प्र० ]अब्भिंतरं ति तेणं णियतावधिणोऽवसेसया भइता ।
भवपच्चयातिवचसा सिद्धे कालस्स णियमोयं ॥७६६॥

अब्भिं० गाहा । तस्मादभ्यन्तरग्रहणं नियता[3]ऽवधिविशेषकमेव । आह—ननु भवप्रत्ययादिग्रहणादेव नियतावधित्वं सिद्धम् । उच्यते—भवप्रत्ययत्वे सिद्धेऽपि सर्वकालावस्थायिता न गम्येतातस्तज्ज्ञापनार्थमभ्यन्तरग्रहणमिति ॥७६६॥

सेसँ[4] च्चिय देसेणं ण तु देसेणेव सेसया किंतु ।
देसेण सव्वतो वि य पेच्छंति णरा तिरिक्खा य ॥७६७॥

सेस गाहा । शेषा एव देशतः पश्यन्ति । न तु शेषा देशत एव । किं तर्हि ? सर्वतोऽपीति ॥७६७॥ इदानीं क्षेत्रतोऽवधिश्चिन्त्यते—

संखेज्जमसंखेज्जो पुरिसमबाधायँ[5] खेत्ततो ओधी ।
संबद्धमसंबद्धो लोगमलोगे य संबद्धो ॥६६॥७६८॥
ओधी पुरिसे[6] कोयी संबद्धो जध पभाँ[7] पदीवम्मि ।
दूरंधयारदीवयदरिसणमिव कोयि विच्छिण्णो ॥७६९॥

संखे० गाहा । ओधी गाहा । इह कश्चिदवधिर्द्रष्टरि सम्बद्धो भवति, प्रदीपप्रभावत् । कश्चिच्चासम्बद्धोऽतिवि[प्र]कृष्टतमो दीपदर्शनवत् ॥७६८–७६९॥

संखेज्जमसंखेज्जं[8] व देहातो[9] खेत्तमंतरं कातुं ।
संखेज्जाऽसंखेज्जं पेच्छेज्जँ[10] तदंतरमबाधा ॥७७०॥

---

१ उवइ त । २ °लासन्तानात्–इति प्रतौ । अत्र 'संदर्शनात्' इत्यपि सम्यक् स्यात । ३ ताविधि°–इति प्रतौ । ४ सेसे त । ५ °बाहाए को हे त । ६ पुरिसो' त । ७ °भा व दी° को हे । ८ °ज्जं दे° को हे । °खेज्ज व त । ९ देहतो जे । १० पेच्छइ को हे ।

**संखे०** गाहा । यस्तावदसम्बद्धः संख्येयमन्तरालं कृत्वा पुरुषमबोधित्वेति पुरुषम–संस्पृश्येत्यर्थः । संख्येययोजनोऽसंख्येययोजनो वा । तत्र संख्येयमन्तरं संख्येयोवधिः, संख्येयमन्तरमसंख्येयोवधिः २, असंख्येयमन्तरं संख्येयोवधिः [अ]संख्येयमन्तर-मसंख्येयोवधिरिति सर्वे विधयः सम्भवन्ति । सम्बद्धोऽपि संख्येययोजनोऽसंख्येययोजनो वा ॥७७०॥

**संबद्धासंबद्धे[2] णरलोगंतेसु होन्ति[3] चतुभंगा[4] ।**
**संबद्धो तु अलोए णियमा [5]पुरुसे वि संबद्धो ॥७७१॥**

**संबद्धा०** गाहा । अत्र च पुरुषे सम्बद्धासम्बद्धयोर्लोके च भङ्गचतुष्टयम् । तत्र यो लोकाभ्यन्तरतः स पुरुषे सम्बद्धोऽसम्बद्धो वा, यस्त्वलोके सम्बद्धः स पुरुषे-ऽपि नियमात् सम्बद्ध इति भङ्गत्रयमर्थवत् ॥७७१॥ गत्यादय इदानीम् । गतीति चेति (गा० ५७५) इतिकरण आद्यर्थे द्रष्टव्यः । [6]गतिरिति च गत्यादयश्चेत्यर्थः ।

**गतिणेरइयातीया[7] हेट्ठा जध वण्णिता तधेव इधं ।**
**इड्ढी एसा वण्णिज्जति त्ति तो सेसियाओ वि ॥६७॥७७२॥**

**गति०** गाहा । तत्र गत्यादयः गति-इन्द्रियेत्यादयः [गा० ४०७–८], सत्पदनि-रूपणाविषयः द्रव्यप्रमाणादयश्च[गा० ४०४], नैरयिकादय इति तत्प्रभेदविषयः, ते च यथा मतिश्रुतयोरपदिष्टास्तथेहापि ॥७७२॥ विशेषद्व(°षस्त्व)यम्

**जे पडिवज्जंति मतिं तेऽवहिणाणं पि समधिया अण्णे ।**
**वेतकसायातीता मणपज्जवणाणिणो चेव ॥७७३॥**
**[५१-द्वि०] सम्मा सुरणेरइयाऽणाहारा[8] जे य होन्ति पज्जत्ता ।**
**ते च्चिय पुव्वपवण्णा वियलाऽसण्णि[9] यं मोत्तूणं ॥७७४॥**

**जे** गाहा [२]। इह ये मतिं प्रतिपद्यन्ते तेऽवधिज्ञानमपि । [11]अवेदाऽकषायमनः-पर्यायविदश्चाधिकाः । अनाहारकाः पर्याप्तकाश्च(श्चा)पूर्वसम्यग्दृष्टयो देवनारकाः । पूर्वप्रपन्नास्तु त एव ये मतेरन्यत्र विकलेन्द्रियाऽसंज्ञिभ्यः ॥७७३–७७४॥

इदानीमृद्धिप्राप्तानामनुयोगः व्याख्यानमित्यर्थः । अवधिज्ञानमृद्धिविशेषः तत्सा-मान्याच्छेषर्द्धयोऽपि वर्ण्यन्ते इति—

१ °मपाधि°–इति प्रतौ । २ °द्धो को हे त । ३ होइ को हे त । ४ °गे को हे त ५ पुरि° को हे त । ६ गिरिति–इनि प्रतौ । ७ तीयं त । ८ मयं त । ९ °रा होन्ति जे य प° त । १० °ण्णि पमो° जे । °न्नी य मो° त को हे । ११ अवेदा–इति प्रतौ ।

**आमोसधि विप्पोसधि खेलोसधि जल्लमोसधी चेव ।**
**संभिण्णसोतुंज्जुमति सव्वोसधिमेवं बोधव्वा ॥६८॥७७५॥**
**चारण आसीविसं केवली य मणणाणिणो य पुव्वधरा ।**
**अरहंत चक्कवट्टी बलदेवा वासुदेवा य ॥६९॥७७६॥**
**संफरिसणमामोसो मुत्तपुरीसाण विप्पुसो विप्पो ।**
**अण्णे विदिं त्ति विट्ठा भासन्ति य प त्ति पासवणं ॥७७७॥**

**आमो०** गाहा । **चार०** गाहा । **संफ०** गाहा । आमर्षणमामर्षः संस्पर्शनमित्यर्थः । आमर्ष एवौषधिः आमर्षौषधिः । आमर्षौषधिं प्राप्त आमर्षौषधिप्राप्तः । अथवामर्षः औषधिर्यस्य सोऽयमामर्षौषधिः साधुः । एवमन्यत्रापि । विण्मूत्रावयवो विप्रुट् ॥७७५-७७७॥

**एते अण्णे वि बहू जेसिं सव्वे य सुरभयोऽवयवा ।**
**रोगोवसमसमत्था ते होन्ति तदोसधिप्पत्ता ॥७७८॥**
**जो सुणति सव्वतो मुणति सव्वविसए व्व सव्वसोतेहिं ।**
**सुणइ बहुए व्व सद्दे भिण्णे संभिण्णसोतो सो ॥७७९॥**

**एते** गाहा । **जो सु०** गाहा । यः किल सर्वतः शृणोति, स संभिन्नश्रोता । अथवा श्रोतांसीन्द्रियाणि, सम्भिन्नान्येकैकशः, सर्वविषयैरस्य परस्परतो वेति, संभिन्नान् वा परस्परतो लक्षणतोऽभिधानतश्च बहूनपि शब्दाञ्छृणोति संभिन्नश्रोता ॥७७८–७९॥

**रिजु सामण्णं तम्मत्तगाहिणी रिजुमती मणोणाणं ।**
**पायं विसेसविमुहं घडमेत्तं चिन्तितं मुणति ॥७८०॥**

**रिजु** गाहा । ऋज्वी मतिः रिजुमतिः सामान्यग्राहिणीत्यर्थः । मनःपर्यायविशेषः प्रायो विशेषविमुखमेवोपलभते । नातिबहुविशेषविशिष्टमर्थमिति यावत्, यथा घटोऽनेनानुचिन्तित इति ॥७८०॥

**विपुलं वत्थुविसेसणमाणं तग्गाहिणी मती विपुला ।**
**[५२-प्र०] चिंतितमणुसरति घडं पसंगतो पज्जयेसतेहिं ॥७८१॥**

**विपु०** गाहा । विपुलमतिः बहुविशेषग्राहिणीत्यर्थः । मनःपर्यायविशेष एव । तमेव घटं देशाद्यनेकपर्यायविशिष्टं जानीत इति ॥७८१॥

---

१ °सोय उजु° **को हे त** । २ °सहि चेव बोधव्वो **को हे** । ३ °विसा **हे** । ४ °पुरि° जे । ५ विप्प° **त** । ६ °डि **को हे त** । ७ अण्णे य **त को हे** । ८ °पत्ता **हे** । ९ व **को हे** । १० मुणए **को हे** । ११ पज्जव **को हे** ।

**संखा०** गाहा । संख्याप्रमाणमष्टधाऽभिधाय [अनु० सू० १५०] कालिक-श्रुतपरिमाणसंख्यायामवतारः । सामायिकं परीत्तपरिमाणं परिमितपरिमाणमित्यर्थः । अर्थतोऽनन्तपर्यायत्वादनन्तपरिमाणम् ॥९४६॥

**समयो जो सिद्धंतो सो सपरोभयगतो तिविधभेतो ।**
**तत्थ इमं अज्झयणं ससमयवत्तव्वताणियतं ॥९४७॥**

**समयो** गाहा । वक्तव्यतेदानीम् । स्वसमयवक्तव्यतादिभेदाः [अनु० सू०-१५१] । तत्र समयः सिद्धान्तः । [स्वसमय]वक्तव्यतानियतमिदमध्ययनम्, एवं सर्वाध्ययनानि स्वसमयवक्तव्यतानियतानि ॥९४७॥

**परसमयो उभयं वा सम्मद्दिट्ठिस्स ससमयो जेण ।**
**तो सव्वज्झयणाइं ससमयवत्तव्वणियताइं ॥९४८॥**

**पर०** गाहा । याऽपि हि क्वचिदध्ययने परसिद्धान्तवक्तव्यतोभयवक्तव्यतानुश्रूयते सापि यतः सम्यग्दृष्टेः स्वदर्शनपरिग्रहात् स्वसमयवक्तव्यतैवेत्यतः सर्वाध्ययनानि स्वसमयवक्तव्यतानियतानि ॥९४८॥

**मिच्छत्तसमूहमयं सम्मत्तं जं च तदुवगारम्मि ।**
**वट्टति परसिद्धंतो तस्स तयो ससिद्धंतो ॥९४९॥**

**मिच्छ०** गाहा । यतः सर्वमिथ्यासमूहमयं सम्यक्त्वम्, यतश्च तदुपकार एव परसिद्धान्तः सम्यग्दृष्टेः । अतः स्वसिद्धान्त एवासाविति ॥ ९४९ ॥

**सावज्जजोगविरती अज्झयणऽत्थाधिगार इध सो य ।**
**[६३-प्र०] भणति समुदायत्थो ससमयवत्तव्वतादेसो ॥९५०॥**

**सावज्ज०** गाहा । सावद्ययोगविरतिरध्ययनार्थाधिकारः । स च समुदायार्थः स्वसिद्धान्तवक्तव्यतैकदेश एवेति ॥९५०॥

**अधुणा य समोतारो जेण समोतारितं पतिद्दारं ।**
**सामाइयं सोणुगतो लाघवतो णं य पुणो वच्चो ॥९५१॥**

**अधुणा** गाहा । अधुना समवतारः [अनु० सू० १५३] । स च लाघवार्थमुक्त एव येनेह प्रतिद्वारमवतारितं सामायिकमतो न पुनरभिधेयः ॥९५१॥

**भणति घेप्पति य सुहं णिक्खेवपदाणुसारतो सत्थं ।**
**ओहो णामं सुत्तं णिक्खेत्तव्वं ततोऽवस्सं ॥९५२॥**

**भणति** गाहा । इह नामादिनिक्षेपद्वारानुसारतो यतः सुखमुच्यते शास्त्रमधिगम्यते चेत्यतोऽवश्यमोघः, नाम, सूत्रं च निक्षेप्तव्यम् [अनु० सू० १५४] ॥९५२॥

---

१ °द्धानुव°–इति प्रतौ । २ मिच्छत्तमयसमूहं **को हे** । ३ जं तदु° **त** । ४ °दोसो **त** । ५ नो पु° **त** । ६ विप्प° **को हे** । ७ °क्खेवत्त° **त** ।

**ओहो जं सामण्णं सुताभिधाणं चतुव्विधं तं च ।**
**अज्झयणं अज्झीणं आयो ज्झवणा य पत्तेयं ॥९५३॥**
**णामातिचतुब्भेतं वण्णेतूणं सुताणुसारेणं ।**
**सामाइयमायोज्जं[1] चतुसुं पि कमेण भावेसुं[2] ॥९५४॥**

**ओहो** गाहा । **णामाति॰** गाहा । तत्रौघो नाम यत्सामान्यं शास्त्रनाम तच्चेह चतुर्विधम्, अध्ययनादि [अनु॰ सू॰ १५४] पुनः प्रत्येकं नामादि चतुर्भेदमनुयोगद्वारानुसारतोऽभिधाय भावाध्ययनादिषु सामायिकमायोज्यम् ॥९५३-५४॥

**जेण सुभज्झप्पयणं[3] अज्झप्पाणयणमधियमयणं वा ।**
**बोधस्स संजमस्स व मोक्खस्स व जं[4] तमज्झयणं ॥९५५॥**

**जेण॰** गाहा । इह नैरुक्तेन विधिना प्राकृतस्वाभाव्याच्च सुभमज्झप्पं[5] जणेइत्ति अज्झ[प्प]यणं प्पकार[6]लोवातो अज्झयण त्ति । अहवा अज्झप्पाणयणं प्पगारागारणगार-लोवाओ अज्झयणं ति । अथवा बोधादीनां आधिक्येनायनं[7] अध्ययनं सामायिकम् । अयनं गमनमित्यर्थः ॥९५५॥

**अज्झीणं दिज्जंतं अव्वोच्छित्तिणयतो अलोगो[8] व्व ।**
**आओ णाणादीणं झवणा पावाण खवणं[9] ति ॥९५६॥**

**अज्झीणं** गाहा । अक्षीणमर्थिभ्यो दीयमानम्, अथवाऽव्युच्छित्ति[10]नयोपदेशादलोकवन्नित्यम् । आयो लाभः प्राप्तिरित्यनर्थान्तरम् । कस्य ? ज्ञानादीनाम् । क्षपणोऽपचयो[11] निर्जरेति पर्यायाः । कस्य ? पापानामधमकर्मणाम् । इत्युक्तं सामान्यनाम ॥९५६॥

**सामाइयं ति णामं विसेसविहितं चतुव्विधं तं च ।**
**[६३-द्वि॰] णामादि[12]णिरुत्तीए सुत्तप्फासे वे[13] तं वोच्छं ॥९५७॥**

**सामा॰** गाहा । नाम[14]पदार्थविचारः । तत्र स्वसमये च वैशेषिकमिदानीं सामायिकं नामेति । तच्चतुर्विधम् [अनु॰ सू॰ १४] । तच्च नामादिनिरुक्तौ वक्ष्यामः, सूत्रस्पर्शिकनिर्युक्तौ चेति ॥९५७॥

**इध जति कीस णिरुत्ते तत्थ व भणितं[15]मिह भणते कीस ।**
**णिक्खेवमेत्त[16]मिधइं तस्म णिरुत्तीएँ[17] वक्खाणं ॥९५८॥**

---

१ °माउज्जं को हे । २ °सु को हे । ३ सुभप्पज्झयणं को । ४ २ व तो तम° जे । ५ °च्च गुरुमज्झ°–इति प्रतौ । ६ एकालोवातो–इति प्रतौ । ७ °नानयनं°–इति प्रतौ । ८ य लोगो जे । ९ पावाण कम्माण को । १० अथवावुच्छि°–इति प्रतौ । ११ णा एव यो–इति प्रतौ । १२ नामाइं को हे । १३ य को । १४ नायदा°–इति प्रतौ । १५ भणिएह को । १६ मेत्त इध° जे । मेत्तमिहयं त । १७ °त्तीइ त । १ ।

इह० गाहा। आह--इह यदि प्राप्तावसरम्, किमुच्यते निरुक्तादौ वक्ष्यते ? अथ निरुक्तादौ वक्ष्यते, किमिहेति ? उच्यते-इह निक्षेपमात्रस्यावकाशः। स चोक्त एव नामादिः। निरुक्तौ तु तदर्थनिरूपणमिति ॥९५८॥

**तो कीस पुणो सुत्ते सुत्तालावो तओ ण तं णामं।**
**इध पुण णामं णत्थं तव्वक्खाणं णिरुत्तीए ॥९५९॥**

**तो कीस** गाहा। आह-यदि निरुक्तावेव सामायिकमिति व्याख्यायते किं भूयः सूत्रेऽभिधीयत इति ? उच्यते-सूत्रे तु 'करोमि भदन्त सामायिकम्' इति सूत्रालापव्याख्यानम्। तन्न सामायिकनाम्नः। इह तु निक्षेपद्वारे सामायिकमिति शास्त्रनामादि न्यस्तं निरुक्तौ निरूप्यत इति विशेषः ॥९५९॥

**इध पुण कीस ण भण्णति जण्णिक्खेवो इमो स णिज्जुत्ती।**
**णिज्जुत्ती वक्खाणं णिक्खेवो णासमेत्तं तु ॥९६०॥**

इध गाहा। आह-इहैव किं न व्याख्यायते इति ? उच्यते-व्याख्यानस्येह निक्षेपद्वारे कोऽवसरः ? निरुक्तिस्तूपोद्घातव्याख्यानद्वारम्, अतस्तत्रोच्यते। निक्षेपस्तु नामादिन्यासमात्रमेवेति ॥९६०॥

**णणु णिज्जुत्तिअणुगमे भणिता एसा वि णासणिज्जुत्ती।**
**सच्चमियं णिज्जुत्ती इयं तु णिक्खेवमेत्तस्स ॥९६१॥**

**णणु** गाहा। आह-ननु निर्युक्ता(क्त्य)नुगमेऽभिहितेयमपि न्यासनिर्युक्तिः, यस्मादाह-निक्षेपनिर्युक्त्यनुगमोऽनुगतो [अनु० सू० १५५] यदधो निक्षिप्तमित्यत इहैव निक्षेपव्याख्या युक्तेति। उच्यते-सत्यमियं निर्युक्तिरियं तु नामादिन्यासमात्रस्वरूपनिरूपणाय, न शेषार्थस्य। निरुक्तौ तु शब्दार्थादिविचार इति ॥९६१॥

**णिक्खेवमेत्तमधवा अत्थवियारो य णासजुत्तीए।**
**सद्दगतो अ णिरुत्ते सुत्तप्फासम्मि सुत्तगतो ॥९६२॥**

**णिक्खेव०** गाहा। अथ चेह निक्षेपद्वारे सामायिकस्य नामादिन्यासमात्रमुच्यते। तदर्थनिरूपणमात्रमेव निक्षेपनिर्युक्तौ। शब्दार्थादिविचारो निरुक्तौ। सूत्रस्पर्शने तु सूत्रार्थविचार एव, न सामायिकनाम्न इति। नामन्यासोऽभिहितः ॥९६२॥ सूत्रन्यासो ऽधुना-

**जो सुत्तपदण्णासो सो सुत्तालावयाण णिक्खेवो।**
**इध पत्तलक्खणो सो णिक्खिप्पति ण पुण किं कज्जं ॥९६३॥**

---

१ तं वक्खायं को हे। २ तत्र-इति प्रतौ। ३ °हितमियमपि-इति प्रतौ। ४ °मित्येतत्-इति प्रतौ- ५ र्युक्तिश°-इति प्रतौ।

**सुत्तं चेयं ण पावति इह सुत्तालावयाण कोऽवसरो ।**
**[६४-प्र०] सुत्ताणुगमे[2] काहिति तण्णासं लाघवणिमित्तं ॥९६४॥**

**जो सु०** गाहा । **सुत्तं०** गाहा । तत्र यः सूत्रपदानां नामादिन्यासः स सूत्रालापकनिक्षेपः । स पुनरिह प्राप्तावसरोऽपि सन्न निक्षिप्यते । कस्मात् ? इह सूत्रमेव न प्राप्नोति । तदप्राप्तौ कस्यालापनिक्षेपणम् । तच्च सूत्रानुगमे सूत्रम्, अतस्तत्रैव तदालापकन्यासः करिष्यते लाघवार्थम् ॥९६३ ६४॥

**इध जइ पत्तो वि तओ ण णस्सते कीस भण्णते इधइं ? ।**
**दाइज्जति सो णिक्खेवमेत्तसामण्णतो णवरं ॥९६५॥**

**इध** गाहा । आह–यदीह प्राप्तावसरोऽप्यसौ न संन्यस्यते किमिहोच्यते इति ? उच्यते–निक्षेपमात्रसामान्यादसौ केवलमिहोपदर्श्यते, न तूपन्यस्यते, गुरुता मा भूदिति । उक्तो निक्षेपः ॥९६५॥

**संपयमोहादीणं सण्णिक्खित्ताणमणुगमो कज्जो ।**
**सोऽणुगमो दुविकप्पो[3] णेओ णिज्जुत्ति-सुत्ताणं ॥९६६॥**

**संपय०** गाहा । इदानीमोघादीनां[4] संनिक्षिप्तानां सतामनुगमः कर्त्तव्यः । स च द्वेधा–निर्युक्त्यनुगमः, सूत्रानुगमश्च [अनु० सू० १५५] ॥९६६॥

**णिज्जुत्ति तिविकप्पा णासोवग्घातसुत्तवक्खाणं ।**
**णिक्खेवस्साणुगता उद्देसादीहुवग्घातो ॥९६७॥**

**णिज्जुत्ति** गाहा । निर्युक्तिस्त्रेधा–निक्षेपनिर्युक्तिः, उपोद्घातनिर्युक्तिः, सूत्रस्पर्शिकनिर्युक्तिश्चेति [अनु० सू० १५५] निक्षेपोपोद्घातसूत्राणां व्याख्याविधिरित्यर्थः । तत्र निक्षेपनिर्युक्तिरनुगतानुक्रान्तेत्यर्थः । यदा वा नामादिन्यासव्याख्याने उक्तेति उद्देशादिद्वारैरुपोद्घातोऽनुगम्यते ॥९६७॥

**[7]उद्देसे णिद्देसे य णिग्गमे खेत्त काल पुरिसे य ।**
**कारणपच्चयलक्खणणये समोतारणाऽणुमते ॥७८॥९६८॥**

---

१ चेव को हे त । २ °गमो त । ३ °प्पो नियओ त । ४ °नां सनिक्षिप्तादीनां–इति प्रतौ । ५ णासो वोग्धा त । ६ °नसुक्ते उ°–इति प्रतौ° । ७ उद्देसादिगाथाद्वयं निर्युक्तिगतमिति हेमचन्द्र-मलधारिभिः कोट्याचार्यैश्च न सूचितम्, स्वोपज्ञवृत्तावपि तथासूचनं नास्ति । कोट्याचार्यवृत्तिपुस्तके संपादकैः निर्युक्तित्वेन मुद्रितम् । अनुयोगद्वारे [सू० १५५] "मूलगाहाहिं अणुगन्तव्वो तं जहा" इति कृत्वा एतद्गाथाद्वयमुद्धृतम् । चूर्णौ (पृ० १२५), हारिभद्रवृत्तौ (गा० १४०–१), दीपिकायां (गा० १४०–१) मलयगिरिवृत्तौ (गा० १३७–८) चैतद्गाथाद्वयं व्याख्यातम् ।

**किं कतिविधं कस्स कहिं केसु कधं केच्चिरं हवति कालं।**
**कतिसंतरमविरहितं भवाकरिसफोसणणिरुत्ती ॥७९॥९६९॥**
**अज्झयणं उद्देसोऽभिहितं सामाइयं ति णिद्देसो।**
**सामण्णविसिट्ठाणं अभिधाणं सत्थणामाणं ॥९७०॥**

**उद्देसे०** गाहा। **किं कति०** गाहा। **अज्झ०** गाहा। तत्र शास्त्रस्याध्ययनमित्युद्देशः सामन्याभिधानोक्तिः। सामायिकमिति निर्देशो वैशेषिकाभिधानोक्तिः ॥९६८–९७०॥

**दारोवण्णासातिसु णिक्खेवे[2] चोहणा[६४–द्वि]मणिप्फण्णे।**
**उद्देसो णिद्देसो भणितो इध किं पुणग्गहणं ॥९७१॥**

**दारो०** गाहा। आह—ननु प्रथममध्ययनं सामायिकम्। तस्यानुयोगद्वारचतुष्टयमिति द्वारोपदेश एवोद्देशनिर्देशावुक्तौ, ओघ-नामनिक्षेपयोश्च। किमिह ग्रहणं भूयः ॥९७१॥

**इध विहिताणगयाणग्गहणं तत्थऽण्णधा कधं कुणतु।**
**तेसिं गहणमकातुं दारण्णासादिकज्जाइं ॥९७२॥**

**इध** गाहा। उच्यते—इह द्वारद्वयविहितयोस्तत्रानागतग्रहणमन्यथा तद्ग्रहणमकृत्वा कथं द्वारोपन्यासादयः स्युः? ॥९७२॥

**अधवा तत्थुद्देसो णिद्देसोऽवि य [3]कतो इधं तेसिं।**
**अत्थाणुगमावसरे विधाणवक्खाणमारद्धं ॥९७३॥**

**अधवा** गाहा। अथवानुयोगद्वारोपन्यासादिविहितयोरुद्देशनिर्देशयोरभिधानमात्रादिहार्थानुगमद्वाराधिकाराद्विधानतो लक्षणतश्च व्याख्यानमुच्यते ॥९७३॥

**अण्णे तु विसेसमिधं भणंति णोद्देसबद्धमेतं ति।**
**जाणावितमज्झयणं समासदारावतारेणं ॥९७४॥**

**अण्णे** गाहा। अन्ये तु पूर्वविहितयोरपीह विशेषमाचक्षते नोद्देशकबद्धमिदमध्ययनमित्येतद् ज्ञापितं किल। कुतः? अंगश्रुतस्कन्धाध्ययनसमासद्वाराऽवतारात्। ॥९७४॥

**अंगादिपण्हकाले कालियसुतमाणसमवतारे य।**
**तमणुद्देसयबद्धं भणितं चिय इध किमब्भहियं ॥९७५॥**

---

१ °फ° को। २ ° वे ओह° को हे। °वे बोह° त। ३ कओ को हे त। कता जे। ४ °नाण° त।

**अंगादि॰** गाहा । तच्च किमावश्यकमङ्गमङ्गानीत्यादिप्रश्नकाल एव, कालिक-श्रुतपरिमाणसंख्यावतारे चाध्ययनसंख्यावतारादुक्तमेव नोद्देशकनियतम् । इह को विशेषः ? ॥९७५॥

**णणु णिग्गमो गतो[1] च्चिय अत्ताणंतरपरंपरागमतो ।**
**तित्थकरातीहिंतो आगतमेतं परंपरया ॥९७६॥**

**णणु** गाहा । आह—नन्वागमद्वार एव निर्गमोऽभिहितः, आत्मागमादिवचनात् तीर्थंकरगणधरादिभ्यः सामायिकमायातमिति । किमिह निर्गमग्रहणं भूयः ? ॥९७६॥

**इध तेसिं चिय भण्णति णिद्देसो णिग्गमो जधा तं च ।**
**उवयातं तेहिंतो खेत्तादिविसेसितं बहुधा ॥९७७॥**

**इध** गाहा । उच्यते—इह तेषामेव तीर्थंकरादीनां निर्देशो निर्गमश्चाभिधी-यते—कोसौ तीर्थंकृद् गणधराश्चेति वक्ष्यते । वर्द्धमानो गौतमादयश्चेति च । तेभ्यः सामायिकमायातं क्षेत्रकालपुरुषकारणप्रत्ययविशेषितमित्ययं विशेषः ॥९७७॥

**अज्झयणलक्खणं णणु खयोवसमियं गुणप्पमाणे वा ।**
**णाणागमातिगहणे भणितं [६५-प्र॰] किमिधं पुणो गहणं ॥९७८॥**

**अज्झयण॰** गाहा । आह—ननु सामायिकाध्ययनलक्षणमुक्तमेवा[2]स्ति, क्षायो-पशमिकभावावतारात्, गुणप्रमाणेऽपि वा ज्ञानमागमश्चेत्यादिवचनात् । किमिह लक्षणं[3] भूयः ॥९७८॥

**णिद्देसमेत्तमुत्तं वक्खाणिज्जति सवित्थरं तमिधं[4] ।**
**अधवा सुतस्स भणितं लक्खणमिह तं चतुण्हं पि ॥९७९॥**

**णिद्देस॰** गाहा । उच्यते—तत्र निर्देशमात्रमुक्तमिहार्थानुगमद्वाराधिकाराद्व्याख्यायते तद्विस्तरतः । अथवा तत्र श्रुतस्यैवोक्तम्, इह चतुर्णामपि सामायिकानामुच्यते ॥९७९॥

**भणिता[5] णयप्पमाणे[6] भण्णंतीधं[7] णया पुणो कीस ।**
**मूलद्दारे य पुणो एतेसिं को णु विणियोगो ॥९८०॥**

**भणिता** गाहा । आह—ननूक्ता नयप्रमाणे नयाः । इह किमुच्यन्ते भूयः ? मूलद्वारेऽपि च पुनर्वक्ष्यमाणाः । क एषां विनियोगः ॥९८०॥

---

१ गउच्चि° **को हे** । २ °मेव नास्ति—इति प्रता । ३ °क्षम्भू°—इति प्रतौ । ४ तमिह **को हे त** । ५ भओणि **त** । ६ °माणो **त** । ७ °तीहिं **त** ।

**जे च्चिय णयप्पमाणे ते च्चिय इधइं सवित्थरा[1] भणिता ।**
**जं तमुवक्कममेत्तं वक्खाणमिणं अणुगमो त्ति ॥९८१॥**

**जे च्चिय** गाहा । उच्यते--य एव हि प्रमाणद्वारेऽभिहितास्त एवेह व्याख्यायन्तेऽर्थतो यतस्तत्रोपक्रमणमात्रमुक्तम्, इहार्थानुगमाख्यं व्याख्यानमिति ॥९८१॥

**अधवा तत्थ पमाणं इधं सरूवावधारणं तेसिं ।**
**[2]तत्थोवक्कंता वा इह तदणुमतावतारोयं ॥९८२॥**

**अधवा** गाहा । अथवा प्रमाणद्वाराधिकारात्तत्र प्रमाणभावमात्रमुक्तं नयानाम्, इह स्वरूपावधारणम् । अथवा तत्रोपक्रमणम्, इह तदनुमतावतारश्चिन्त्यते ॥९८२॥

**सामाइयसमुदायत्थमेत्तवावारतप्परा एते ।**
**मूलद्दारणया पुण सुत्तप्फासोव[3]योगपरा ॥९८३॥**

**सामा०** गाहा । सर्वे चैते सामायिकसमुदायार्थमात्रव्यापारपरा न सूत्रार्थविनियोगिनः । मूलद्वारनयास्तु सूत्रव्याख्यानोपयोगिनः एवेति शेषः ॥९८३॥

**जीवगुणो णाणं ति य भणिते इध किं ति का पुणो संका ।**
**तं चिय किं जीवातो अण्णमणण्णं ति[4] संदेहो ॥९८४॥**

**जीव०** गाहा । आह—प्रमाणद्वारे जीवगुणः सामायिकं ज्ञानं चेत्युक्ते इह किमिति—का पुनराशङ्का ? उच्यते—जीवगुणत्वे ज्ञानत्वे च सति किं तज्जीव एवाहोस्विज्जीवादन्यदिति सन्देहः ॥९८४॥

**भणिते खयोवसमीयं [5]ति किं पुणो लब्भते कधं तं ति ।**
**इध सो च्चिय चिंतिज्जति किध लब्भति सो खयोवसमो ॥९८५॥**

**भणिते** गाहा । आह—षड्विधनाम्नि क्षायोपशमिकं सामायिकं[6]मित्युक्ते तदावरणकर्मक्षयोपशमाल्लँ[7]भ्यत इत्युक्तं भवति । किमिह भूयः 'कथं लभ्यते' इति ? उच्यते—क्षयोपशमजत्वे सति स एव क्षयोपशमलाभः कथं भवति शेषाङ्गलाभश्चिन्त्यते ॥९८५॥

**[६५–द्वि०] किं बहुणा जमुवक्कमणिक्खेवेसु भणितं पुणो भणति ।**
**अत्थाणुगमावसरे तं वक्खाणाधिकारत्थं ॥९८६॥**

**किं बहु०** गाहा । किं बहुना ? यदुपक्रमनिक्षेपद्वारद्वयेऽभिहितमपि पुनरिहाऽर्थानुगमद्वारावसरे तन्निर्दिष्टं निक्षिप्तव्याख्यानाधिकारार्थमिति ॥९८६॥

---

१ °त्थरं त । २ तत्तो° को हे । ३ °वयारपरा जे । ४ संदोहो त । ५ °यं न किं त ।
६ °कमुक्ते–इति प्रतौ । ७ °ल्लब्भ्यत–इति प्रतौ ।

**सत्थसमुत्थाणत्थो पाएणोवक्कमो तधायं पि ।**
**सत्थस्सोवग्घातो को एतेसिं पतिविसेसो ।।९८७।।**

**सत्थ०** गाहा । आह—शास्त्रसमुत्थानार्थः प्रायेणोपक्रमोऽभिहितः । तथाऽयमप्युपोद्घातः शास्त्रसमुत्थानप्रयोजन एव । कोऽनयोर्विशेषः ? ।।९८७।।

**उद्देसमेत्तणियतो उवक्कमोयं तु तव्विबोधत्थं ।**
**पाएणोवग्घातो णणु भणितोयं जतोणुगमो ।।९८८।।**

**उद्देस०** गाहा । उच्यते—ननूद्देशमात्रनियत उपक्रमः,अयं तु तदुद्दिष्टवस्तुप्रबोधनार्थः प्रायेणोपोद्घातः [1]कृतः, यतोऽयमर्थानुगमः ।।९८८।।

**णासस्स व संबंधणमुवक्कमोयं तु सुत्तवक्खाए ।**
**संबन्धोवे[2]ग्घातो भणति जं सा तयंतम्मि ।।९८९।।**

**णास०** गाहा । अथवा अध्ययनन्[3]यासस्य सम्बन्धनमुपक्रमः, तदन्तेऽभिधानात् । अयं तु सूत्रव्याख्यानविधे[4]रुपोद्घातो यतस्तदन्ते सूत्रव्याख्याऽऽरभ्यत इति ।।९८९।।

**संपति सुत्तप्फासियणिज्जुत्ती जं सुतस्स वक्खाणं ।**
**तीसेऽवसरो सा पुण पत्ता वि ण भण्णते इधइं ।।९९०।।**
**किं जेणासति सुत्ते कस्स तई तं जता कमप्पत्ते ।**
**सुत्ताणुगमे वोच्छिति होहिति तीए तदा भागो ।।९९१।।**

**संपति** गाहा । **किं जे०** गाहा । साम्प्रतं सूत्रस्पर्शनिर्युक्तिः—सूत्रव्याख्याविधिरित्यर्थः । सा पुनः प्राप्तावसराऽपीह नोच्यते । किं कारणम् ? असति सूत्रे कस्याऽसावित्यतो यदा क्रमप्राप्त एव सूत्रं सूत्रानुगमे वक्ष्यते त[5]दासावपि तदर्थव्याख्यानरूपत्वादभिधास्यते ।।९९०–१।।

**अत्थाणमितं तीसे जई तो सा कीस भण्णते इधइं ।**
**इध सा भण्णति णिज्जुं[6]त्तिमेत्तसामण्णतो णवरं ।।९९२।।**

**अत्थाण०** गाहा । आह—यदीदमस्थानं तस्याः, किमिहोपन्यस्यते ? उच्यते—निर्युक्तिमात्रसामान्यात् केवलमुपदर्श्यते सूत्राभावान्न तूच्यते ।।९९२।।

**[7]तेणेयाणिं सुत्तं सुत्ताणुगमेऽभिधेयमणवज्जं ।**
**[६६–प्र०] अक्खलितातिविसुद्धं सलक्खणं लक्खणं चेमं ।।९९३।।**

१ कुतो–इति प्रतौ । २ °वक्खातो त । ३ °नन्यास°–इति प्रतौ । ४ °मविवेक उपो°–इति प्रतौ । ५ तदसा°–इति प्रतौ । ६ जइ सा तो की° जे । ७ °त्ती° त । ८ तो णे° जे ।

**तेणे०** गाहा। अतोऽनेनैव सम्बन्धेनेदानीं निर्युक्त्यनुगमानन्तरं सूत्रानुगमः— सूत्रस्यानुगमः सूत्रानुसरणमित्यर्थः[1]। किमिदमूनाऽधिक-विपर्यस्तादिदोषदुष्टम्, आहो—स्विन्निर्दोषमिति। निर्दोषस्य च व्याख्याऽऽरभ्यते शेषस्य चापनीतदोषस्येत्यतः सूत्रानुगमे सूत्रमुच्चारणीयमनवद्यमस्खलितादिलक्षणोपेतं चेति। सूत्रलक्षणं चेदम् ॥९९३॥

**अप्पग्गंथमहत्थं बत्तीसादोसविरहितं जं च।**
**लक्खणजुत्तं सुत्तं अट्ठहि य गुणेहिं उववेतं ॥९९४॥**

**अप्प०** गाहा। अल्पग्रन्थता महार्थता चेत्यादि। तत्र यदल्पीयोभिरक्षरैर्महान्तमर्थराशिं ब्रूते तदल्पग्रन्थं महार्थं च। यथेदमेव सामायिकम्। द्वात्रिंशद्दोषरहितं च लक्षणवत्। ते चेमे दोषाः—

"अलियमुवघायजणयं णिरत्थयमवत्थयं छलं दुहिलं।
णिस्सारमहियमूणं पुणरुत्तं वाहतमजुत्तं॥
कमभिण्णवयणभिण्णं विहि(ह)त्तिभिण्णं च लिंगभिण्णं च।
अणभिहियमपयमेव य सहावहीणं ववहितं च॥
कालजईछविदोसा समयविरुद्धं च वयणमेत्तं च।
अत्थावत्तिदोसो य होइ असमासदोसो य॥
उवमारूवयदोसो णिद्देसपदत्थसंधिदोसो य
एते तु सुत्तदोसा बत्तीसं होंति नायव्वा॥" [आवनि०गा० ८८१–४]

तत्रानृतम्—अभूतोद्भावनम्, भूतनिह्नवश्च। अभूतोद्भावनम्—प्रधानं कारणमित्यादि। भूतनिह्नवः—नास्त्यात्मेत्यादि। उपघातजनकम्—सत्त्वोपघाति, यथा वेदविहिता हिंसा नाऽधर्मायेत्यादि। वर्णक्रमनिर्देशवन्निरर्थकम्—अरानशादिवत्, डित्थादिवद्वा। पौर्वापर्ययोगादप्रतिसंबन्धार्थमपार्थकम्। यथा दशदाडिमादि, षड् यूपाः(षडपूपाः) कुण्डमजाधिकं(°जाजिनम्) पललपिंडं त्वर कीटिके दिशमुदीचीं स्पर्शनस्य पिता प्रतिशीन इत्यादि। वचनविघातोऽर्थविकल्पोपपत्त्या छलं वाक्छलादि। यथा नवकम्बलो देवदत्त इत्यादि। द्रोहानुभावं द्रुहिलम्। यथा "यस्य बुद्धिर्न लिप्येत हत्वा सर्वमिदं जगत्"[गीता १८. १७]इत्यादि। कलुषं वा द्रुहिलं येन पुण्यपापयोः समताऽऽपाद्यते यथा "एतावानेष पुरुषो यावानिन्द्रियगोचरः" इत्यादि।

१ उत्त० चू० पृ० १३। २ °प्पग° जे। ३ बाल–इति प्रतौ। ४ °वत्ते–इति प्रतौ। ५ °घातार्थ–लोपत्त्या–इति प्रतौ। ६ °प्येतदथा सर्वजग इत्या°–इति प्रतौ। किञ्चित्पाठभेदेन गीतायामस्ति ७ 'एतावानेव' इति पाठान्तरेण सह उद्धृतोऽयं लोकायतिकश्लोकः मध्यमकवृत्तौ १८. ६; लोकतत्त्वनिर्णये कर्मविचारे का ३३; षड्दर्शनसमुच्चये का० ८१।

निःसारं परिफल्गु वेदवचनवत् । वर्णादिभिरभ्यधिकमधिकम् । तैरेव हीनमूनम् । अथवा हेतूदाहरणाधिकमधिकं यथा अनित्यः शब्दः कृतकप्रयत्नानन्तरीयकत्वाभ्याम्, घटपटवदित्यादि । एताभ्यामेव हीन[मून]मुक्तं यथाऽनित्यः शब्दो घटवत्, अनित्यः शब्दः कृतकत्वा[दित्या]दि । शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् । अर्थादापन्नस्य स्वशब्देन पुनर्वचनं यथा 'देवदत्तो दिवा न भुङ्क्ते' इत्यर्थादापन्नं 'रात्रौ भुङ्क्ते' इति । तत्र यो ब्रूयात्-'दिवा न भुङ्क्ते, रात्रौ भुङ्क्ते' इति स पुनरुक्तमाह । व्याहतं यत्र पूर्वेण परं विहन्यते, यथा—"कर्म चास्ति फलं चास्ति कर्त्ता नैव कर्मणाम्" इत्यादि । अयुक्तमनुपपत्तिक्षमम्, यथा

"तेषां कटितटभ्रष्टैर्गजानां मदबिन्दुभिः ।
व्यावर्त्तत नदीघोरा हस्त्यश्वरथवाहिनी ॥" इत्यादि ।

क्रमभिन्नम्—यत्र यथासङ्ख्यमनुदेशो न क्रियते । यथा स्पर्शन-रसन-घ्राण-चक्षुःश्रोत्राणामर्थाः स्पर्श-रस-गन्ध-वर्ण-शब्दा इति वक्तव्ये स्पर्श-रूप-शब्द-गन्ध-रसा इति ब्रूयादिति । वचनभिन्नं वचनव्यत्ययः, यथा वृक्षावेतौ पुष्पित इत्यादि । विभिक्तव्यत्ययः, यथैष वृक्ष इति वक्तव्ये एष वृक्षमित्याह । लिङ्गभिन्नं लिङ्गव्यत्ययः, यथेयं स्त्रीति वक्तव्ये—अयं स्त्रीत्याह । अनभिहितमनपदिष्टं स्वसिद्धान्ते यथा सप्तमः पदार्थः, दशमं द्रव्यं वा वैशेषिकस्य, प्रधानपुरुषाभ्यधिकं सांख्यस्य, चतुःसत्यातिरिक्तं शाक्यस्येत्यादि । अपदम्—पैद्ये विधावन्यच्छन्दोधिकारेऽन्यछन्दोभिधानम्, यथार्यापदे वैतालीयादिपदाभिधानम् । स्वभावहीनम्—यद्वस्तुनः स्वभावतोऽन्यथाभवनम्, यथा शीतोऽग्निः मूर्तिमदाकाश[म्] इत्यादि । व्यवहितमन्तर्हितम्—यत्र प्रकृतंमुत्सृज्याऽप्रकृतं व्यासतोऽभिधाय पुनः प्रकृतमभिधीयते यथा हेतुकथामधिकृत्य सुप्तिङन्तपदलक्षणप्रपञ्चम्, अर्थशास्त्रं वाभिधाय पुनर्हेतुवचनमित्यादि । कालदोषः—अतीतादिकालव्यत्ययः यथा रामो वनमनु[प्र ?]विशति बध्यते कर्ण इत्यादि । यतिदोषः—यतिव्यत्ययः । यतिर्विच्छेदः । तस्याऽकरणमस्थानकरणं वेत्यर्थः । यथा स्रग्धरायास्त्रिसप्तकेष्वकरणम्, अन्यत्र वा करणमित्यादि । छविदोषः छविहीनता । छविरलङ्कारविशेषस्तेजस्विता । समयविरुद्धं यत्स्वसिद्धान्तविरुद्धम्—यथा सांख्यस्य [अ]सत् कारणे कार्यम्, सद्वैशेषिकस्येत्यादि । वचनमात्रमहेतुकं यथेच्छभूप्रदेशलोकमध्याभिधानवत् । अर्थापत्तिदोषो यत्रार्थादनिष्टापत्तिर्यथेह ब्राह्मणो न हन्तव्य इत्यर्थादब्राह्मणघातापत्तिः । असमासदोषः—समासव्यत्ययो यत्र वा समासविधौ सत्यसमासवचनं यथा राज्ञः पुरुषोऽयमित्यादि ।

१ °व्योयं—इति प्रतौ । २ पाद्ये वि°—इति प्रतौ । ३ °कृतिमु°—इति प्रतौ । ४ पेध्य°—इति प्रतौ । ५ °स्यात्र क°—इति प्रतौ । ६ यथेष्टरूपदे°—इति प्रतौ । द्रष्टव्या दशवै० नि गा० ८७ तद्व्याख्या च ।

उपमादोषः—हीनाधिकोपमानुपमाभिधानम्, यथा मेरुः सर्षपोपमः, सर्षपो मेरूपमः, मेरुः समुद्रोपम इत्यादिः। रूपकदोषः—स्वरूपावयवव्यत्ययः, यथा पर्वतानुरूपावयवानां पर्वते ऽनभिधानं समुद्रावयवानां वाभिधानमित्यादि। अनिर्देशदोषो यत्रोद्दिष्टपदानामेकवाक्यभावो न क्रियते यथेह देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीति वक्तव्ये पचतिशब्दाऽनभिधानम्। पदार्थदोषो यत्र वस्तुपर्यायवाचिनः पदस्यार्थान्तरपरिकल्पनमाश्रीयते, यथेह द्रव्यस्वरूपपर्यायवाचिनां सत्तादीनां द्रव्यादर्थान्तरपरिकल्पनमुलूकस्य। सन्धिदोषो [3]विश्लिष्टसन्धित्वं व्यत्ययो वेति। एभिर्विमुक्तं द्वात्रिंशद्दोषरहितम्, लक्षणयुक्तं सूत्रमिति वाक्यशेषः, द्वात्रिंशद्दोषरहितं यच्चेति वचनात्तच्छब्दनिर्देशो गम्यते। अष्टाभिश्च गुणैरुपेतं यत् तल्लक्षणयुक्तमिति वर्त्तते ॥९९४॥ ते चेमेगुणाः—

[4]णिद्दोसं [5]सारमंतं च हेतुजुत्तमलंकितं।
उवणीतं सोवयारं च मितं मधुरमेव य ॥९९५॥

**णिद्दोसं** सिलोगो। निर्दोषमुक्तम्। सारवद् बहुपर्यायमुच्यते, गोशब्दवत्। अथवा सामायिकाभिधानवत्। हेतुरुपपत्तिः। हेतुयुक्तमुपपत्तिमत्। अलंकृतमुपमादिभिरुपेतम्। उपनीतमुपनयोपसंहृतम्। सोपचारमग्राम्याभिधानम्। मितं वर्णादिनियतपरिमाणम्। मधुरं श्रवणमनोहरम् ॥९९५॥

अप्पक्खरमसंदिद्धं सारवं विस्सतोमुखं।
अत्थोभमणवज्जं च सुत्तं सव्वण्णुभासितं ॥९९६॥

**अप्पक्ख०** सिलोगो। असंदिग्धमसंशयम्, यथा सैन्धवाभिधाने लवणजनपदपुरुषादिसंशयैः। सारवदल्पाक्षरं चोक्तम्। [6]व्याख्यान्तरं चेदमित्यपुनरुक्तम्। विश्वतोमुखमनेकमुखमनुसूत्रमनुयोगचतुष्टयाभिधानात्। सारवत्तु प्रतिमुखमनेकार्थाभिधायकमित्यपुनरुक्तम्। वै-हिकारादयोऽनर्थकाः पदच्छिद्रपूरणायैवोपादीयमानाः स्तोभका इत्युच्यन्ते। स्तोभकः क्षेपकस्तद्विरहादस्तोभकम्। अनवद्यमगर्ह्यमित्यादिलक्षणं सूत्रानुगमे सूत्रमुच्चारणीयम् ॥९९६॥

सुत्तेऽणुगते सुद्धे त्ति णिच्छिते तध कते पदच्छेदे।
सुत्तालावण्णासे णिक्खित्ते सुत्तफासो तु ॥९९७॥

---

१ °तेनामि° इति–प्रतौ। २ °द्दिश्यप्र°–इति प्रतौ। ३ विक्लिष्ट°–इति प्रतौ। ४ णिद्दोसं इति गाथाद्वयं संपादकेन हेमचन्द्रमलधारिटीकायां भाष्यत्वेन न मुद्रितम्, किन्तु "इति द्वात्रिंशद्गाथार्थः (गा० १०००)" इति टीकावचनतो हेमचन्द्रैरनुमतमेव भाष्यत्वेन, अन्यथा द्वात्रिंशद्गणनाया असंभवात्। द्रष्टव्या गा० ९७० टीका। तप्रतौ उक्तगाथाद्वयं नास्ति। ५ सारवं चेव हे को। सारवतं च हेटी। ६ °शयसारे वद°–इति प्रतौ। ५ °वयनासे त को हे।

**सुत्ते** गाहा । तत्र सूत्रानुगमतः सूत्रेऽनुगतेऽनवद्यं चेति निश्चिते पदच्छेदानन्तरं सूत्रालापन्यासः नामादिभिः सम्भवतः सूत्रपदनिक्षेप इत्यर्थः । तदनु सूत्रस्पर्शः सूत्रानुगमनमित्यर्थः ॥९९७॥

**एवं सुत्ताणुगमो सुत्तालावयगतो य णिक्खेवो ।**
**सुत्तप्फासियणिज्जुत्ती णया य वच्चन्ति समयं तु ॥९९८॥**

**एवं** गाहा । एवमुक्तक्रमतः सूत्रानुगमः सूत्रालापन्यासः सूत्रस्पर्शनिर्युक्तिश्चरमानुयोगद्वारविहिताश्च नयाः समनुगच्छन्ति समकमनुसूत्रमित्यर्थः ॥९९८॥

**सुत्तं पतं पदत्थो संभवतो विग्गहो वियारो य ।**
**दूसितसिद्धी णयमतविसेसतो णेयमणुसुत्तं ॥९९९॥**

**सुत्तं** गाहा । व्याख्यालक्षणमिदम् । सूत्रोच्चारणादिति तु सूत्रं लक्षणवदुक्तम् । ॥९९९॥ सामायिकादिपदमिदानीम्—

**पदमत्थवायगं जोतगं च तण्णामियाति पंचविधं ।**
**कारयसमासतद्धितणिरुत्तवच्चो वि य पदत्थो ॥१०००॥**

**पद०** गाहा । पदमर्थवाचकं च तन्नामिकादि । वृक्ष इति नामिकम् १ । चादि नैपातिकम् २ । परीत्यौपसर्गिकम् ३ । धावतीत्याख्यातिकम् ४ । सं[य]त इति मिश्रम् ५ । पदार्थश्चतुर्विधः कारकादिविषयः पचतीति पाचकः १ । समासविषयो राज्ञः पुरुषो राजपुरुषः २ । तद्धितविषयो वसुदेवस्यापत्यं वासुदेवः ३ । निरुक्तविषयो भ्रमति च रौति च भ्रमरः ४ इत्यादि ॥१०००॥ अथवा—

**परबोधहितो वऽत्थो किरियाकारगविधाणतो वच्चो ।**
**पज्जाय[६६–द्वि०]वयणतो वि य तध भूतत्थाभिधाणेणं ॥१००१॥**

**पर०** गाहा । त्रिविधः पदार्थः—क्रियाकारकभेदतः १, पर्यायवचनतः २, भूतार्थाभिधानतः ३ इति । तत्र क्रियाकारकभेदतः "घट चेष्टायाम्" घटतेऽसाविति घट इत्यादि १ । पर्यायवचनतो घटः कुटः कुम्भ इत्यादि २ । भूतार्थाभिधानतो योऽसावूर्ध्वकुण्डलौष्ठायतवृत्तग्रीवादिरूप इत्यादि ॥१००१॥

**पच्चक्खतोऽहवा सोऽणुमाणतो लेसतो व सुत्तस्स ।**
**वच्चो वि जधासंभवमागमतो हेतुतो चेव ॥१००२॥**

---

१. निज्जुत्ती को । °यजुत्ती हे । २ °नुपयो°–इति प्रतौ । ३ °होधियारो जे । ४ °यणओ विय त । ५ °त्थाविधा° त । ६ व्व त ।

**पच्चक्ख०** गाहा । अथवा पदार्थः प्रत्यक्षतोऽनुमानतो लेशतश्च । तत्र प्रत्यक्षतः— "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः [तत्त्वा० १. १]" कण्ठाभिधानादित्यर्थः । अनुमानतः— 'न मिथ्यादर्शनात्' इत्यर्थापत्त्यानुमानत इत्यर्थः । लेशतः—समासकरणात् संघातनानि, नैकैकशः, संसूचनादित्यर्थः । अथवागमतो हेतुतश्च सम्भवतः । तत्रागमतः— भव्याभिधानादिवत् । हेतुतः—न सर्वगतोऽयमात्मा कर्तृत्वात्, कुलालवदित्यादि ॥१००२॥

**पायं पदविच्छेदो समासविसयो तदत्थणियमत्थं ।**
**पदविग्गहो त्ति भण्णति [2]सो सुद्धपदे ण संभवति ॥१००३॥**

**पायं** गाहा । इह प्रायेण यः समासविषयः पदयोः पदानां वा विच्छेदोऽनेकार्थसम्भवे सतीष्टार्थनियमनाय क्रियते स पदविग्रहः । यथा—राज्ञः पुरुषो राजपुरुषः, श्वेतः पटोऽस्येति श्वेतपट इत्यादि ॥१००३॥

**सुत्तगतमत्थविसयं व दूसणं चालणं मतं तस्स ।**
**स[3]द्दत्थणायातो परिहारो पच्चवत्थाणं ॥१००४॥**

**सुत्त०** गाहा । इह यत् सूत्रविषयमर्थविषयं वा दूषणमारभ्यते शिष्यचोदकाभ्यां तच्चालनं विचारो वेत्यर्थः । तस्य शब्दार्थन्या[4]यतो [5]निजमतिविशेषाच्च परिहारः प्रत्यवस्थानं दूषितप्रसिद्धिरित्यर्थः । यथा, 'करोमि भदन्त सामायिकम्'—इति गुर्वामन्त्रणवचनो भदन्तशब्द इत्युक्ते चोद्यते गुरुविरहे भदन्तशब्दानभिधानप्रसङ्गोऽभिधाने चानर्थकादिप्रसङ्ग इति । न, आचार्याऽभावेपि स्थापनाचार्यक्रियोपस्थानज्ञापनार्थत्वात्, अर्हत्प्रतिमोपसेवनवत्, गुरुगुणज्ञानोपयोगाद्वा विज्ञानभावाचार्यामन्त्रणवचनत्वात्, आचार्यगुणमनोनिबन्धनाद्विनयमूलधर्मोपदर्शनार्थमिति ॥१००४॥

**एवमणुसुत्तमत्थं सव्वणयमतावतारपरिसुद्धं ।**
**भासेज्ज णिरवसेसं पुरिसं व पडुच्च जं जोग्गं ॥१००५॥**
**होति कतत्थो वोत्तुं सपतच्छेतं सुतं सुताणुगमो ।**
**सुत्ताला[6]वगणासो णामादिण्णासविणियोगं ॥१००६॥**

**एव०** गाहा । **होति** गाहा । इह सूत्रं तत्पदच्छेदं चाभिधाय सूत्रानुगमः कृती जायते, अवसितप्रयोज[7]नः इत्यर्थः । सूत्रालापक[8]न्यासोऽपि नामादिन्यासविनियोगमात्रम् ॥१००५–६॥

---

१ °रणेत्सं°—इति प्रतौ । २ °ति सुद्ध पए सो को । ३ सद्दत्थं णाया° जे । ४ °र्थज्ञाय°—इति प्रतौ । ५ उत्त० चू० पृ० १५ तमे तु 'नयमतविशेषाच्च' इति पाठः । ६ °लावन्नासो जे त हे । ७ °जनमित्य°—इति प्रतौ । ८ °कान्या°—इति प्रतौ ।

**सुत्तप्फासियणिज्जुत्तिणियोगो सेसओ पदत्थादी[1] ।**
**पायं सो च्चिय णेगमणयातिमतगोयरो होति ॥१००७॥**

**सुत्त०** गाहा । सूत्रस्पर्शनिर्युक्तिविनियोगः शेषः पदार्थविग्रहविचारप्रत्यवस्थान-प्रभेदः, सूत्रार्थानुगमनस्वाभाव्यात् । स एव हि प्रायो नैगमादिनयमतविषयः । प्रायोऽभि-धानात् पदविधानन्यासादयोऽपीति ॥१००७॥

**पायं पदविच्छेतो वि[2] सुत्तफासोवँसंघितो जेण ।**
**कत्थइ तँदत्थकारगकालादिगती तओ चेव ॥१००८॥**

**पायं** गाहा । प्रायः पदच्छेदोऽपि क्वचित् सूत्रस्पर्शान्तर्भाव्येव, यतः क्वचित् पदच्छेदादेवार्थ-काल-कारकादयो गम्यन्त इति ॥१००८॥

**अणुयोगद्दाराणं परूवणं तप्पयोयणं जं च ।**
**इह चेव परिसमाँपि[६७-प्र०]तमव्वामोहत्थमत्थाणे ॥१००९॥**

**अणुयो०** गाहा । यद्यप्यध्ययनपरिसमाप्तावनुयोगद्वारपरिसमाप्तिरिष्यते तथापी-हास्थान एवानुयोगद्वारनिरूपणं प्रयोजनपरिसमापनमव्यामोहार्थमुक्तम्, अतिग्रन्थव्यव-धानभयात् ॥१००९॥

**दाइतदारविभागो संखेवेणेहँ वित्थरेणावि ।**
**दाराणं विणियोगं णाहिति कातुं जधाजोग्गं[7] ॥१०१०॥**

**॥ [8]पेढिया समत्ता ॥**

**दाइ०** गाहा । कथं पुनरेवमव्यामोहो यत इहैवोपदर्शितानुयोगद्वारविभागः संक्षेपेणोत्तरत्र विस्तरेणापि शास्त्रार्थमनुगच्छन् द्वाराणां यथास्थानविनियोगमक्लेशेन ज्ञास्यतीति ॥१०१०॥

**॥ अनुयोगद्वारावतारः परिसमाप्तः ॥**

---

१ °त्थाइ त । २ °तो सु° जे । °तो व सु° त । °तो उ सु° हे । ३ °वसंहि° को । ४ पदत्थ° जे । ५ °माणियम° को हे । °माणितम° जे त । ६ °वेणह त । ७ °ओगं को हे । ८ नास्ति तप्रतौ ।

[ उपोद्घाते तीर्थंकरनमस्कारः ]

**संपदमत्थाणुगमे सत्थोवग्घातवित्थरं वोच्छं ।**
**कतमंगलोवयारो सोऽतिमहत्थो त्ति कातूणं ॥१०११॥**

**संपद०** गाहा । इहेदानीमर्थानुयोगद्वारविधावुद्देशादिशास्त्रोपोद्घातविस्तरं वक्ष्यामः । स चातिमहार्थत्वात् कृतमङ्गलोपचारैरारम्यः, अनुपहृतमङ्गलानां विघ्नो मा भूदिति ॥१०११॥

**णणु मंगलं कतं चिय किं भुज्जो अध कतं पि कातव्वं ।**
**दारे दारे कीरति तो कीस ण मंगलग्गहणं ॥१०१२॥**

**णणु** गाहा । आह—ननु मङ्गलमादावेवोक्तमिह किं भूयः ? अथ कृतमङ्गलै-रपि भूयोऽभिधेयमतः प्रतिद्वारमारभ्यतां प्रत्यध्ययनं प्रतिसूत्रं चेति ॥१०१२॥

**णणु मज्झम्मि वि मंगलमादिट्ठं तं च मज्झमेतं ति ।**
**सत्थमणारद्धं चिय एतं कत्तोच्चयं मज्झं ॥१०१३॥**

[3]**णणु** गाहा । अत्राहापरः—नन्वादौ मध्येऽवसाने च मङ्गलमादिष्टम्[4] । तत्रादावुक्तम्, मध्यमङ्गलमिदानीमुच्यते । न तावच्छास्त्रस्यादिवर्णोच्चारणमप्यारभ्यते, कुतोऽस्य मध्यता ? इति ॥१०१३॥

**चतुरणुयोगद्दारं जं सत्थं[5] तेण तस्स मज्झमिणं ।**
**साहति मंगलग्गहणं सत्थस्संगाइं दाराइं ॥१०१४॥**

**चतु०** गाहा । आह—यतश्चतुरनुयोगद्वारं शास्त्रम्, अतोऽनुयोगद्वारद्वयमति-क्रम्य पदार्थानुगमादौ मङ्गलमारभ्यते तद् मध्यमङ्गलमिति । यच्च शास्त्रेऽनारब्धेऽप्यनु-योगद्वारमध्ये मङ्गलमारभ्यते[6] तद् ज्ञापयति शास्त्राङ्गाण्यनुयोगद्वाराणि, शास्त्रस्वरूप-मेवेत्यर्थः ॥१०१४॥

**तध वि ण मज्झं एतं भणितमिहावासयस्स[7] जं मज्झं ।**
**तं मंगलमादिट्ठं इदमज्झयणस्स होज्जा हि ॥१०१५॥**

**तध वि** गाहा । उच्यते—तथाऽप्येतच्छास्त्रमध्यं न भवति, यतो यदावश्यक-मध्यं तद् मध्यमङ्गलमादिष्टम्, न चेदमावश्यकमध्यम् । इदं तु सामायिकाध्ययनमध्यं भवेत् ॥१०१५॥

**भणितं च पुव्वमेतं सव्वं चिय मंगलं ति किमणेणं ।**
**मंगलंतियबुद्धिपरिग्गहं[8] पि कारावितो सीसो ॥१०१६॥**

---

१ मज्झि त । २ कत्तोचयं जे । ३ केइ णणु—इति प्रता । ४ गा० १३ । ५ °त्थं, तस्स तेण हे त । ६ °रभते-इति प्रतौ । ७ °हावस्सय° को हे त । ८ °लंति हे ।

**भणितं** गाहा। उक्तं चेदमादौ–सर्वमेव शास्त्रं मङ्गलमिदम्, किमनेन मध्यदेशादिमङ्गलविशेषणेन ?। अथ मतिः—शास्त्रमङ्गलत्वेऽपि शिष्यमङ्गलत्रयमतिपरिग्रहार्थोऽयं यत्न इति। तच्च न, यतः शिष्योऽपि मङ्गलत्रयमतेः परिग्रहं प्रागेव कारित इति ॥१०१६॥

**[1]आवासयस्स तं कतमिदं[2] तुं णावासमेत्तंय किंतु।**
**सव्वाणुओगणिज्जुत्तिसत्थपारं[६७–द्वि०]भ एवायं ॥१०१७॥**

**आवास०** गाहा। उच्यते–यदादौ मङ्गलम्, सर्वं शास्त्रं मङ्गलम्, सर्वशास्त्रमङ्गलत्रयमतिपरिग्रहश्च सर्वं तदावश्यकस्योक्तम्, इदं तु नाऽऽवश्यकमात्रम्, किं तर्हि ? सर्वानुयोगनिर्युक्तिशास्त्रमेवेदमारभ्यत इत्यतस्तदविघ्नसम्पादनाय मङ्गलग्रहणमिति ॥१०१७॥

**दसयालियाइणिज्जुत्तिगहणतो भणितमुवरि वा जं च।**
**सेसेसु वि अज्झयणेसु होति एसेव णिज्जुत्ती ॥१०१८॥**

**दसया०** गाहा। आह–कुतः पुनरिदं गम्यते 'सर्वानुयोगनिर्युक्तिशास्त्रारम्भ एवायम्' ? इति। उच्यते–**दशवैकालिका**दिग्रहणाद् [यद्] वक्ष्यति–"आवस्सयस्स दसकालियस्स तहुत्तरज्झमायारे।" [१०७१] इत्यादि; अथ चोपरि यद् वक्ष्यति–"सेसेसु वि अज्झयणेसु होइ एसेव णिज्जुत्ती" [३१५७] **चतुर्विंशतिस्तवादिषु** सर्वाध्ययनेषु चेति, अतोऽवगम्यते सर्वानुयोगनिर्युक्तिशास्त्रारम्भ एवे(वा)यमिति ॥१०१८॥

**[3]सामाइयवक्खाणे दसालियादीण कोऽधिकारोऽयं।**
**जं पायमुवग्घातो तेसिं सामण्ण एवायं ॥१०१९॥**
**इध तेसिं तम्मि गते वीसुं वीसुं विसेसमेत्तायं[4]।**
**[5]वेच्छिति सुहं लहुं चिय तग्गहणं लाघवत्थमतो ॥१०२०॥**

**सामाइय०** गाहा। **इध** गाहा। आह–सामायिकव्याख्यानाधिकारे को हि **दशवैकालिका**दीनामवसरः ? उच्यते–उपोद्घातसामान्यादवसरः, यतः प्रायेणाऽयमुपोद्घातस्तेषामपि सामान्य एव, इह तेषामुपोद्घाते नि(वि)हिते सामान्यतः पृथक् पृथग्विशेषमात्रकमयत्नेन ग्रहीष्यतीति लाघवार्थं दशवैकालिकादिग्रहणमिति ॥१०१९–२०॥

**तम्हा जेण महत्थं सत्थं सव्वाणुयोगविसयमिणं।**
**सत्थंतरमेवऽधवा तेण पुणो मंगलग्गहणं ॥१०२१॥**

---

१ आवस्सय° को हे त। २ °मिणं तु को। ३ समा° को। ४ °समित्तोऽयं हे। °समित्तायं को। ५ घेच्छ° त।

**तम्हा** गाहा। तस्माद् यतः सर्वानुयोगविषयसामान्यत्वाद् बह्वर्थमिदं शास्त्रम्। अथवा शास्त्रान्तरमेव, नावश्यकमात्रम्, अतः पुनर्मङ्गलग्रहणम् ॥१०२१॥

**तित्थकरे भगवंते अणुत्तरपरक्कमे अमितणाणी ।**
**तिण्णे सुगतिगतिगते सिद्धिपधपदेसए वंदे॥८०॥१०२२॥**

**तिज्जति जं तेण तहिं ततो व तित्थं तयं च दव्वम्मि ।**
**सरितादीणं भागो णिरवायो तम्मि य पसिद्धे ॥१०२३॥**
**तरिता तरणं तरितव्वयं च सिद्धाणि तारओ पुरिसो ।**
**वाहोदुवादि तरणं तरणिज्जं णिण्णयादी णं ॥१०२४॥**

**तित्थकरे भगवंते** गाहा। **तिज्जति** गाहा। **तरिता** गाहा। इह तीर्थकरणात् तीर्थकरा इति वक्ष्यते। तत्र "तॄ प्लवनतरणयोः" इत्यस्य तीर्थमिति। तच्च नामादि चतुर्विधम्। तत्र द्रव्यतस्तीर्यतेऽनेनास्मिन् वेत्यादिना तीर्थम्, तच्च नद्यादीनां योऽवकाशः समोऽनपायश्च। तत्र च प्रसिद्धे तन्नान्तरीयकत्वादवश्यं तरित्रादिभिः सेद्धव्यम्। तत्र तरिता पुरुषः, तरणं वाहोडुपादि, तरणीयं नद्यादि ॥१०२२–२४॥

**देहातितारयं जं बज्झमलावणयणादिमेत्तं च ।**
**णेगन्ताणच्चन्तियफलं च तो दव्वतित्थं तं ॥१०२५॥**

**देहाति०** गाहा। तच्च देहादिद्रव्यतारणा[त्] बाह्यमलादिद्रव्यापनयनादनैकान्तिकाऽनात्यन्तिकफलत्वात् स्वयं च द्रव्यात्मकत्वाद् द्रव्यतीर्थमुच्यते ॥१०२५॥

**इह तारणाति[६८ प्र०]फलयं ति ण्हाणपाणावगाहणादीहिं ।**
**भवतारयं ति केयिं तण्णो जीवोवघातातो ॥१०२६॥**
**सूणंगं पिव तमुदूहलं व ण य पुण्णकारणं ण्हाणं ।**
**ण य जतिजोग्गं तं मण्डणं व कामंगभावातो ॥१०२७॥**

**इह** गाहा। **सूणं०** गाहा। द्रव्यतीर्थं किलेह शरीरसम्भारणादिफलोपकारित्वात् स्नानपानाऽवगाहनादिक्रियाभिर्विधिवदासेव्यमानं भवापायेभ्योऽपि तारयतीति केचिन्मन्यन्ते। तच्च न, जीवोपघातात्, सूनादिवत्। इतश्च न पापेभ्यः तारयति, सूनाङ्गत्वात्, उदूखलादिवत्। न च स्नानं पुण्यहेतुरिति जाने, कामाङ्गत्वात्, मण्डनवत्। न च यतियोग्यम्, कामाङ्गत्वात्, मण्डनवदिति ॥१०२६–२७॥

---

१ वाहोडु° को हे। २ °याईयं को हे। ३ तच्च–इति प्रतौ। ४ °णं पादुवादि–इति प्रतौ।
५ °दिसत्तं जे को। °दिमित्तं त। ६ केई को हे।

देहोवकारि वा तेण तित्थमिह दाहणासणादीहि ।
मधुमज्जमंसवेसादयो वि तो तित्थमावण्णं ॥१०२८॥

देहोव० गाहा । यदि च देहोपकारित्वात्* तीर्थम्, एवं मद्यादयोपि* तीर्थमापद्यन्त इति ॥१०२८॥

भावे तित्थं संघो सुतविहितं तारओ तहिं साधू ।
णाणाइतियं तरणं तरितव्वं भवसमुद्दोयं ॥१०२९॥

भावे गाहा । भावतस्तीर्थं सङ्घः, श्रुतविहितत्वात्, यस्मादपदिष्टम्—"तित्थं भंते ! तित्थं ? तित्थकरे तित्थं ? गोयमा ! अरहा ताव णियमा तित्थंकरे, तित्थं पुण चाउव्वण्णाइण्णो संघो" [भगव० सू० ६८१] त्ति । तत्र तीर्थप्रसिद्धौ तारकादिविशेषाः साध्वादयः । एषां च तीर्थादीनां परस्परतोऽन्यताऽनन्यता च विवक्षातोऽवसेया । तत्र सम्यग्दर्शनादिपरिणामात्मकत्वात् सङ्घस्तीर्थम्, तत्रावतीर्णतारणात् तदन्तर्भावित्वाद्विशेष एव । तरिता साधुः, स्वातन्त्र्येण सम्यग्दर्शनादिक्रियानुष्ठानात् । सम्यग्दर्शनादित्रयं करणभावापन्नं [तरणम्], साधकतमत्वात्, तरणीयमात्मीयं एवौदा(द)यिकादिसंसारपरिणामः, तत्परित्यागात् ॥१०२९॥

जं णाणदंसणचरित्तभावतो तव्विवक्खभावातो ।
भवभावतो य तारेति तेण तं भावतो तित्थं ॥१०३०॥

जं णाण० गाहा । इह ज्ञानादिभावात्मकत्वात् तद्भावेनैव तद्विपक्षभावादज्ञानादेः, सर्वभावाच्च तारणाद् भावतीर्थमुच्यते ॥१०३०॥

तध कोधलोभकम्ममयदाहतण्हामलावणयणाइं ।
एगन्तेणऽच्चन्तं च कुणति सुद्धिं भवोघातो ॥१०३१॥

तध गाहा । तथा यतः क्रोध-लोभ-कर्मात्मकभावदाहतृष्णामलापनयनमैकान्तिकमात्यन्तिकं चानेन क्रियतेऽतश्च भावतीर्थमिति ॥१०३१॥

दाहोवसमादिसु वा जं तिसु थितमधवं दंसणादीसु ।
तो तित्थं संघो च्चिय उभयं वं विसेसणविसेस्सं ॥१०३२॥

दाहो० गाहा । अथवा यतः क्रोधभावदाहोपशमादिषु त्रिषु स्थितम्, अथवा सम्यग्दर्शनादिषु, अतः त्रिस्थम्—सङ्घ एव; प्राकृताभिधानात् तित्थं । उभयं चोभयविशे[illegible]ति किं त्रिस्थम् ? संघः । कश्च संघः ? स्थितिविशिष्टः सङ्घ[:], बहुत्वान्नान्य[:] ॥१०३२॥

१ 'वेस्सा' को हे । २ *एतच्चिह्नान्तर्गतः पाठः पुनरावृत्तः प्रतौ । ३ 'साधू' नास्ति त । ४ णाणातीयं जे । ५ तरितव्वोयं भ त । ६ द्दो ॥ त । ७ इण्णे सव्वोत्ति-इति प्रतौ । ८ त्तीमं ए इति-प्रतौ । ९ णइ य सु को हे । णति सिद्धि त । १० मध वं त । ११ वि त । १२ विस्सेसं को । विसेसं त ।

कोधग्गिदाहसमणातओ व्व [1]ते च्चिय तिण्णि जस्सऽत्था ।
होइ तियत्थं तित्थं तमत्थसद्दो फलत्थोऽयं ॥१०३३॥

**कोधग्गि०** गाहा । अथवेह क्रोधाग्निदाहशमनादयस्त्रयोऽर्था यस्य तत् त्र्यर्थम्, अर्थशब्दः फलपर्यायवचनः, त्रिफलमित्यर्थः । तच्च सङ्घ एव, ततोऽनर्थान्तरत्वात् सम्यग्दर्शनादित्रयं चेति ॥१०३३॥

अधवा सम्म[६८-द्वि]दंसणणाणचरित्ताइं तिण्णि जस्सत्था ।
तं तित्थं पुव्वोदितमिधम[2]त्थो वत्थुपज्जायो ॥१०३४॥

**अधवा** गाहा । अथवा सम्यग्दर्शनादयस्त्रयोऽर्था यस्य तत् त्र्यर्थम्, अर्थशब्दो वस्तुपर्यायवचनः, त्रिवस्तुकमित्यर्थः । तच्च सङ्घ एव, ततोऽनन्यत्वात् । त एव वा सम्यग्दर्शनादयस्त्रयोऽर्थाः समाहृतास्त्र्यर्थः, सङ्ख्यापूर्वत्वात् स्वार्थत्वाच्च द्विगोरिति ॥१०३४॥

इह सम्मं सद्धाणोवलद्धिकिरियासभावतो जै[3]इणं ।
तित्थमभिप्पेते[4]फलं सम्मपरिच्छेदकिरिय व्व ॥१०३५॥

**इह** गाहा । इह जैनमेव तीर्थमभिप्रेतार्थप्रसाधनमिति प्रतिजाने । कुतः ? सम्यक्छ्रद्धानोपलब्धिक्रियात्मकत्वात् । इदं(ह) यत् सम्यक्छ्रद्धानोपलब्धिक्रियात्मकं तदिष्टार्थप्रसाधनमिष्टम् । यथा सम्यक्परिच्छेदवती रोगापनयनक्रिया । यच्चेष्टार्थप्रसाधनं न भवति न तत् सम्यक्श्रद्धानोपलब्धिक्रियात्मकं यथोन्मत्तक्रिया ॥१०३५॥

णाभिप्पेतफलाइं तदंगवियलत्ततो कुतित्थाइं ।
[5]वियलणयत्तणतो[6]चिय विफ[7]लाइं वियलकिरिय व्व ॥१०३६॥

**णाभि०** गाहा । नाभिप्रेतार्थप्रसाधनायाऽलं कुतीर्थानि, सम्यक्श्रद्धानाद्यङ्गविकलत्वात्, विकलनयत्वाच्च विकं(फ)ला[नि], चिकित्साक्रियावदिति ॥१०३६॥

अधव सुहो[8]तारुत्तारणादि दव्वे चतुव्विधं तित्थं ।
एवं चिय भावम्मि वि [9]तत्थातिमयं सरक्खाणं ॥१०३७॥
[10]तच्चणियाण[11]बितियं विसयसुहकुसत्थभावणाधणियं ।
ततियं च[12]बोडियाणं चरिमं जइणं सिवफलं तु ॥१०३८॥

**अधव** गाहा । **तच्चणि०** गाहा । अथवा [13]सुखावतारं सुखोत्तारमित्यादि द्रव्यतीर्थम् । [14]भावतीर्थमप्येवमेव भस्माङ्गरागादिज्ञापकात् ॥१०३७-१०३८॥

---

१ ते चेव जस्स तिण्णत्था को हे । ता चेव जस्स तिण्णत्था त । २ °मिह अत्थो को हे । ३ जेणं को । ४ °प्फ° जे । ५ नयवियलत्त °त । ६ च्चिय त । °तो विय को जे । ७ °वियलाइं त । ८ °होत्ता° त । ९ तित्था° त । १० तव्वि° त । तव्व° हे । ११ बीयं त हे । १२ बोडि° त । १३ मुखा°-इति प्रतौ । १४ भव्य°-इति प्रतौ ।

णणु जं दुहावतारं दुक्खुत्तारं च तं दुरभिगम्मं ।
लोगम्मि पूइतं जं [1]सुहावतारं सुहुत्तारं ॥१०३९॥

णणु गाहा । आह—ननु जैनस्य दुःखावतारत्वा[त् दुरुत्तारत्वा]च्च दुरभिगम्यता। [2]असौ भावतीर्थस्य नेष्यते, तरणक्रियाविघातित्वात्। लोके च सुखावतारोत्तारमिष्टम्, इष्टार्थप्रसाधनत्वात् ॥१०३९॥

एवं तु दव्वतित्थं भावे दुक्खं हितं लभति जीवो ।
मिच्छत्तण्णाणाविरतिविसयसुहभावणाणुगतो ॥१०४०॥

पडिवण्णो पुण कम्माणुभावतो भावतो परमसुद्धं ।
किध [3]मोच्छिति जाणंतो परमहितं दु[६९-प्र०]ल्लभं च पुणो ॥१०४१

एवं तु गाहा । पडिवण्णो गाहा । उच्यते—सत्यम्। एवं तु द्रव्यतीर्थमुक्तम्, भावतीर्थं पुनर्दुःखावतारोत्तारमेव गुणवदिष्यते । यतः कृच्छ्रेण हित[4]मवाप्यते। परमहितं च सद्धर्मतीर्थम्, अशेषकर्मक्षयहेतुत्वात्। तत्रानादिकर्मसन्तानोपनिबन्धनो(ना ?)ऽनादिमिथ्यादर्शनाज्ञानाविरतिमलीमसो विषयसुखस्थैर्योचि(°स्थैर्यापि)तश्च जीतश्च (?) जीव[:] कृच्छ्रेण दर्शनादिक्षयोपशमादिलाभात् सम्यग्दर्शनादिक्षयोपशमादिलाभाच्च सम्यग्दर्शनादित्रयाभिमुख्यं प्रतिपद्यतेऽभ्युपगतस्तु निःश्रेयसप्रसाधनमिदमसुलभं च भूय इति पश्यत्को हि नाम विद्वान् परित्यजेदित्येवं दुःखावतारोत्तारमिदम् । अत एव चाभिप्रेतसाधनमिति ॥१०४०–१०४१॥

अतिकक्खडं व किरियं रोगी दुक्खं पवज्जते पढमं ।
पडिवण्णो रोगक्खयमिक्खंन्तो मुंचते दुक्खं ॥१०४२॥

इय कम्मवाधिगहितो संजमकिरियं पवज्जते दुक्खं ।
पडिवण्णो कम्मक्खयमिक्खंतो मुंचते दुक्खं ॥१०४३॥

अति० गाहा । इय गाहा । यथा चेहातिदुष्करां क्रियामातुरो दुःखेन प्रतिपद्यते। अभ्युपगतस्तु विधिवदुपासीनो [7]रोगोपशमविशेषमीक्षमाणः विद्वान् कथं नाम तामुत्सृजेत्? तद्वत्कर्मरोगान्त(तु)रसत्वो विषयापथ्यादिपरित्यागदुष्करां स्वहितसम्पादनीं संयमक्रियां कृच्छ्रेण प्रतिपद्यते । अभ्युगतः पुनरागमचक्षुषा कर्मरोगक्षयविशेषमीक्षमाणो विद्वान् कथं नाम तां त्यक्षतीति? उक्तं तीर्थम् ॥१०४२॥१०४३॥

---

१ सुहोय° त। २ °म्यता सावती°-इति प्रतौ। ३ मोच्छिहि त। ४ °तमबाध्यते-इति प्रतौ।
५ °मिच्छ° को हे त। ६ °मिच्छ° को हे त। ७ रोगोयंसमवि° इति प्रतौ।

**अणुलोमहेतु[1]तस्सीलताय जे भावतित्थमेतं तु ।**
**कुव्वंति पगा[2]सेंति[3]य ते तित्थकरा हि[4]तित्थकरा ॥१०४४॥**

**अणु॰** गाहा । हेतुताच्छील्यानुलोम्यतः सद्धर्मतीर्थं कुर्वन्तीति तीर्थकराः । हेतौ—सद्धर्मक्रियातीर्थहेतवो यद्वद्यशस्करी विद्या । ताच्छील्ये—कृतिनोऽपि तीर्थकरनामोद[5]यात्, भव्यसत्त्वानुकम्पा[6]परतया च सद्धर्मतीर्थप्रदेशनशीलाः, कुलकरनृपवत् । आनुलोम्ये—स्त्रीपुरुषबालवृद्धस्थविरजिनकल्पिकानामुत्सर्गापवादविधिनाऽनुरूप्यतः सद्ध[7]र्म्मतीर्थानुलोमताकारिणः, वचनकरवत् । सर्वत्र च वक्ष्यमाण[8]वन्दनक्रियापदाभिसम्बन्धात् कर्मभावः । तत्र च द्वितीया, तद्बहुवचनं च, प्राकृताभिधानादिहैकारान्तम् । अतः 'तित्थकरे' ति ॥१०४४॥

**[9]इस्सरियरूवसिरिजसधम्मपयत्ता मता भगाभिक्खा ।**
**ते तेसिमसामण्णा संति जओ तेण भगवंतो[10] ॥१०४५॥**

**इस्सरि॰** गाहा । इहैश्वर्यादयो भगसंज्ञास्तत्र[11] त्रिविधातिशेषमयमैश्वर्यमचिन्त्यमर्हतां भगाभिधानम् । तथा रूपं निरुपमं सर्वाम[12]रादरोपहृतशुभद्रव्यापादितार्हत्पादाङ्गुष्ठप्रमाणरूपानन्तगुणप्रकर्षात्, श्रीरपि तपस्तेजोविभूतिरसाधारणा[13] च, यशश्चाचिन्त्यगुणाविर्भूतमतिशुभं भुवनत्रयव्यापि, धर्मश्चात्र क्षमादिरशेषचारित्रमोहनीयमलापगमादक्षतः, प्रयतनं प्रयत्नः, स चाप्रमादवतां महतामचिन्त्यः । अतश्चैश्वर्यादिभगयोगाद्भगवतोऽर्हन्तः । ते 'भगवंते' ॥१०४५॥

**विरियं प[14]रक्कमो [15]इर परेऽरओ वा [16]जयो तदक्कमणं ।**
**सोऽणुत्तरो वरो सिं अणुत्तरपरक्कमा तो ते ॥१०४६॥**

**विरियं** गाहा । प्राक्रमो नाम वीर्यविशेषः । स चाशेषक्षीणवीर्यान्तरायाणामनुत्तरः, सर्वामरवीर्यानन्तगुणप्रकर्षात् । परे चाऽरयः शत्रवः, भावतः कषायादयः, आक्रमणमाक्रमः पराजयः, परेषामाक्रमः पराक्रमः, सोऽनुत्तरो येषां तेऽनुत्तरपराक्रमाः—ते 'अणुत्तरपरक्कमे' ॥१०४६॥

**अमितमणंतं णाणं तं तेसिं अमितणाणिणो तो ते ।**
**तं जेण णेयमाणं तं चाणंतं जतो णेयं ॥१०४७॥**

---

१ हेतुतार्सी° जे ।- २ पगासंति को हे त । ३ तु जे । ४ हि ति° जे । ५ °दयो भ° इति प्रतौ । ६ °कम्पयापर° इति प्रतौ । ७ °द्धर्मे ती° इति प्रतौ । ८ °मानक्रिणवन्द°—इति प्रतौ । ९ ईस° को । १० °वंते को हे । ११ विविधान्निशे° इति प्रतौ । १२ °मना।द° इति प्रतौ । १३ °णा या य° इति प्रतौ । १४ पक्कमो को । परिक्क° हे । १५ °मो किर हे । °मो इह को । १६ जदा जे । जओ को हे ।

**अमित**० गाहा । न मातुं शक्यते अनन्तत्वादमितम्, तच्च केवलज्ञानम्, अमितं ज्ञानमेषामित्यमितज्ञानिनः । केवलं चानन्तम्, [अ]नन्तज्ञेयालम्बनत्वात् । ज्ञेयं चानन्तद्रव्यपर्यायात्मकत्वादनन्तम् ॥१०४७॥

**तिण्णा समतिक्कंता भवण्णवं कं गतिं गता तरितुं ।**
**सुगतीण गतिं पत्ता सुगतिगतिगता ततो होन्ति ॥१०४८॥**

**तिण्णा** गाहा । तरन्ति [1]स्म तीर्णा भवार्णवमतिक्रान्ताः । आह—तीर्णाः कां गतिमिताः ? उच्यते—ज्ञानित्वादनाबाधत्वाच्च परमसुखिनः सुगतयः सिद्धाः, तेषां सुगतीनां गतिः सुगतिगतिः, नारकादिगतिव्युदासार्थं गतिविशेषणम् । सु[गति]गतिं गताः, सुगति[गति]गताः । ते 'सुगतिगतिगते' ॥१०४८॥

**स च्चिय सुगतीण गती सिद्धी सिद्धाण जो पधो तीसे ।**
**[2]तद्देसया पधाणा सिद्धि[६९–द्वि०]पधपदेसया तो ते ॥१०४९॥**

**स च्चिय** गाहा । तस्या एव सुगतीनां गतेः सिद्धेः पन्थाः सिद्धिपथः, प्रधानाः प्रगताः प्रशस्ता आदौ वा देशकाः प्रदेशकाः सिद्धिपथप्रदेशकाः । ते 'सिद्धिपधपदेसए' ॥१०४९॥

**सिद्धिपधो पुण सम्मत्त-णाण-चरणाइं वक्खमाणाइं ।**
**भवहेतुविवक्खातो [3]णिताणपडिकूलकिरिय व्व ॥१०५०॥**

**सिद्धि**० गाहा । सिद्धिपथः पुनः सामायिकानि सम्यग्दर्शनज्ञानचारित्राणि वक्ष्यमाणानि । कुतः ? मिथ्यादर्शनज्ञानाविरतिभवहेतुविपक्षत्वात् । इह यो हि यद्धेतुविपक्षस्वभावः स तद्धेतुविघातसिद्धेर्हेतुर्दृष्टः, तद्यथा रोगनिदानप्रत्यनीकक्रिया रोगापगतेः । अथवाऽयमन्यः प्रयोगः—सम्यग्दर्शनादित्रयमिष्टार्थप्रसिद्धेः पन्थाः साधनमित्यर्थः । कुतः ? तद्वि[4]घातहेतुविपक्षत्वात् । इह यो हि यस्य विघात[5]हेतोर्विपक्षस्वभावः स तद्धेतुर्दृष्टः । तद्यथा, रोगनिदानप्रत्यनीकक्रिया रोगापगतेः ॥१०५०॥

**वंदेऽभिवातएऽभित्थुणामि वा ते तिलोगमंगल्ले ।**
**सामण्णवन्दणमिणं तित्थकरत्ताविसि[6]ट्ठाणं ॥१०५१॥**

**वंदे** गाहा । 'वंदि अभिवादनस्तुत्योः' इति वंदे अभिवादयेऽभिष्टुवे वाऽहमित्युक्तं भवति । सामान्यवन्दनमिदं तीर्थकरत्वाऽविशिष्टा[ना]मृषभादीनां मङ्गलार्थमुक्तम् ॥१०५१॥

---

१ °न्ति सती°–इति प्रतौ । २ तद्देसयो जे । ३ तिठाण° को । ४ तद्विपगतहे°–इति प्रतौ । ५ °हेतुर्वि° इति प्रतौ । ६ °सिद्धाणं त ।

**पत्तेयवंदणमिदो संपतेतित्थाधिवस्स वीरस्स ।**
**सुतणाणत्थप्पभवो सविसेसेणोवकारि[1] त्ति ॥१०५२॥**

**पत्तेय०** गाहा । प्रत्येकं वन्दनमिदानीमुपकार्योपकारकसम्बन्धानुवृत्त्या वर्त्तमानतीर्थाधिपतेः समस्तश्रुतज्ञानार्थप्रदानोपकारिणो वर्द्धमानस्वामिनः ॥१०५२॥

**तुल्लगुणाणं [3]परिसं णमितूर्ण व जध ससामियं णमति ।**
**तध तुल्लगुणे वि जिणे णमितुं तित्थाहिवे णमति ॥१०५३॥**
**वंदामि महाभागं महामुणिं महायसं महावीरं ।**
**अमर-णररायमहितं तित्थकरमिमस्स तित्थस्स ॥८१॥१०५४॥**
**भागो[6]अचिंता सत्ती स महाभागो महप्पभावो त्ति ।**
**स महामुणी महंतं जं मुणति मुणिप्पधाणो वा ॥१०५५॥**

**तुल्ल०** गाहा । **वंदामि** गाहा । **भागो** गाहा । भागः किलाचिन्त्या शक्तिः । अथवा भज सेवायामिति भजनं भागो भक्तिरित्यर्थः । महान् भागोऽस्येति महाभागः महाविशेषभजनम् । अथवा महद्भिरिन्द्रादिभिर्भागो भजनं सेवेति । मन ज्ञान इति मन्यतेऽसाविति मुनिः, सर्वज्ञत्वान्महामुनिः, मुनयो वा साधवस्तत्प्रधानत्वात् महामुनिः ॥१०५३–१०५५॥

**तिभुवणविक्खातजसो महायसो णामतो महावीरो[7]**
**विक्कंतो [8]व कसायादिसत्तुसेण्णप्पराजयतो ॥१०५६॥**

**तिभु०** गाहा । भुवनत्रयव्यापित्वान्महद्यशोऽस्येति । महावीर इति नामतः । शूर वीर विक्रान्ता(न्तौ) इति वा कषायादिशत्रुजयान्महाविक्रान्तो महावीरः ॥१०५६॥

**[9]ईरेति विसेसेणं व खिवति व कम्माइं [६९ द्वि-प्र]गमयति सिवं वा ।**
**गच्छति य तेण वीरो स महं वीरो महावीरो ॥१०५७॥**

**ईरेति** गाहा । ईर गतिप्रेरणयोरित्यस्य वा विपूर्वस्य वीरः—विशेषेणेरयति कर्म, गमयति याति [11]वा शिवमिति वीरः, महांश्चासौ वीरश्चेति महावीरः ॥१०५७॥

१ संपइ को हे त । २ °वगारो त । ३ पुरि° त । ४ °ण जहेव स° को । °ण जह स° हे । ५ °हिवं को हे त । ६ भागोऽचिं° को । भागो चिं° हे । भोगा अचिं° त । ७ °वीर जे । ८ व्व जे । ९ दारे° जे । १० °सेणं खिवेइ हे त । °सेण व खवे° को । ११ वेहमिति- इति प्रतौ ।

**अमर-णररायमहितं ति पूजितं तेहि किमुत सेसेहिं ?**
**[1]संपततित्थस्स [2]पभुं मंगल्लमधोवकारिं च ॥१०५८॥**

**अमर०** गाहा। अमराणां राजानः शक्रादयो, नराणां चक्रवर्त्यादयः, तैर्महितः पूजितो मह पूजायामिति तन्महनाच्च शेषैरप्यर्थापत्तितो गम्यते। वंदामीत्यादि दीपकमनुवर्त्तन्ते(र्तते)। आदिगाथायां वंदे इति, इह वंदामीति प्राकृताभिधाने सर्वत्रोभयपदोपदर्शनार्थमुभयग्रहणम् ॥१०५८॥

**एक्कारस वि गणधरे पवायएँ पवयणस्स वंदामि ।**
**सव्वं गणधरवंसं वायगवंसं पवयणं च ॥८२॥१०५९॥**

**पुज्जो जधत्थवत्ता सुतवत्तारो तधा गणधरा वि ।**
**पुज्जा पवायगा पवयणस्स ते बारसंगस्स ॥१०६०॥**

**जध वा रायाणत्तं रायणियुत्तपणतो सुभं लभति ।**
**तध जिणवरिन्दविहितं गणधरपणतो सुहं लभति ॥१०६१॥**

**एक्कारस०** गाहा। **पुज्जो** गाहा। **जध वा** गाहा। प्रायेण कण्ठ्य एवं गाथार्थ इति क्वचित् किञ्चिद्वक्ष्यामः। यथार्हन्नर्थस्य वक्तेति पूज्यस्तथा गणधराः गौतमादयः सूत्रस्य वक्तार इति पूज्यन्ते मङ्गलत्वाच्च। प्रगतादय आदौ वा वाचकाः प्रवाचकाः। कस्य ? प्रवचनस्य द्वादशाङ्गस्य ॥१०५९–६१॥

**जध मूलसुतप्पभवा पुज्जा जिण-गणधरा तधा जेहिं ।**
**तदुभयमाणीतमितं तेसिं वंसो किध ण पुज्जो ॥१०६२॥**

**जध** गाहा। यथा मौलस्यार्थस्य वक्तेति पूज्योऽर्हन् सूत्रस्य गणधरास्तथा यैरिदमुभयमिदमानीतमाचार्योपाध्यायैस्तद्वंशोऽप्यानयनोपकारित्वात् पूज्य इति वच्यते। ॥१०६२॥

**जिणगणधरुग्गतस्स वि सुतस्स को गहण-धरण-दाणाइं ।**
**कुणमाणो जति गणधर-वाय[3]गवंसो ण होज्जाहि ॥१०६३॥**

**जिण०** गाहा। अन्यथाऽर्हतोपदिष्टस्याप्यर्थस्य गणधरैश्च सूत्रीकृतस्य तत्रैवोच्छेदोऽभविष्यत् यद्याचार्योपाध्यायवंशक्रमात्तद्ग्रहणधरणप्रदानक्रिया न स्युः ॥१०६३॥

**सीसहिता वत्तारो गणाधिवा गणधरा तदत्थस्स ।**
**सुत्तस्सोवज्झाया वंसो तेसिं परंपरओ ॥१०६४॥**

---

१ संपइ को हे त। २ पट्ट को। ३ °यते जे। ४ °वन्सो जे।

**सीस०** गहा । तत्राचार्या गणाधिपतयोऽर्थस्य वक्तारो गणधराः, तद्वंशो गणधरवंशः, उपाध्यायाः सूत्रस्याध्यापयितारो वाचकाः, तद्वंशो वाचकवंशः, तत्पारम्पर्यमित्यर्थः ॥१०६४॥

[६९द्वि- द्वि०] **पगतं पधाणवयणं पढमं वा बारसंगमिह तस्स।**
**जति वत्तारो पुज्जा तं पि विसेसेण तो पुज्जं ॥१०६५॥**

**पगतं** गाहा । प्रगतं प्रधानं प्रशस्तमादौ वा वचनं द्वादशाङ्गम् । यदि तद्वक्तारः पूज्यास्त[दा त]दपि विशेषेण पूज्यम्, साक्षादुपकारित्वाद् गुणात्मकत्वात् ॥१०६५॥

**ते वंदितूण सिरसा अत्थपुधत्तस्स तेहिं कधितस्स।**
**सुतणाणस्स भगवतो णिज्जुत्तिं कित्तइस्सामि ॥८३॥१०६६॥**

**ते तित्थकरातीएऽभिवंदितुं सुकतमंगलायारो[१] ।**
**णिव्विग्घमतो वोच्छं पंगतमुवंग्घातणिज्जुत्तिं ॥१०६७॥**

**अत्थो सुतस्स विसयो तत्तो भिण्णं सुतं पुधत्तं ति।**
**उभयमितं सुतणाणं णियोयणं तेसि णिज्जुत्ती ॥१०६८॥**

**ते वंदि०** गाहा। **ते तित्थकरा०** गाहा । **अत्थो** गाहा । इहार्थः श्रुतविषयः श्रुताभिधेयो यावत् विषय-विषयिभेदात्तस्मात् सूत्रं पृथक्, तद्भावः पृथक्त्वम्, अर्थश्च पृथक्त्वं चार्थपृथक्त्वम्–सूत्रार्थोभयम्, तत्परस्परनियोजनं निर्युक्तिः ॥१०६६–१०६८॥

**अत्थस्स व पिधुभावो पुंधत्तमत्थस्स वित्थरत्तं ति।**
**इह सुंतविसेसणं चिय अत्थपुधत्तं व से सण्णा ॥१०६९॥**

**अत्थस्स** गाहा । अथवा पृथुः–विस्तीर्णः, तद्भावः पृथुत्वम्, अर्थस्य पृथुत्वमर्थपृथुत्वम्, अर्थविस्तर इति यावत् । तस्य श्रुतज्ञानस्य भगवत इति श्रुतविशेषणम् । अथवाऽर्थपृथक्त्वमर्थपृथुत्वं वेति संज्ञैव श्रुतस्य ॥१०६९॥

**अत्थातो त्ति पुधत्तं जस्स तओ वा पुधत्ततो जस्स।**
**जं वा अत्थेण पिधुं अत्थपुधत्तं ति तब्भावो ॥१०७०॥**

---

१ °णं पवयणं बा° को हे । °णं वा पवयणं बा° त । २ °यारा जे । ३ पयमु° त ।
४ मुग्घा° जे । ५ पुहु° त । ६ पुहुत्त° त को । ७ सुहवि° त । सुयस्स वि° हे ।
८ पुहु° त को । ९ य त । १० पुहु° त को । ११ पुउ° त को हे ।

**अत्थातो** गाहा। अथवाऽर्थात् पृथक्त्वं यस्य, अर्थो वा पृथक्त्वतो यस्य तदर्थपृथक्त्वम्। अर्थेन वा पृथु अर्थपृथु, तद्भावोऽर्थपृथुत्वम्, तस्यार्थपृथुत्वस्येति पूर्ववत्। किं समस्तस्य श्रुतज्ञानस्य ? नेत्युच्यते, किं तर्हि ? वक्ष्यमाणानामेवावश्यकादीनामिति ॥१०७०॥

**आवस्सयस्स दसयालियस्स तध उत्तरज्झमायारे।**
**सूतकडे णिज्जुत्तिं वोच्छामि तधा दसाणं च ॥८४॥१०७१॥**

**कप्पस्स य णिज्जुत्तिं ववहारस्सेव परमणिउणस्स।**
**सूरियपण्णत्तीए वोच्छं इसिभासिताणं च ॥८५॥१०७२॥**

**एतेसिं णिज्जुत्तिं [७०-प्र०] वोच्छामि अहं जिणोवदेसेणं।**
**आहरणहेतुकारणपतणिवहमिणं समासेणं ॥८६॥१०७३॥**

**हेतू अणुगमवइरेगलक्खणो सज्झवत्थुपज्जाओ।**
**आहरणं दिट्ठंतो कारणमुपपत्तिमेत्तं तु ॥१०७४॥**

**आवस्सयस्स** गाहा। **कप्पस्स** गाहा। **एतेसिं** गाहा। **हेतू** गाहा। हेतुरन्वय-व्यतिरेकलक्षणः, साध्यस्य वस्तुनः पर्यायः, उदाहरणं साधर्म्याद् वैधर्म्याद्वा साध्यसाधनं साध्यहेत्वन्वय-व्यतिरेकदर्शनमाहरणं दृष्टान्त इत्यर्थः, साध्यसाधर्म्याद्वैधर्म्याद्वा तद्धर्मसाधनं चेति। तत्र कर्त्ताऽऽत्मा,भोक्तृत्वात्, इह यो भोक्ता स कर्त्ता दृष्टः, तद्यथा—देवदत्तः, यश्चाऽकर्त्ता नासौ भोक्ता, यथाऽऽकाशम्। तत्र भोक्तृत्वमात्मपर्यायः कर्तृत्वाकर्तृत्वान्वय-व्यतिरेकलक्षणं देवदत्ताकाशसाधर्म्यवैधर्म्याभ्यां साध्यसाधनं हेतुः, देवदत्तः कर्तृभोक्तृत्वसाध्यहेत्वन्वयप्रदर्शनं साध्यसाधर्म्यात्तद्धर्मसाधनमुदाहरणम्, आकाशं कर्तृत्वभोक्तृत्वसाध्यहेतुव्यतिरेकदर्शनं साध्यवैधर्म्यात्तद्धर्मसाधनं वैधर्म्योदाहरणम्। कारणमन्यत्र हेतुरेव। इह तु हेतोः साक्षादभिधानात्कारणमुपपत्तिमात्रम्, यथा निरुपमसुखः सिद्धः, ज्ञानानाबाधप्रकर्षात्, निरुपमसुखप्रतिज्ञानाच्च , नेहोदाहरणमस्ति। दृष्टाश्च प्रकृष्टज्ञानानाबाधाः परमसुखिनो मुनयः। अत एव केवलज्ञानाऽशरीरानाबाधप्रकर्षादन्वयमन्तरेणापि निरुपमसुखोपपत्तिः सिद्धानां गम्यते ॥१०७१–७४॥

**एवं पदाण णिवहो हेतूदाहरणकारणत्थाणं।**
**अहवा पदणिवहो च्चिय कारणमाहरणहेतूणं १०७५॥**

---

१ सज्ज° त। २. °र्मभावनं–इति प्रतौ।

**एवं** गाहा । तत्राहरणार्थं पदमाहरणपदं हेत्वर्थं हेतुपदं कारणार्थं कारणपदं तेषामाहरणहेतुकारणार्थानां पदानां निवहः समूहः, अथवा आहरणहेतुकारणः आहरण-हेतुप्रयोजनः पदनिवहः तमाहरणहेतुकारणं पदनिवहमिमं समासेन समासतः संक्षेपतः वक्ष्यामीति च वर्त्तते ॥१०७५॥

**इय सव्वसंगहादीए जेणमावासयं अधिगतं च ।**
**सामाइयं च तस्स वि तो पढमं तस्स [1]वोच्छामि ॥१०७६॥**

**इय०** गाहा । यतः सर्वसङ्ग्रहादा[वा]वश्यकमधिकृतं च, तदादौ च सामा-यिकमतस्तस्यैव तावदुपोद्घातं वक्ष्यामः ॥१०७६॥

**सामाइयणिज्जुत्तिं वोच्छं उवदेसितं गुरुजणेणं ।**
**आयरियपरंपरएण आगतं आणुपुव्वीए ॥८७॥१०७७॥**

**जिणगणधरगुरुदेसितमायरियपरंपरागतं तत्तो ।**
**आतं च परंपरया पच्छा सयगुरुजण[2]द्दिट्ठं ॥१०७८॥**

**सामाइ०** गाहा । **जिण०** गाहा । इह कदाचिज्जिनगणधरा एव गुरुजन-ग्रहणेनाऽऽगृह्यन्ते, [3]वक्ष्यमाणतपोनियमज्ञानवृक्षारोहणादिना, तैरादौ देशना, तदन्वाचार्य-पारम्पर्येणायाता, अथवाऽऽदिप्रदेशिनमविवक्षित्वा गुरुजनग्रहणाद् वर्त्तमानाचार्योपा-ध्यायगुरुजनग्रहम् । तेन देशना किं स्वातन्त्र्येण ? नेत्युच्यते, किं तर्हि ? आचार्य-पारम्पर्येणाऽऽयाता । कुतः ? इति चेत्, वक्ष्यमाणतपो-नियम-ज्ञानवृक्षारोहादर्हद्गण-धरेभ्य इति ॥१०७७–७८॥

**उज्जेणीतो णीता जधेट्टयाओ पुरा परंपरया ।**
**पुरिसेहिं कोसंबिं तधागतेयं परंपरया ॥१०७९॥**

**दव्वस्स परंपरओ जुत्तो भाव[७०–द्वि]सुतसंकमो कत्तो ।**
**सद्दो वि णागतो[4]ऽयं स एव जिणगणधरुच्चरितो ॥१०८०॥**

**उज्जेणी०** गाहा । **दव्वस्स** गाहा । आह–द्रव्यस्येष्टकादेः पारम्पर्येणाऽऽगमो युक्तः, न भावश्रुतस्य, आत्मपर्यायत्वात्, पर्यायस्य च वस्त्वन्तराऽसंक्रान्तेः । स्यात्–विज्ञानश्रुतकारणं शब्दात्मकं द्रव्यश्रुतमागतं तदुपचारादागम(त)व्यपदेश इति । तदपि

१ बुच्छा° हे । २ °जणोवदि° हे । ३ गा० १०९१ । ४ °तो च्चिय त ।

न, यतः श्रुत्यनन्तरोपरमान्नेहाऽर्हद्गणधरशब्दागमनमस्ति, अन्तरपुरुषागमनमात्रे च पारम्पर्यमयुक्तम् ॥१०७९–८०॥

**आगतमिवागतं तं तत्तो जत्तो समुब्भवो जस्स ।**
**स परंपरतो य जतो तमागतमितो तदुवयारो ॥१०८१॥**

**आगत०** गाहा । आगतमिवाऽऽगतं **तत्रमौद्भव**(तस्मादस्योद्भव)स्तद्यथा कार्षापणेभ्यो धान्यमागतं यावद्रूपविज्ञानम्, एवमिदं सामायिकमाचार्यपारम्पर्यप्रत्ययत्वात् तस्मादागतमित्युच्यते । न चायमागतशब्दो गमिक्रियावचनः । किं तर्हि ? उत्पत्तिवचनो [2]बोधवचनो वेति ॥१०८१॥

**णिज्जुत्ता ते अत्था जं बद्धा तेण होति णिज्जुत्ती ।**
**तध वि य इच्छावेई विभासितुं[3] सुत्तपरिवाडी ॥८८॥१०८२ ॥**
**जं णिच्छयातिजुत्ता[4] सुत्ते अत्था इमीय[5] वक्खाता ।**
**तेणेयं णिज्जुत्ती णिज्जुत्तत्थाभिधाणातो ॥१०८३॥**

**णिज्जुत्ता** गाहा । **जं णिच्छ०** गाहा । निश्चयेनाधिक्येन साधु, आदितो वा युक्ता निर्युक्ताः सम्यगवस्थिताः अर्थाः श्रुताभिधेयविशेषा जीवादयः । ते हि सूत्र एव निर्युक्ताः । यत्पुनरनयोपनिबद्धास्तेनेयं निर्युक्तानां युक्तिर्निर्युक्तिः युक्तशब्दलोपात् निर्युक्तिः, शब्दव्याख्येत्यर्थः ॥१०८२–८३॥

**सुत्ते णिज्जुत्ताणं णिज्जुत्तीए पुणो किमत्थाणं ।**
**णिज्जुत्ते वि ण सव्वे कोयिमं[6]वक्खाणिते मुणति ॥१०८४॥**

**सुत्ते** गाहा । आह— यदि सूत्र एव निर्युक्ताः सम्यगवस्थानात् सुबोधा एव तेऽर्थाः, किमिह तेषां निर्युक्त्या ? उच्यते–निर्युक्तानपि सतः सूत्रेऽर्थान्निर्युक्त्या पुनरव्याख्यातान्न **सर्वं पूर्वो**ऽवबुध्यते यतः ॥१०८४॥

**तो सुतपरिवाडि च्चिय इच्छावेति तमणिच्छमाणं पि ।**
**णिज्जुत्ते वि तदत्थे वोत्तुं तदणुग्गहं[7]त्थाए ॥१०८५॥**

**तो सुत०** गाहा । ततः श्रुतपरिपाट्येवेति सूत्रपद्धतिरेवाऽनिच्छन्तमाप्याचार्यं विभाषितुमप्रतिबुद्ध्यमाने श्रोतरि तदनुग्रहार्थमेषयति–इच्छतेच्छत मां विभाषितुमिति प्रयोजयतीव श्रुतपरिपाटी विभाषया च निर्युक्तिरित्यतस्तदभिधानम् ॥१०८५॥

---

१ तस्स त । २ °नोवयो वच°–इति प्रतौ । ३ °सियं त । ४ जुत्ती त । ५ इमीए को हे त । ६ कोइ अव° को हे । कोइ य व° त । ७ °हट्ठा° को हे त ।

**फलयलिहितं पि मंखो पढति पभासति य तध[1] करादीहिं।**
**दावेति य [2]पडिवत्थुं सुहबोधत्थं तध इधं पि ॥१०८६॥**

**फलय०** गाहा। यथेह मंखः फलकोपन्यस्तमपि चित्रं ग्रन्थतोऽधीयते [3]अर्थतश्च व्याचष्टेऽङ्गुल्यादिना च निरूपयति आगोपालप्रबोधनाय तथेह श्रोतृवैचित्र्यं पश्यन् सर्वानुग्रहप्रवणबुद्धिराचार्यो निर्युक्तानपि सतः सूत्रार्थान्निर्युक्त्या निरूपयति ॥१०८६॥

**अधवा सुतपरिवाडी सुतोवदेसोऽ[4]यमेव जदवस्सं।**
**सोतव्वं णिस्संकितसुयविणयत्थं [७१-प्र०] सुबोधं पि ॥१०८७॥**

**अधवा** गाहा। अथवा तथाप्येषयति श्रुतपरिपाटी विभाषितुमिति श्रुतपरिपाटीति श्रुतविधिः, श्रुतोपदेशोऽयमेव यदवश्यमनुश्रोतव्यं सर्वेण। कथम्? अशङ्कितम्, भावश्रुतविनयोपचारार्थं च सुबोधमपीत्ति ॥१०८७॥

**इच्छध विभासितुं मे सुतपरिवाडिं ण सुट्ठु बुज्झामि।**
**णातिमती वा सीसो गुरुमिच्छावेति वोत्तुं[5] जे ॥१०८८॥**

**इच्छध** गाहा। तथाऽप्येषयति विभाषितुं सूत्रपरिपाटीमिति पाठान्तरमिदानीमाश्रीयते। इह सूत्रपद्धतिमुच्चरितामप्रतिबुद्ध्यमानो नातिमतिशिष्यो गुरुमनुप्रयोजयति—"इच्छतेच्छत विभाषयितुं सूत्रपरिपाटीं नावबुद्ध्येऽहम्" इति। अथवाऽप्रतिबुद्ध्यमाने श्रोतर्यनन्तरत्वानि(न्नि)र्युक्तिरेवानुप्रयासवतीच्छतेच्छत विभाषितुं सूत्रपरिपाटीं नायमवबुद्ध्यत इति ॥१०८८॥

**कत्तो पसूतमागतमायरियपरंपराय[6] सुतणाणं।**
**सामाइयादियमिदं सव्वं चिय सुत्तमत्थो वा ॥१०८९॥**

**कत्तो** गाहा। यदपदिष्टमाचार्यपारम्पर्यागतां सामायिकनिर्युक्तिं वक्ष्ये, तत्रेदं चोद्यते—कुतः प्रसूता सती पारम्पर्येणायाता? तथा समस्तं सूत्रमर्थो वेति ॥१०८९॥

**एतं णणु भणितं चिय अत्थपुधत्तस्स तेहि कधितस्स।**
**इध तेसिं चिय सीलातिकधणगहणप्फलविसेसो ॥१०९०॥**

**एतं** गाहा। अन्यः पुनराह—नन्वेतदुक्तमेवार्थपृथक्त्वस्य तैः कथितस्येति तीर्थकृद्गणधरेभ्यः प्रसूतिरस्येति। उच्यते—इह त्वेषामेव तीर्थकृद्गणधराणां शीलादिविशेषम्।

---

१ तहा को हे त। २ पडव° को हे त। ३ आयंतश्च इति प्रतौ। ४ °सो अमे° जे। ५ वोतु° ज्जे जे। ६ °राए को त। °राइ हे। ७ °पुहु° को। ८ इहत्येषा°-प्र०।

अर्हतस्तावत्तपोनियमज्ञानादिशीलता, तद्वृक्षारोहणाभिधानक्रिया, तत्फलविशेषश्च भव्यजनविबोधनार्थता; गणधराणां बुद्धिपटप्रकर्षाशेषग्रहणग्रन्थनक्रिया, तत्फलविशेषश्च प्रवचनार्थता, सुखग्रहणाद्यनुग्रहविशेषात् ॥१०९०॥

**तवणियमणाणरुक्खं आरूढो केवली अमितणाणो ।**
**तो मुयति णाणवुट्ठिं भवियजणविबोधणट्ठाए ॥८९॥१०९१॥**

**तं बुद्धिमयेण पडेण गणधरा गेण्हितुं णिरवसेसं ।**
**तित्थकरभासिताइं गंथन्ति ततो पवयणट्ठा ॥९०॥१०९२॥**

**रुक्खादिरूवयणिरूवणत्थमिह दव्वरुक्खदिट्ठंतो ।**
**जध कोइ विउलवणसण्डमज्झयारट्ठियं रम्मं ॥१०९३॥**

**तुंगं विउलक्खंधं सातिसयो कप्परुक्खमारूढो ।**
**पज्जत्तगहितबहुविधसुसुरभिकुसुमोऽणुकंपाए ॥१०९४॥**

**कुसुमत्थिभूमिचिट्ठितपुरिसपसारितपडेसु पक्खिवति ।**
**गंथंति ते वि [७१-द्वि०] घेत्तुं सेसजणाणुग्गहत्थाए ॥१०९५॥**

**लोगवणसंडमज्झे चोत्तीसातिसयसंपतोवेतो ।**
**तवणियमणाणमइयं स कप्परुक्खं समारूढो ॥१०९६॥**

**मा होज्ज णाणगहणम्मि संसयो तेण केवलिग्गहणं ।**
**सो वि चतुद्धं तत्तो सव्वण्णू अमितणाणि त्ति ॥१०९७॥**

**पज्जत्तणाणकुसुमो ताइं छतुमत्थभूमिसंत्थेसु ।**
**णाणकुसुमत्थिगणधरसितबुद्धिपडेसु पक्खिवति ॥१०९८॥**

**तव०** गाहा । **तं बुद्धि०** गाहा । **रुक्खादि०** गाहा । **तुंगं** गाहा । **कुसुम०** गाहा । **लोग०** गाहा । **मा होज्ज** गाहा । **पज्जत्त०** गाहा । वृक्षादिरूपकं प्रायेण कण्ठ्यमिति किञ्चिद्वक्ष्यामः । तपो द्वादशाङ्गमनशनादि, इन्द्रियानिन्द्रियसंयमनात्मको नियमः, श्रोत्रादीनां संयमनमिन्द्रियनियमः । ज्ञानमिह केवलम् । मा भूच्च केवलाकेवलयोः सन्देह इति केवलग्रहणम् । तस्यापि चतुर्विधानां सन्देहापोहार्थममितज्ञानिवचनं सर्वज्ञावबोधार्थम् । तं तपोनियमज्ञानमयमचिन्त्यात्मा वृक्षमारुह्यातत्वा वा

---

१ °णट्ठ° को । २ °रत्थिरं रम्मं जे । ३ °विहसुर° हे । ४ °हट्ठाए को हे त । ५ °वल° त । ६ चउद्धा ततोऽयं स° हे त को । ७ भूमिसत्थेसु को । भूमिसंघेसु त । भूमिसंथेसु हे । ८ °धानास°–इति प्रतौ । ९ °ज्ञापयोधा°–इति प्रतौ ।

प्रज्ञानकुसुमानि[1] अर्हन् परानुग्रहप्रवणतया तानि छद्मस्थभूमिस्थतदर्थिगणधरातिविपुल-मतिपटेषु प्रक्षिपति ॥१०९१–९८॥

**कीस कधेति कतत्थो किं वा भवियाण चेव बोधत्थं ।**
**सव्वोपायविधिण्णो[3] किं वाऽभव्वे ण बोधेति ॥१०९९॥**

**कीस** गाहा । आह–किमिति कृतार्थः कथयति ? किं च भव्यानामेव प्रबोधनार्थम् ? सर्वोपायविधिज्ञः स किमभव्यानपि [न] बोधयति ? ॥१०९९॥

**णेगंतेण कतत्थो जेणोदिण्णं जिणिन्दणामं से ।**
**[4]तदवंज्झफलं तस्स य खवणोवायोऽयमेव जतो ॥११००॥**

**णेगंतेणं** गाहा । उच्यते—न सर्वथा कृतार्थोऽसौ । कुतः ? तीर्थकृन्नामकर्मोदयात् । तथा(च्चाऽ)वन्ध्यफलमनुभवेनैवोपक्षीयते । तदुपायश्च धर्मदेशका(ना ?)-दिक्रियारूपो यतोऽतः कथयति ॥११००॥

**जं च[5] कतत्थस्स[6] वि से अणुवगतपरोवकारिसाभव्वं ।**
**परमहितदेसयत्तं[7] भासयसाभव्वमिव[8] रविणो ॥११०१॥**

**जं च** गाहा । यच्च कृतार्थत्वेऽपि सत्यनुपकृतपरोपकारिस्वाभाव्यमस्य धर्मदेशनादिक्रिया, भास्करप्रकाशकस्वाभाव्यवत् ॥११०१॥

**किं व कमलेसु रागो रविणो बोधेति जेण सो ताइं ।**
**कुमुदेसु व से दोसो जण्ण विबुज्झंति से ताइं ॥११०२॥**

**जं बोधमउलणाइं सूरकरामरिसतो समाणातो[9] ।**
**[७२–प्र०]कमलकुमुदाण तो तं साभव्वं तस्स तेसिं च ॥११०३॥**

**किं व** गाहा । **जं बोध०** गाहा । यच्चापदिश्यते—किमिह भव्यानेव बोधयति नाभव्यानपीति ? तत्राप्यस्य न रागद्वेषवृत्तिः, वीतमोहत्वात् । किं तर्हि ? स्वाभाव्यमेवेदं भास्करस्येव कमलकुमुदप्रबोधाप्रबोधनक्रिया । यथा भास्करस्य रागद्वेषावन्तरेणाऽप्रविशेषेण प्रकाशनाप्रकाशनक्रियाप्रवृत्तौ तत्किरणानामहनि सामान्ये कमलानामेव प्रबोधो भवति न कुमुदानामित्यतस्तत्स्वाभाव्यं तस्य तेषामिति गम्यते, तद्वदर्हतोऽपि वीतमो-

१ °मोऽर्हत्य°-इति प्रतौ । २ °लमितमिति प°-इति प्रतौ । ३ °ण्णू को हे त । ४ तदवंझफलं को । °वंझप्फ° हे । ५ व को हे त । ६ कतन्त° त । ७-देसिय° को । ८ °भद्द° त । ९ माणाइं त ।

हत्वादविशेष(षे)ण धर्मदेशनादिक्रियाप्रवृत्तौ यद्भव्यानामेव प्रबोधो भवति नाऽभव्यानामित्येतत्तत्स्वाभाव्यम्, अतो भव्यजनविबोधनार्थमुच्यते ॥११०२–३॥

जध वोलूगादीणं पगासधम्मो[1] वि सो[2] सदोसेणं ।
उदितो वि तमोरूवो एवमभव्वाण जिणसूरो ॥११०४॥

जध गाहा । यथैवेह नक्तंचराणामुल्लु(लू)कादीनां उदितोऽपि सन् प्रकाशधर्म्मा भास्करः स्वदोषात्तमोरूप एव तद्वदभव्यानामर्हन् सूर्य इति ॥ ११०४॥

सज्झं तिगिच्छमाणो रोगं रागी ण भण्णते वेज्जो ।
मुणमाणो य असज्झं णिसेधयंतो जधा[3]ऽदोसो[4] ॥११०५॥

तध[5] भव्वकम्मरोगं णासंतो रागवं ण जिणवेज्जो ।
ण य दोसि[6] अभव्वासज्झकम्मरोगं णिसेधंतो ॥११०६॥

सज्झं गाहा । तध गाहा । यथैवेह वैद्यः साध्यं चिकित्स्यमानो न रागवान्, असाध्यरोगं च प्रत्याचक्षाणो न द्वेषवान्, एवमेवार्हन्नपि भव्यसाध्यकर्मरोगापनयने तु प्रवर्त्तमानो न रागवान्, अभव्यासाध्यकर्मरोगनिषेधे च न द्वेषवान् ॥११०५–६॥

मोत्तुमयोग्गं जोग्गे दलिए रूवं करेति रूवारो ।
ण य राग[7]दोसिल्लो तधेव जोग्गे विबोधेन्तो ॥११०७॥

मोत्तु० गाहा । यथा वा रूपकारो योग्य एव दार्वादौ रूपमभिनिर्वर्त्तयति, नायोग्ये, न च रागद्वेषवा[न्] नाज्ञो नाऽशक्तो वेति व्यपदिश्यते, तद्वदेव नार्हन् भव्यानेव बोधयन्नाभव्य(व्यान्) योग्यायोग्यत्वान्न रागद्वेषवानज्ञोऽशक्तो वेति । तस्मात् साधूक्तं भव्यजनविबोधनार्थमिति ॥११०७॥

ति(तं)[8]ण्णाणकुसुमवुट्ठिं [9]घेत्तूं बीयादिबुद्धयो सव्वं ।
गंथंति पवयणट्ठा माला इध चित्तकुसुमाणं ॥११०८॥

ति(त)ण्णाण० ) गाहा । तां ज्ञानकुसुमवृ(वृ)ष्टिमशेषामादायातिविपुलमतयो गणभृतः प्रवचनार्थं ग्रथ्नन्ति, विचित्रस्रग्विभागवत् ॥११०८॥

---

१ °धम्मा हे । २ से त । ३ जह अदो° हे त को । ४ सव्वं जे । ५ दोसी हे । ६ रागी दो° त । ७ बोहंतो हो । ८ तं नाण° को हे त । ९ घित्तुं त हे । घेत्तु को ।

**पगतं वयणं पवयणमिह सुत्ताणं कधं तयं होज्जे[1] ।**
**पवयणमधवा संघो गधेंति तदणुग्गहट्ठाए[2] ॥११०९॥**

**पगतं** गाहा। प्रवचनार्थमिति प्रगतं प्रशस्तमादौ वचनं प्रवचनं द्वादशाङ्गम्, तदर्थं ग्रथ्नन्ति—कथं तद् भवेदिति। अथवा प्रवक्तीति प्रवचनं सङ्घस्तदर्थं ग्रथ्नन्ति तदनुग्रहनिमित्तमित्यर्थः ॥११०९॥

**घेत्तुं व[3] सुहं सुहगु[4]णणधारणा दातुं पुच्छितुं चेव ।**
**[5]एतेहिं कारणेहिं जीतं ति कतं गणधरेहिं ॥९१॥१११०॥**
**मुक्ककुसुमाण गहणा[७२-द्वि०]दियाइं जध दुक्करं करेतुं जे[6] ।**
**गुत्थाणं च सुहतरं तधेव जिणवयणकुसुमाणं ॥११११॥**

**घेत्तुं०** गाहा। **मुक्क०** गाहा। यथेह मुक्तकुसुमानामयत्नेनाशेषतया वाऽऽदानादयो न शक्याः, सूत्रादिग्रथितानां तु यत्नेनाशेषतया च शक्याः, तथार्हद्वचनकुसुमानां अदृष्टानां दृष्टानां चायोजनीयाः ॥१११०-११११॥

**पतवक्कपकरणज्झायपाहुदादिणियतक्कमपमाणं ।**
**तदणुसरतो[10] सुहं चिय घेप्पति गहितं इदं गेज्झं ॥१११२॥**
**एवं गुणणं धरणं दाणं पुच्छा य तदणुसारेणं ।**
**होति[12] सुहं जीतं [13]ति य कातव्वमितं जतोऽवस्सं ॥१११३॥**
**सव्वेहि गणधरेहि जीतं ति सुतं जतो ण वोच्छिण्णं ।**
**गणधरमज्जाता वा जीतं सव्वाणुचिण्णं वा ॥१११४॥**

**पत०** गाहा। **एवं** गाहा। **सव्वे०** गाहा। इयं पदवाक्यप्रकरणाध्यायप्राभृतादि नियतक्रमं नियतपरिमाणं चार्हद्वचनं तदनुसा(स)रणादयत्नेनोपादातुं शक्यते इदमस्याधीतमिदमध्येतव्यं एवंपरिगुणनं प्रत्याम्नायः। धारणमच्युतिः, दानमर्थिभ्यो विसर्गः, परिप्रश्नः शंशयापन्नवचनमसंशयार्थम्. सर्वं चेदं पदवाक्यादिपद्धतिमनुवाच(बाध)तो वक्तुः श्रोतुश्च सुकरम्, अन्यथातिदुष्करमेभ्यः सुखग्रहणादिभ्योऽर्हद्वचनसन्दर्भणम्। 'जीयं ति कयं गणहरेहिं' ति अथवा जीतमेवैतदस्य यत्सर्वगणधरैः सन्दर्भणीयमिदं जीवितमिति गणभृतामयं धर्मस्तन्नामकर्मोदयाद्गणधरमर्यादेत्यर्थः। यद्वा सर्वैराचरितं तज्जीवितमिति

१ होज्जा को हे। २ °ट्ठाए को हे। ३ च जे। ४ °गण° त। ५ एतेण कारणेणं जे। ६ ज्जे जे। ७ गुच्छा° को हे त। ८ °बक्ख° जे। ९ °हुडा° को हे त। १० °रतो जे। ११ गेज्झं को हे त। १२ होन्ति जे। १३ पि य जे हे तु।

पञ्चमव्यवहारवत् । अथवाऽव्युच्छेदनयाभिप्रायात्सूत्रमेव जीवितमुच्यते जीयं ति प्राकृताभिधानात् ॥१११२--१११४॥

**जिणभणितं [1]चिय सुत्तं गणधरकरणम्मि को विसेसोऽत्थ ।**
**सो तदवेक्खं भासति ण तु वित्थरतो सुतं किं तु ॥१११५॥**
**अत्थं भासति अरहा सुत्तं गंथन्ति गणधरा णिउणं ।**
**सासणस्स हितट्ठाए ततो सुत्तं पवत्तैती ॥९२॥१११६॥**

**जिण०** गाहा । **अत्थं** गाहा । आह—ननु जिनोक्तिरेव सूत्रम् । गणधरसूत्रीकरणे कः प्रतिविशेषः ? उच्यते—स गणधरापेक्षयाऽल्पं भाषते, न समस्तं द्वादशाङ्गग्रन्थराशिमितरजनसामान्यं किं त्वर्थं भाषतेऽर्हन् । गणधरास्तु प्रवचनहितायोपनिबध्नन्ति ॥१११५–१६॥

**णणु अत्थोऽणभिलप्पो स कधं भासति ण सद्दरूवो सो ।**
**सद्दम्मि तदुवयारो अत्थप्पच्चायणफलम्मि ॥१११७॥**

**णणु** गाहा । नन्वर्थो जीवादिरनभिलाप्यः, न शब्दात्मकस्तत्कथमसौ भाषते ? उच्यते—शब्दार्थप्रत्यायनफलत्वादर्थोपचारं कृत्वोच्यतेऽर्थं भाषते, यथाचारवचनत्वादाचार इत्यादि । अनेकवृत्तिश्चार्थशब्दस्तद्यथा

"व्यवहारे धने हेतौ फले शास्त्रप्रयोजने ।
आश्चर्ये साधने काले मोक्षे चार्थः प्रयुज्यते ॥"

इह शास्त्रप्रयोजनवचनो अर्थशब्दः ॥१११७॥

**तो सुत्तमेव भासति [4]अत्थप्पच्चायगं ण णामऽत्थं ।**
[७३–प्र०] **गणधारिणो वि तं चिय [6]करेन्ति को पतिविसेसोऽत्थ ॥१११८॥**

**तो सुत्त०** गाहा । आह—यदि शब्द एवार्थप्रत्यायकोऽर्थस्ततोऽर्हन् सूत्रमेव भाषतेऽर्थप्रत्यायकम्, न नामार्थम् गणभृतोऽपि हि सूत्रमेवोपनिबध्नन्ति । कोऽनयोः प्रतिविशेषः ॥१११८॥

**सो पुरिसाँवेक्खाए थोवं भणति ण तु बारसंगाइं ।**
**अत्थो तदवेक्खाए सुत्तं चिय गणधराणं तं ॥१११९॥**

**सो पुरि०** गाहा । उच्यते—शब्दमात्रसामान्येऽप्यर्हन् पुरुषापेक्षया ननूक्तमतिस्तोकं भाषते, न तु द्वादशाङ्गम् । किन्त्वर्हद् द्वादशाङ्गसंक्षेपार्थमुत्पन्नध्रुवविगतपदत्र–

१ °णिइ च्चिय को हे । २ °क्खो को । °क्खे जे । ३ तेइ हे । ४ अस्सप्प° को । ५ °यणं त । ६ करिंति को । ७ °सावि° हे । ८ तदवि° हे । ९ °त्रभूतवि° –इति प्रतौ ।

यमात्रम् । यावति चोक्ते शेषमनुक्तमपि बीजादिबुद्धयोऽनुधावन्ति । तच्च द्वादशाङ्गापेक्षयाऽर्थोऽभिधीयते । गणभृतां तु तदेव सूत्रमर्थो वेति समानम् ॥१११९॥

**अंगाइसुत्तरयणाणिरवेक्खो जेण तेण सो अत्थो ।**
**अधवा ण सेसपवयणहितो[1] त्ति जध बारसंगमिणं ॥११२०॥**

**पवयणहितं पुण तयं जं सुहगहणाति गणधरेहिंतो ।**
**बारसविधं पवत्तति णिउणं सुहुमं महत्थं च ॥११२१॥**

**अंगाइ०** गाहा । **पव०** गाहा । अङ्गादिविभागनियमाभावादङ्गादिसमुदायवचनत्वाच्चासावर्थः । अथवा यतो न शेषप्रवचनहितो यथेदं द्वादशाङ्गम् । न हि गणधरवदुत्पन्नादिपदत्रयमात्रोपनिबन्धनादशेषद्वादशाङ्गावयवार्थानुस्मरणं सर्वेण शक्यं यथाङ्गादिविभागतः, तस्मात् तदेव प्रवचनहितं यत् सुखग्रहणादिगुणं गणधरेभ्योऽनुप्रवर्त्तते द्वादशाङ्गाचारादि, तदेव हि सूत्रमुच्यते, समस्तावयवार्थोपनिबन्धनात्तदनुसरणाच्च, तदभिधेयश्चार्थ इति । निपुणमतिसूक्ष्मं बह्वर्थं च ॥११२०–२१॥

**णियतगुणं वा णिउणं णिद्दोसं गणधराऽधवा णिउणा ।**
**तं पुण किमातिपज्जंतमाणमध[2] को व से सारो ॥११२२॥**

**णियत०** गाहा । अथवा नियतगुणं निगुणं सन्निहितसमस्तसूत्रगुणमित्यर्थः । पाठान्तरतो वा गणधरा णि(नि)पुणा निगुणा वा सुमतयोऽतिशयसम्पन्नाश्चेत्यर्थः । आह-तत्पुनः श्रुतज्ञानं किमादि किं पर्यन्ति कियत् परिमाणं को वास्य सार इति ? ॥११२२॥

**सामाइयमातीयं सुतणाणं जाव बिंदुसारातो ।**
**तस्स वि सारो चरणं सारो चरणस्स[3] णेव्वाणं[4] ॥९३॥११२३॥**

**सामा०** गाहा । उच्यते–श्रुतसामायिकादि तदादिप्रदानात् यावद् बिन्दुसारादिति वचनाद् बिन्दुसारपर्यन्तम् । यावच्छब्दादेव च ह्यनेकद्वादशपरिमाणम् । तस्यापि सारश्चरणमिति । सारशब्दः प्रधानपर्यायश्च । श्रुतज्ञानं सारस्ततश्चरणं श्रुतज्ञानात् प्रधानतरं तत्फलं चेत्यर्थः । सारश्चरणस्य निर्वाणमित्यत्र सारशब्दः फलवचनः, चरणफलं निर्वाणमित्यर्थः । तस्यापीत्यपिशब्दात्सम्यग्दर्शनस्यापि सारश्चरणम्, अथवा तस्य श्रुतज्ञानस्य अपि सारश्चरणमपि, [अपिशब्दात्] निर्वाणम्, अन्यथा हि ज्ञानस्य निर्वाणसाधनभावो न स्यात्, चरणस्यैव ज्ञानशून्यस्य स्यात् । ततश्च ज्ञानक्रियाभ्यां निर्वाणमिति विरुद्ध्यत ॥११२३॥

---

१ °हियत्ति को । °हियउत्ति हे । २ °तमाणमिह त । ३ णि° हे । ४ °णमति°–इति प्रतौ ।

**सोतुं सुतण्णवं वा दुग्गेज्झं सारमेत्तमेतस्स ।**
**घेच्छं तयं ति पुच्छति सीसो चरणं गुरु भणति ॥११२४॥**

**सोतुं** गाहा । अथवा सामायिकादि बिन्दुसारपर्यन्तं श्रुतार्णवमपि दुस्तर-मुपश्रुत्य शिष्यो यदि न समस्तं शक्नोमि ग्रहीतुमतः सारमात्रमस्य ग्रहीष्यामीति सञ्चिन्त्याह—द्वादशाङ्गस्य कः सार इति । गुरुराह—तस्यापि सारश्चरणं तस्यापि निर्वाणमिति सम्बन्धमात्रमुक्तम् ॥११२४॥

**अण्णाणतो हेत त्ति य किरिया णाणकिरियाहि णेव्वाणं ।**
**भणितं तो किध चरणं सारो णाणस्स तमसारो ॥११२५॥**

**अण्णाण०** गाहा । आहा—अज्ञानतः क्रिया हतेति ज्ञानक्रियाभ्यां निर्वाणमुक्तम्, अतः कथं चरणमेव सारः श्रुतस्य, तदसारः इति । उच्यते—ननूक्तमत्र सारशब्दः प्रधानफलपर्यायवचनः श्रुताच्चरणं प्रधानतरं तत्फलं चेति । आह—सत्यमुक्तम्, तदेव तु न मृष्यति निर्वाणकारणसामान्ये सति ॥११२५॥

**चरणोवल[७३–द्वि०]द्धिहेतुं[2] जं णाणं चरणतो य णेव्वाणं ।**
**सारो त्ति तेण चरणं पधाणगुणभावतो भणितं ॥११२६॥**

**णाणं पयासयं[3] चिय गुत्तिविसुद्धिप्फलं च जं चरणं ।**
**मोक्खो य दुगाधीणो चरणं णाणस्स तो सारो[4] ॥११२७॥**

**चरणो०** गाहा । **णाणं** गाहा । उच्यते—चरणोपलब्धिहेतुर्ज्ञानं यतश्चर-णाच्च निर्वाणमत[स्त]त्कारणसामान्येऽपि ज्ञानचरणयोर्गुणप्रधानभावाङ्गीकरणाच्चरण-सारव्यपदेशः । कथं ? प्रकाशमात्रफलत्वात् ज्ञानस्य, चारित्रस्य च संयमतपोमयत्वात्, तयोश्च संवरनिर्जराफलत्वात्, तद्द्वयाधीनत्वाच्च मोक्षस्य चरणान्निर्वाणम्, अतस्त-त्सार इति ॥११२६–२७॥

**जं सव्वणाणलाभाणन्तरमधवा ण मुच्चते सव्वो ।**
**मुच्चति य सव्वसंवरलाभे तो सो पधाणतरो ॥११२८॥**

**जं सव्व०** गाहा । अथवा यदुपक्षीणचतुष्कर्माऽपि सर्वज्ञानलाभानन्तरमेव सर्वो[5] न मुच्यते, मुच्यते च शैलेशीमभ्येत्य सर्वसंवरप्राप्त्यनन्तरमेव । अतः केवल-ज्ञानादपि स प्रधानतरो गम्यते ॥११२८॥

१ हित त । २ हेऊ हे । ३ °यं वि °हे । ४ सारं त । ५ °र्वो उच्यते—इति प्रतौ ।

**लाभे त्रि जस्स मोक्खो ण होति जस्स य स होति स पधाणो ।**
**एवं चिय सुद्धणया [1]णेव्वाणं संजमं बेन्ति ॥११२९॥**

**लाभे** गाहा । लाभे च यस्य मोक्षो न भवति यल्लाभानन्तरं चावश्यमेव भवति स प्रधानतरः, यतोऽत एवाप्रधानस्याऽकारणतामेव मन्यमाना नियतमृजुसूत्रादयः शुद्धनयाः संयमस्यैव निर्वाणकारणतां [2]प्रचक्षते, न ज्ञानस्य ॥११२९॥

**आह पधाणं णाणं ण चरित्तं णाणमेव वा सुद्धं ।**
**कारणमिह ण[3]तु किरिया सा वि हु णाणप्फलं जम्हा ॥११३०॥**

**आह** गाहा । आह–ज्ञानमेव प्रधानं न चारित्रम् । अथवेह ज्ञानमेवैकं कारणं न क्रिया यतोऽसावपि ज्ञानफलमेव ॥११३०॥

**जध सा णाणस्स फलं तध सेसं पि तध बोधकाले वि ।**
**णेयपरिच्छेदमयं रागातिविणिग्गहो जो य ॥११३१॥**

**जध** गाहा । यथा चासौ ज्ञानफलं तथा शेषमपि यत्क्रियानन्तरमवाप्यते, बोधकालेऽपि च यत् ज्ञेयपरिच्छेदात्मकम्, यच्च रागद्वेषादिविनिग्रहमयम्, एषामविशेषेण ज्ञानं कारणम्, यथा मृद् घटस्य कारणं भवन्ती तदन्तरालवर्त्तिनां पिण्डशिवककुसूलादीनामपि कारणतामापद्यते तथेह ज्ञानमपि विमोक्षस्य तदन्तरालवर्त्तिनां च तत्त्वपरिच्छेदसमाधानादीनां कारणम् ॥११३१॥

**जं च मणोचिन्तितमन्तपूतविसभक्खणातिबहुभेतं ।**
**फलमिह तं पच्चक्खं किरियारहितस्स णाणस्स ॥११३२॥**

**जं च** गाहा । [4]यथाऽनुस्मरणमात्र(त्रान्)मन्त्रपूतविषोप[5]भोग-नभोगमनाधि(दि)कमनेकधा फलमुपलभ्यते साक्षात् । तच्च क्रियाशून्यस्य [ ज्ञानस्य ] यथा, तथाऽदृष्टमप्यनुमीयते ॥११३२॥

**जेणं चिय णाणातो किरिया तत्तो फलं च तो दो त्रि ।**
**कारणमिधरा किरियारहितं चिय तं पसाधेज्ज ॥११३३॥**

**जेणं** गाहा । यत्तावदुक्तं क्रियापि विज्ञानफलमेवेति । अत्रोच्यते–यत एव ज्ञानात् क्रिया, ततश्चेष्टफलप्राप्तिः, तत एवोभयमपि कारणमिष्यते । अन्यथा हि ज्ञानफलं

---

१ निव्वा° हे । २ प्रवक्ष्यते–प्र० । ३ ण हु त । ४ यथा दुःस्म°–इति प्रतौ । द्रष्टव्यात्र गा० ११३७ व्याख्या । ५ °पयोगे न°–इति प्रतौ ।

क्रियेति क्रियापरिकल्पनसमर्थन(ने) ज्ञानमेव हि क्रियाविकलमपि प्रमाधयेत्, न च प्रसाधयति. क्रियाभ्युपगमात् ॥११३३॥

**णाणं परंपर[७४-प्र०]मणंतरं[1] तु किरिया तयं पधाणतरं।**
**जुत्तं कारणमधवा समयं तो दो[2] वि जुत्ताइं ॥११३४॥**

**णाणं** गाहा। ज्ञानक्रियाप्रतिपत्तौ ज्ञानं परम्परयोपकुरुते[3]ऽनन्तरं तु क्रिया यतस्तस्मात् क्रियैव प्रधानतरं युक्तं कारणम्। अथ युगपदुपकुरुतस्तस्मादुभयमपि युक्तम्, न युक्तमप्राधान्यं क्रियायाः ॥११३४॥

**कारणमंतं मोत्तुं किरियमणंतं कधं मतं णाणं।**
**सहचारित्ते व कधं कारणमेगं[4] ण पुणरेगं ॥११३५॥**

**कारण०** गाहा। यः पुनरकारण्यमेवाभ्युपैति क्रियायास्तं प्रत्युच्यते -क्रियायाः साक्षात्कारित्वात् कारणमन्त्यम्, ज्ञानं तु परम्परोपकारित्वाद[5]नन्त्यमतः को हेतुर्यदन्त्यं[6] विहायैवा[7]ऽनन्त्यकारणमिष्यते? उत सहचारिताऽङ्गीक्रियतेऽनयोरतोऽपि हि ज्ञानमेव कारणं[8] न क्रियेति न हेतुरस्ति ॥११३५॥

**रागातिसमो संजमकिरिय च्चिय णाणकारणा होज्ज।**
**तीसे फले विवातो तं तत्तो णाणसहितातो ॥११३६॥**

**रागाति** गाहा। रागादिशमश्च संयमक्रियैव ज्ञानकारणा भवेदिति प्रतिपद्यामहे। तत्फले त्वयं विवादः—किं तत् ज्ञानस्य क्रियायास्तदुभयस्येति? तत्र ज्ञानस्यैव क्रियानुगमादित्युक्तं, वक्ष्यमाणं चाक्रियात्वात्। न च क्रियायास्तदज्ञत्वादुन्मत्तक्रियावत् पारिशेष्यात् ज्ञानसंहतक्रियानिमित्तं तत् ॥११३६॥

**परिजवणादी किरिया मंतेसु वि साधणं ण तम्मत्तं।**
**तं णाणतो य ण फलं तं णाणं जेणमकिरियं ॥११३७॥**

**परि०** गाहा। यच्चोक्तमनुस्मृतिज्ञानमात्रान्मन्त्रादीनां फलमुपलभ्यत इत्यत्र ब्रूमः—मन्त्रेष्वपि परिजपनादिक्रिया[याः] साधनाङ्गभावो, न मन्त्रमात्रज्ञानस्य स्यात्। प्रत्यक्षविरुद्धमिदं यतो दृष्टं हि क्वचिन्मन्त्रानुस्मृतिमात्रज्ञानादिष्टं फलमिति। तच्च न मन्त्रमात्रज्ञाननिर्वर्त्यमिति ब्रूमः, ज्ञानस्याऽक्रियात्वात्। इह यदक्रियं तन्न निर्वर्त्तकं दृष्टम्, यथाकाशम्; यच्चनिर्वर्त्तकं न तदक्रियम्, यथा कुलालः। न चेदं प्रत्यक्षविरुद्धम्। न हि मन्त्रज्ञानं साक्षात्तत्फलमुपहरदुपलक्ष्यते ॥११३७॥

---

१ °तग उ कि° **को हे**। °तराओ कि° **त** तरं च कि° **जे**। २ दोन्नि जु° **को हे**. दोवि तुल्लाइं **त**। ३ °तेन्नन्तरक्षक्रि°-इति प्रतौ। ४ °मेक्कं ण पुणक्कं **को हे**। °मेगंत पु° **त**। ५ परस्परो°-इति प्रतौ। ६ °दत्यन्तम°-इति प्रतौ। ७ °हायौनन्त्य°-इति प्रतौ। ८ °रणं **जे**।

**तो तं कत्तो भण्णति तं समयणिबद्धदेवतोवहितं ।**
**किरियाफलं चिय जतो ण मंतणाणोवयोगस्स ॥११३८॥**

**तो तं०** गाहा । आह—यदि न मन्त्रकृतं तदक्रियत्वात् । ततस्तत्कुत इति ? उच्यते—तत्समयनिबद्धेभ्यो देवताविशेषेभ्यः । तेषां च क्रियानिर्वर्त्यमेतन्न मन्त्रज्ञानसाध्यम् । प्रतिपद्यते चात्र लोको यत्—समयनिबन्धना देवताविशेषा मन्त्रैराहूयन्त इति । आह—यदि देवताह्वानसामर्थ्यवदन्यमधि(दपि ?) सामर्थ्यमेव स्यात्, को दोषः ? उच्यते—देवताह्वानमपि न मन्त्रक्रियायाः, तेषामक्रियत्वात् । किं तर्हि ? मन्त्रनिमित्तमात्रालोचनात् । तद्वदेव ज्ञानक्रियाभ्यामेवेति ॥११३८॥

**वत्थुपरिच्छेतफलं हवेज्ज किरियाफलं च तो णाणं ।**
**ण तु णिव्वत्तयमिट्ठं सुद्धं चिय तं जतोऽभिहितं[1] ॥११३९॥**

**वत्थु०** गाहा । पारिशेष्याद्वस्तुपरिच्छेदमात्रफलमेव हि ज्ञानम्, क्रियाफलं च, तदुपलब्धिहेतुत्वात्, न तु निर्वर्त्तकमभिप्रेतं वस्तुनः । कुतः ? यतोऽभिहितम् ॥११३९॥

**सुतणाणम्मि वि जीवो वट्टंतो सो ण पाउणति मोक्खं ।**
**जो तवसंजममइए जोए ण चएति वोढुं जे ॥९४॥११४०॥**

**सुत०** गाहा । श्रुतज्ञानेऽपीत्यपि शब्दान्मत्यादिष्व[पि] वर्त्तमानो न प्राप्नोति मोक्षमिति पक्षः । यः संयमतपोमयान् योगान् कर्तुमशक्त इति हेत्वर्थः ॥११४०॥

**सक्किरियाविरहातो[2] इच्छितसंपावयं णं[3] णाणं ति ।**
**मग्गण्णू वाऽचे[७४–द्वि०][4]ट्ठो वातविहीणोऽधवा पोतो[5] ॥११४१॥**

**सक्किरि०** गाहा । अस्यैवार्थस्यायं प्रयोगः—न ज्ञानमीप्सितार्थसंप्रापकमिति, सत्क्रियाविरहात् । इह यत् सत्क्रियाशून्यं न तदिष्टार्थसम्पादकं दृष्टं यथा मार्गज्ञश्चेष्टदेशसम्प्रापणक्रियाशून्यैश्च[6] देशासम्प्रापकः । अथवा सौत्र एव दृष्टान्तोऽयमीप्सितदिक्संप्रापकवातसत्क्रियाशून्यपोतवत् ॥११४१॥

**जध छेयलद्धणिज्जामओ वि वाणियगइच्छितं भूमिं ।**
**वातेण विणा पोओ ण चएति महण्णवं तरितुं ॥९५॥११४२॥**

**जध** गाहा । यथेह सुदक्षप्राप्तनिर्यामकोऽपि सुकर्णधाराधिष्ठानोपीप्सितदिक्सम्प्रापकवातसत्क्रियाशून्यः पोतो न वणिजोऽभिप्रेतभूसंप्रापणार्णवतरणक्रियामभ्येति ॥११४२॥

---

१. जतोऽहिकतं जे । जतो भणियं त । २ हाओ न इ° हे । ३ °यं ति णा° हे । ४ °वाऽचि° हे । ५ °विहूणो त । ६ शून्यश्च दे°—इति प्रतौ ।

**तध णाणलद्धणिज्जामओऽवि सिद्धिवसधिं ण पाउणति ।**
**णिउणो वि जीवपोतो तवसंजममारुयविहीणो ॥९६॥११४३॥**

**तध** गाहा । तथेह सुविमलश्रुतज्ञानप्राप्तनिर्यामकोपि सुनिपुणमतिविशेष-कर्णधाराधिष्ठानोऽपि संयमतपोनियममारुतसक्रियाशून्यो न जीवपोतो मनोरथवणिजोऽभिप्रेतनिर्वाणपत्तनभूसंप्रापणाय संसारार्णवतरणक्रियामभ्येति ॥११४३॥

**संसारसागराओ उब्बुड्डो मा पुणो णिबुड्डेज्जा ।**
**चरणगुणविप्पहूणो बुड्डइ सुबहुं पि जाणंतो ॥९७॥११४४॥**

**संसारसागराओ कुम्मो इव कम्मचम्मविवरेणं ।**
**उम्मज्जितुमिध जइणं णाणातिपयासमासज्ज ॥११४५॥**
**दुलभं वि याणमाणो सयणसिणेहादिणी तयं चत्तो ।**
**संजमकिरियारहितो तत्थेव पुणो णिबुड्डेज्जा ॥११४६॥**

**संसारसा॰** गाहा [२] । **दुलहं** गाहा । तद्यथा नाम कश्चित् [कूर्मः] कर्मचर्मस्थगितार्णवोदरतमोगतानेकजलचरविक्षोभादिव्यसनसंततः परिभ्रमन् कथञ्चिदेव चर्मरन्ध्रमासाद्य विनि[ः]सृत्य च शरच्चन्द्रकिरणालिङ्गनमनुभूय भूयः स्वजनस्नेहविषयानुषक्तचित्तस्तत्रैव निमज्ज्येत, पुनश्च तच्चर्मरन्ध्रमपश्यंस्तमोऽनुगतोऽत्यन्तं व्यसनमनुभवेत् तद्वदयमपि सांसारिकछलनादिकर्मसन्तानचर्मस्थगितभवजलधिचरानेकसत्त्वसंक्षोभादिव्यसनशतपरिगतो मिथ्यादर्शनादितमोऽनुगतः परिभ्रमन् कथञ्चिदेव मनुष्यभवसंवर्त्तनीयकर्मचर्मरन्ध्रमासाद्य विनि[ः]सृत्य च मनुष्यतयार्हच्चन्द्रवचनकिरणावबोधमवाप्य सुदुःप्राप्यमपि जानानः स्वजनस्नेहविषयानुषक्तचित्तः पुनर्निमज्जेत भूयश्च भवव्यसनमनुष्यभवचर्मरन्ध्रमवाप्नुयादित्यपायदर्शनादप्रमादवता भवितव्यम् ॥११४४–४६॥

**आहऽण्णाणी कुम्मो पुणो णिमज्जेज्ज णं पुण तण्णाणी ।**
**सक्किरियापरिहीणो बुड्डति णाणी जधऽण्णाणी ॥११४७॥**

**आह** गाहा । आह—अज्ञानी कूर्मो हिताहितविभागाज्ञतया निमज्जेत, न तु हिताहितप्राप्तिपरिहारज्ञो जैन इति । उच्यते—चरणगुणविहीनो बह्वपि जानानो निमज्जते चरणगुणविहीनतया हेतुभूतयेति । ज्ञोऽपि हि निमज्जते, सत्क्रियाविरहादज्ञकच्छपवदिति प्रयोगः ॥११४७॥

१ इय णा॰ जे । २ विहूणो । ३ उच्छुड्डो हे । ४ ॰प्पहीणो हे त । ५ ॰तुम्मिह त । ६ ॰दिणो तयं त । ७ तत्तो हे जे त । ८ ण तु मतं णाणी जे ।

**णेच्छतियेणयमतेण व अण्णाणी चेव सो [1]मुणंतो वि ।**
**णाणफलाभावातो कुम्मो [3]व्व णिबुड्डति भवोघे ॥११४८॥**

**णेच्छति॰** गाहा । अथवा नैश्चयिकनयाभिप्रायादज्ञ एव बालो जानानोऽपि ज्ञानफलाभावात् । इह यस्य हिताहितप्राप्तिपरिहारात्मकं न ज्ञानफलमस्ति सोऽज्ञो यथा हिताहितविभागान्धः कच्छपः । अतो जानानोऽपि भवोदधौ निमज्जत एव सत्क्रियाविकल इति प्रसाधितम् ॥११४८॥

**[७५-प्र०] सुबहुं [4]पि सुयमधीतं किं [5]काहिति चरणविप्पहूँणस्स ।**
**अंधस्स जध पलित्ता दीवसतसहस्सकोडी वि ॥९८॥११४९॥**
**संतं पि तमण्णाणं णाणफलाभावतो सुबहुयं पि**
**सक्किरियापरिहीणं अंधस्स पदीवकोडि व्व ॥११५०॥**

**सुबहुं पि** गाहा । **संतं पि** गाहा । इह सुबह्वपि श्रुतमधीतं(तम)ज्ञानमेवेति, ज्ञानफलाभावात् । हिताहितप्राप्तिपरिहारश्च ज्ञानफलमुक्तम् । कुतश्चास्य ज्ञानफलाभावः ? सत्क्रियाहीनत्वात् अन्धस्येव प्रदीपकोटीति ॥११४९-५०॥

**अंधोऽणवबोधो च्चिय बोधफलं पुण सुतं किमण्णाणं ।**
**बोधो वि तओ विफलो तस्स जमंधस्स व अँबोधो ॥११५१॥**

**अंधो** गाहा । आह—अन्धः प्रदीपावबोधशून्यत्वादज्ञ एव श्रुतं तच्चक्षुष्मतः प्रदीपवदवबोधात्मकं कथमज्ञानम्, तदभिज्ञश्चाज्ञ इति ? उच्यते—बोधोऽप्यसावबोध एवेति, बोधफलाभावादप्येवाबोध इति पूर्ववत् ॥११५१॥

**अप्पं पि[8] सुतमधीतं पगासयं होति चरणजुत्तस्स ।**
**एक्को वि जध पदीवो सचक्खुअस्सा पगासेति ॥९९॥११५२॥**
**किरियाफलसंभवतो अप्पं पि सुतं पयासयं होती ।**
**एक्को वि हु चक्खुमतो किरियाफलतो जँधा दीवो ॥११५३॥**

**अप्पं** गाहा । **किरिया॰** गाहा । अल्पमपि हि श्रुतं सत्क्रियावतः प्रकाशनायालं भवति, क्रियाफलसद्भावात् । इह यस्य क्रियाफलसद्भावस्तस्याल्पीयोऽपि हि प्रकाशकस्वभावं प्रकाशनायालं भवति, यथेह स्वेष्टक्रियाकारिचक्षुष्मदेकप्रदीपः ॥११५२॥११५४॥

---

१ °यणिय° त । २ सो मुणें° को । सो अणं° जे । ३ व को हे त । ४ °हु पि° को । ५ अत्र 'त'श्रुत्या 'काहिइ'स्थाने 'काहिति' इति पाठः । द्रष्टव्या गा० ११५८ । काही को हे त । ६ °प्पहीण° हे त । ७ °स्स वऽवबोहो को । °स्स व बबोहो हे त । ८ अप्पं चिय त । ९ °जह पईवो को हे ।

**ण हि णाणं विफलं चिय किलेसफलदं पि चरणरहितस्स ।**
**णिष्फलपरिवहणातो चंदणभारो खरस्सेव ॥११५४॥**

**ण हि** गाहा । न हि ज्ञानान(ज्ञानमि)ष्टफलविकलमेव केवलं सत्क्रियाशून्यस्य, किन्तु क्लेशफलदमपि, निष्फलोद्वहनात् खरस्य चन्दनभारोद्वहनवत् ॥११५४॥

**जधा खरो चंदणभारवाही, भारस्स भागी ण हु चन्दणस्स ।**
**एवं खु णाणी चरणेण हीणो, णाणस्स भागी ण हु सोग्गतीए ॥१००॥११५५॥**

**जधा** वृत्तम् । यथेह खरश्चन्दनभारमुद्वहंस्तच्छ्रमफलभागेव, न चन्दनविलेपनादिफलभाक्, तद्वदज्ञानी श्रुतज्ञानग्रन्थभारमुद्वहंस्तच्छ्रमफलभागेव सत्क्रियाविकलः, न सुगतिफलभाक् । आह–न(ननु ?) खरश्चन्दनभारस्योद्रो(द्वो)ढा चन्दनगन्धाघ्राणफलमनुभवति, कदाचिच्चन्दनविनियोगजं योग्यासनादपि लभते, न सर्वथो(था) चन्दनभारोद्वहनफलम् । उच्यते–तदप्यस्य चन्दनगन्धाघ्राणफलं तद(द्)गन्धोपादानक्रियानिमित्तमेव । न ह्यनाजिघ्रतश्चन्दनगन्धाघ्राणफलमश्नुते । योग्यासनमपि सुवोढाऽयं वैहिष्यते वेति वहनि(न)क्रिया निमित्तमेव लभते, नावहनतच्चा(श्चा)न्यदपि वहन्न लभत एव न चन्दनमेवेति । विशिष्टं तु विलेपनादिफलमङ्गीकृत्येदमुच्यते । तच्च न लभतेऽनर्हत्वात् । तदपि चान्यक्रियानिमित्तकमेव । न च ज्ञानिनो बोधगन्धफलं न प्रतिपाठ्यन्ते न च ज्ञानविनियोगजं हिताहितप्राप्तिपरिहारपरिस्पन्दतः । तदेव तु क्रियाविकलस्य न सम्भवतीति खरोदाहरणमुक्तम् ॥११५५॥

**हतं णाणं कियाहीणं, हता अण्णाणतो किया ।**
**पासंतो पंगुलो डँड्ढो, [७५-द्वि] धावमाणो य अंधयो ॥१०१॥११५६॥**

**हतं** सिलोगो ॥११५६॥

**हतमिह णाणं किरियाहीणं ति जतो हतं ति जं विफलं ।**
**लोअणविण्णाणं पिव पंगुस्स महाणगरडाहे ॥११५७॥**

**हत०** गाहा । हतमिति ज्ञानं, हतमिति फलमाह । क्रियाहीनमिति हतय-(मि?)ति सत्क्रियाहीनत्वात् महापुरदाहे पंगुलो लोचनविज्ञानवत् ॥११५७॥

**[६]काहिति णाणच्चायं किरियाए चेव मोक्खमिच्छंतो ।**
**मा सीसो तो भण्णति हता य अण्णाणतो किरिया ॥११५८॥**

**काहिति** गाहा । इदानीं क्रियाप्रधानभावमुपश्रुत्य शिष्यः क्रियामात्रादेव मोक्षमिच्छन् ज्ञानत्यागमेव मा कार्षीदित्युच्यते–हता वाऽज्ञानतः क्रिया । आह–ज्ञानस्य

१ ण तु **जे** । न उ **हे** । २ सुचोढायं–इति प्रतौ । ३ वक्ष्यते–इति प्रतौ । ४दड्ढो **को हे त** । ५ ॅदाहे **को हे त** । ६ काहिइ **को हे** । काही **त** ।

क्रियाशून्यस्यापि सम्भवा[त्] ज्ञानमात्रग्राहनिषेधो युक्तः, ज्ञानशून्यक्रियाऽभावात् सत्क्रियामात्रग्राहनिषेधोऽनर्थकः । इह च विशिष्टासंयमतपोमयी क्रियाऽधिक्रियते । न चासावज्ञानतः सम्भवति । यतोऽभिहितं- ज्ञानी संयतोऽसंयतो वा स्यात्, संयतस्तु नियमत एव ज्ञानीति । शुद्धनयाभिप्रायोऽपि चायमेव यत्संयम एव निर्वाणसाधनमिति, यतो न ज्ञानशून्यः संयमो नामेति । उत सामान्यक्रियाऽधिक्रियते तथापि तन्निषेधोऽनर्थको यतो न सामान्यक्रिया केनचिदपवर्गप्रसाधनतयाऽभ्युपगम्यते, मिथ्या क्रियापि वा[ऽ]-क्रियैव मिथ्याज्ञानाज्ञानवत् । उच्यते—अत एवापदिश्यते—हता वाऽज्ञानतः क्रिया । हतेत्य-क्रियैवासावफलत्वादज्ञानत इति, अज्ञानपरिग्रहान्निह्नवादिक्रियावत् । सम्यग्दृष्टेरपि च ज्ञानोपयोगशून्यस्य क्रियैव द्रव्यमात्रत्वात् ॥११५८॥

**अतिसंकडपुरडाहम्मि[1] अंधपरिधावणातिकिरिय व्व ।**
**तेणण्णोण्णावेक्खा[2] साधणमिह णाणकिरियाओ ॥११५९॥**

**अति०** गाहा । हतेह मिथ्यादृष्टिनिह्नवादिक्रिया । कुतः ? अज्ञानाधिष्ठानात्पुरदाहे अन्धपुरधावनादिक्रियावत् । तेनेह ज्ञानं क्रिया चोभयमपि साधनमन्योन्यापेक्षमिष्टम् ॥११५९॥

**पत्तेयमभावातो णेव्वाणं समुदितासु वि ण जुत्तं ।**
**णाणकिरियासु वोत्तुं सिकतासमुदायतेल्लं व ॥११६०॥**

**पत्ते०** गाहा । आह—ज्ञानक्रिययोः प्रत्येकमसाधनत्वात् समुदितयोरपि साधना-भावः, सिकतातैलवत् । उच्चते—न, प्रत्यक्षविरुद्धत्वात् । इह ज्ञानक्रियाभ्यां घटादि-कार्यसंसिद्धयः साक्षादुपलभ्यन्ते तथाऽदृष्टकार्यसंसिद्धिरप्यनुमीयते ॥११६०॥

**वीसुण्ण सव्वध च्चिय सिकतातेल्लं व साहणाभावो ।**
**देसोवगारिता[3] जा सा समवायम्मि संपुण्णा ॥११६१॥**

**वीसु०** गाहा । न च पृथक् सर्वथैवानयोः साधनाभावः, सिकतातैलवत् । किं तर्हि ? या च यावती च देशोपकारिताभ्युपगम्यते सैव तु समुदाये भूयसी भवती यतोऽभिहितम् ॥११६१॥

**संजोअसिद्धीऍ[4] फलं वतंति, ण हु एगचक्केण रधो पयाति ।**
**अंधो य पंगू अ वणे समेच्चा, ते संपउत्ता णगरं पविट्ठा ॥१०२॥११६२॥**

**दुगसंजोगम्मि फलं सम्मं[5] किरिओवलद्धिभावातो ।**
**इट्ठपुरागमणं पिव संजोए अंधपंगूणं ॥११६३॥**

---

१ °दाह को हे त । २ तेणण्णण्णा° त । ३ देसोवतारि° जे । ४ °द्धीइ को हे । ५ सम्मकिं° हे ।

**वतिरेओ जं विफलं ण तत्थ सम्म[७६-प्र०]किरिओवलद्धीओ।**
**दीसंति गमणविकले जधेगचक्के भुवि रधम्मि ॥११६४॥**

**संजोअ०** गाहा। **दुग०** गाहा। **वतिरे०** गाहा। इह द्वयसंयोगसिद्धौ फलमाचक्षते सूरयः। [यत्र] सम्यक्क्रियोपलब्धिसद्भावः तत्रेष्टं फलमुपलभ्यते यथेष्ट-देशगतिरन्धपङ्ग्वोरित्यनुगमः। व्यतिरेको—यच्च विफलं न तत्र सम्यक्क्रियोपलब्धि-सद्भावो लक्ष्यते यथेष्टगमिक्रियाविकले विघटितैकचक्रे रथ इति ॥११६२-६४॥

**सहकारित्ते तेसिं किं केणोवकुरुते सभावेण।**
**णाणचरणाणमधवा सभावणिद्धारणमिताणिं ॥११६५॥**

**सह०** गाहा। आह—ज्ञानक्रिययोः सहकारित्वे सति किं केन स्वभावेनोपकुरुते—किमविशेषेणोपकुरुतः शिबिकोद्वाहकवत्, उत भिन्नस्वभावतया नयनचरणगमिक्रियो-पकारिवत्? अथवेह ज्ञानक्रियास्वभावनिर्द्धारणमिदानीमुच्यते ॥११६५॥

**णाणं पयासयं सोधओ तवो संजमो य गुत्तिकरो।**
**तिण्हं पि समाजोगे[3] मोक्खो जिणसासणे भणितो ॥१०३॥११६६॥**

**णाणं प०** गाहा। इह ज्ञानं तावत् प्रकाशकत्वेनोपकुरुते तत्स्वभावकत्वात्। क्रियापि संयमतपोमयत्वात् संवरणशुद्धिभ्यामुपकुरुते तत्स्वभावकत्वात् संयमतपसोः। ॥११६६॥

**असहायमसोधिकरं णाणमिह पयासमेत्तभावातो।**
**[4]सोधेति घरकयारं जध सुपयासो वि ण पदीवो ॥११६७॥**

**अस०** गाहा। न ज्ञानमेकमिह शुद्धयेऽलं प्रकाशमात्रस्वाभाव्यात्। इह यत्प्रकाशमात्रस्वभावमक्रियं न तद्विशुद्धयेऽलं दृष्टम्, यथा न गृहरजोमलविशुद्धये दीपः, यच्च विशुद्धयेऽलं न तत्प्रकाशमात्रस्वभावकं यथेष्टानिष्टप्राप्तिपरिहारपरिस्पन्दनवान्नय-नादिप्रकाशधर्मा देवदत्तः ॥११६७॥

**ण य सव्वविसोधिकरी किरिया वि जमप्पगासधम्मा सा।**
**जध ण तमोगेहमलं णरकिरिया सव्वधा हरती ॥११६८॥**
**दीवादिपयासं पुण सक्किरियाए विसोधितकयारं।**
**संवरितकयारागमदारं सुद्धं घरं होति ॥११६९॥**

---

१ °विफले जे। हे। २ केणेव कु° त। ३ समाजोग्गे जे। ४ सोहोति त। ५ वर° त। ६ जमपग° को हे। ७ न य कि° त।

**ण य** गाहा [२] । न च क्रियापि सर्वथा शुद्धयेऽलं अप्रकाशकधर्मत्वात् । इह यदप्रकाशस्वभावं न तत् सर्वशुद्धयेऽलं दृष्टम्, यथा न सर्वगृहमलविशुद्धयेऽन्ध-क्रिया, चक्षुष्मतो वा तमोगृहमलविशुद्धिक्रिया । यच्च सर्वथा विशुद्धयेऽलं न तद-प्रकाशस्वभावकं यथेह चक्षुष्मतो विदीपितगृहमलापनयनक्रिया दीपादिक्रिया ॥११६९॥ ॥११६९॥

**तध णाणदीवविमलं तवकिरियासुद्धकम्मयकयारं ।**
**संजमसंवरितसुहं जीवघरं होति सुविसुद्धं ॥११७०॥**

**तध** गाहा । इह ज्ञानसंयमतपस्वि(स्त्रि ?)समुदाये सति शुद्धिरधिक्रियते प्रका-शसंवरणक्रियापनयनसद्भावात् । इह यत्र प्रकाशसंवरणापनयनक्रियासद्भावस्तत्र शुद्धि-रवश्यंभाविनी, यथा देवदत्तनयनप्रदीपादिप्रकाशमलागमनरन्ध्रस्थगनाशेषरजोपनयन-क्रियायां गृहविशुद्धिः । यत्र च न शुद्धिर्न तत्र प्रकाशादिक्रियासद्भावो यथा चेष्टान्धगृह-समुदाये । अथवा पञ्चावयवप्रयोगोऽयम्—यथेह ज्ञानादित्रयसमुदाये सति शुद्धिः प्रकाशादिक्रियासद्भावात् गृहप्रकाशसंवरणमलापनयनक्रियावत् । यथा देवदत्तनयनप्र-दीपादिप्रकाशमलापगमनरन्ध्रस्थगनाशेषरजोपनयनक्रियाभिर्वेश्मनः शुद्धिरासाद्यते, तथे-हापि ज्ञानलोचनादिप्रकाशसंयमनकर्ममलापगमरन्ध्रस्थगनतपोविशेषाशेषकर्मरजोपनयन-क्रियाभिरात्मगृहशुद्धिरनुमन्तव्या । तस्मात् प्रकाशादिक्रियासद्भावात् ज्ञानादित्रयसमुदाये सति शुद्धिरिति साधूक्तम् ॥११७०॥ आह—ज्ञानक्रियाद्वयसंहतिरिष्टप्रसाधनमुक्त्वा कथमिहेदानीं ज्ञानादित्रयमङ्गीक्रियते ?

**संजमतवोमयी जं संवरणिज्जरफला मता किरिया ।**
**तो तिगसंजोगो वि हु ताओ[1] च्चिय णाणकि[७६ द्वि०]रियाओ ॥११७१॥**

**संजम०** गाहा । उच्यते—यत् संयमतपोमयी संवरनिर्जराफला क्रियैव अतस्त्रय-संयोगोऽपि ज्ञानक्रियाद्वयमेवेति । आह—ननूक्तं "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" [तत्त्वा० १. १.]इह सम्यग्दर्शनपरित्यागादसाधनम् । तत्र केचिदाचक्षते सम्यग्दर्शना-दीनां पूर्वस्य लाभे भजनीय[मुत्तर]मुत्तरलाभे तु नियतः पूर्वलाभ इति ज्ञानग्रहणादेव सम्यग्दर्शनावरोधः । तच्च न, क्रियामात्रग्रहणप्रसङ्गात् । यतः क्रियालाभे नियतः सम्यक्त्व-ज्ञानलाभः । इदमपि च न मृष्यते—सम्यक्त्वज्ञानयोः पूर्वस्य लाभे भजनीयमुत्तरम्, अना-गमात् । न क्वचिदागमोऽस्ति ज्ञानशून्यं सम्यक्त्वमिति । अन[व]बुद्धे च श्रद्धानाभावः ।

१ ताउ को हे ।

यच्च सम्यग्दृष्टेर्मतिज्ञानं मिथ्यादृष्टेरज्ञानमुक्तमतोऽपि न सम्यग्दृष्टिरन्यः(ज्ञः)। यच्चाहुः—निसर्गसम्यग्दर्शनलाभकाले न श्रुतमस्ति परोपदेशाभावात्। तत्रापि परोपदेशः शब्दः। शब्दश्च द्रव्यश्रुतमात्रम्। न चेह द्रव्यश्रुतमधिक्रियते। किं तर्हि? भावश्रुतम्। तच्च सम्यग्दृष्टं(ष्टेच्चं)तं श्रुतज्ञानमिति वचनात् न निषिध्यते। मतिज्ञानसद्भावाच्च। यतो न मतिज्ञानं श्रुतज्ञानशून्यमस्ति तयोरन्योन्यानुगमवचनात्। पारिशेष्यात् ज्ञानविशेष एव सम्यक्त्वमिति ज्ञानग्रहणादागृह्यते, न लाभक्रमनियमात्। कथं पुनः? यथावबोधात्मकत्वे मतेरनाकारत्वादवग्रहेहा(हे) दर्शनम्, साकारत्वाच्चापायधारणे ज्ञानमुक्तमेवा(मेवम)ध्यवसायात्मकत्वेऽवायस्य शु(श्र)द्धानावगमाध्यवसायभेदात् सम्यक्त्वज्ञानभाव इति ॥११७१॥

**ण लभति सिवं सुतम्मि वि वट्टन्तो अचरणो त्ति जं तस्स ।**
**हेऊ खयोवसमतो जध वट्टंतोऽवेहिण्णाणे ॥११७२॥**

**ण ल०** गाहा । इह यदादावुक्तं श्रुतज्ञानेऽपि हि जीवो वर्तमानो न मोक्षं लभते चरणशून्य इत्यस्य हेतुः—क्षायोपशमिकत्वादवधिज्ञानवत् ॥११७३॥

**सक्किरियम्मि वि णाणे मोक्खो खयियम्मि ण तु खयोवसमे ।**
**सुत्तं च खयोवसमे ण तम्मि तो चरणसहिते वि ॥११७३॥७४॥**

**सक्कि०** गाहा । इह क्रियासहायेऽपि ज्ञाने क्षायिक एव मोक्षो न क्षायोपशमिके। श्रुतज्ञानं च क्षायोपशमिकम्, अतस्तत्र न क्रियासहायेऽपि मोक्ष इति ॥११७३॥

**जं सुतचरणेहिंतो खाइयणाणचरणाणि लब्भंति ।**
**तत्तो सिवं सुतं तो सचरणमिह मोक्खहेतु त्ति ॥११७४॥**

**जं सुत०** गाहा । आह—यद्येवं यदादावुक्तं श्रुतज्ञानेऽपि वर्तमानो न मोक्षं लभते यश्चरणविकल इति तद्विशेषणमनर्थकम्। उच्यते—क्षायोपशमिकज्ञानचारित्रभ्यां साक्षान्न मोक्षः, पारम्पर्यतस्तु श्रुतज्ञानचारित्राभ्यां क्षायिकज्ञानचारित्रलाभस्ताभ्यां मोक्षो यतस्तस्माच्छ्रुतं तत्समेतं मोक्षहेतुरिति ॥११७४॥

**आहं व णिज्जिणणे च्चिय कम्मे णाणं ति किंत्थं चरणेण ।**
**ण सुतं खयतो केवलणाणचरित्ताइं खइयाइं ॥११७५॥**

---

१ °तो व विण्णाणे जे । २ तु जे । ३ चरणजुत्तेवि को हे । ४ आह ण णि° जे । ५ किंथ जे । किं व त हे ।

आह गाहा । अथवाह–परिक्षीण एव कर्मणि ज्ञानलाभो न उदिते यतः किमत्र चरणेनेति ? उच्यते–न श्रुतं समस्तावरणक्षयात् । किं तर्हि ? केवलज्ञानचारित्रे भवतः ॥११७५॥

**तेसुं[1] अ ठितस्स मोक्खो तो सुतमिह सचरणं तदत्थाए[2]।**
**[3]तं किध मीसं खइयं च केवलं जं सुतेऽभिहितं ॥११७६॥**

**तेसु अ०** गाहा । तयोश्चावस्थितस्य मोक्षस्तदर्थं च श्रुतं क्रिया चेति । आह–कथं पुनः श्रुतं क्षायोपशमिकं केवलं च क्षायिकमिति ? उच्यते–यतोऽभिहितम् ॥११७६॥

**भावे खयोवसमिये दुवालसंगं पि होति सुतणाणं ।**
**केवलियणाणलंभो णण्णत्थ खए कसायाणं ॥१०४॥११७७॥**
**सव्वं पि [4]किमुय देसो केवलवज्जाणि वाऽविसेसेणं ।**
**चत्तारि खयोवसमे सामइयाइं च पाएणं ॥११७८॥**

**भावे** गाहा । **सव्वं** गाहा । द्वादशाङ्गमपीति समस्तमनङ्गसमेतमपि गम्यते । अथवा अपिशब्दात् केवलवर्जं चतुष्टयमपि गम्यते सामायिकचतुष्टयं वा । ॥११७७–७८॥ [किं] क्षायिकम् ?

**सव्वकसायावगमे केवलमिह णाणदंसणचरित्तं ।**
**देसक्खए त्ति सम्मं धुवं सिवं सव्वखइएसुं ॥११७९॥**

**सव्व०** गाहा । सर्वकषायापगमे हि केवलज्ञानलाभः क्षायिकचारित्रलाभश्च । क्षायिकसम्यक्त्वलाभः कषायदेशक्षयेऽपि स्यात् । क्षायिकसम्यक्त्वज्ञानचारित्रत्रयेऽवश्यंभावि निर्वाणम् ॥११७९॥

**[७७–प्र०]कधमेताणमलाभो लाभो व कमो तदावरणता वा ।**
**आवरणखयोवसमो[5] समो खयो वा कधं कस्स? ॥११८०॥**

**कध०** गाहा । कथं पुनरेषां सम्यक्त्वादीनामलाभः, कथं वा लाभः, कुतो हेतोरित्यर्थः, को वा लाभक्रमः, तस्य वा किमावरणम्, कथं वा कस्यावरणक्षयोपशमः, कथं चोपशमः क्षयो वेति ? ॥११८०॥

**अधवा तवातिमइयं कधमारूढो[6] तरुं जिणो कध वा ।**
**तत्तो[7] य वक्खमाणा जाता जिणपवयणुप्पत्ती ॥११८१॥**

---

१ तेसुं हे । २ तदट्ठाए को हे । ३ तं कध त । तं कह हे । ४ किंतु दे° जे । ५ °मो खयो समो वा कधं जे । ६ °ढो जिणो किध तरुं त । ७ तत्तो पव° को हे त ।

**अथवा** गाहा । अथवा तपोनियमज्ञानमयवृक्षारोहणमुक्तं [गा० १०९१] भगवतः, न पुनरितो हेतोरनेन वा क्रमेणेति । तदिदानीमुच्यते । यथा च तस्मादेव भगवतो वक्ष्यमाणा जिनप्रवचनोत्पत्तिरिति ॥११८१॥

**णिज्जुत्तिसमुत्थाणप्पसंगतो णाणतरुसमारोहो ।**
**वच्चइ य वक्खमाणा समयं जिणपवयणुप्पत्ती ॥ ॥११८२॥**

**णिज्जुत्ति०** गाहा । निर्युक्तिसमुत्थानप्रसङ्गतस्तपोनियमज्ञानवृक्षारोहणं जिनप्रवचनोत्पत्तिश्च वक्ष्यमाणा युगपद्गच्छतः ॥११८२॥

**अट्ठण्हं पगदीणं[1] उक्कोसठितीए[2] वट्टमाणो तु ।**
**जीवो ण लभति सामाइयं चतुण्हं पि एगतरं ॥१०५॥११८३॥**

**वीस सयरोवमाणं[3] कोडाकोडीओ[4] णामगोत्ताणं ।**
**सतरिम्मोहस्स[5] ठिती सेसाणं तीसमुक्कोसा[6] ॥११८४॥**

**आयुस्स[7] सागराइं तेत्तीसं अवरतो मुहुत्तंतो ।**
**अट्ठ य णामागोते वेतणिए बारस मुहुत्ता ॥११८५॥**

**मोहस्सुक्कोसाए ठितीए सेसाण छण्हमुक्कोसा ।**
**आयुस्सुक्कोसा वा मज्झिमिया वा ण तु जहण्णा ॥११८६॥**

**अट्ठण्हं** गाहा । **वीस** गाहा । **आयु०** गाहा । **मोहस्सु०** गाहा । मोहनीयस्योत्कृष्टस्थितौ शेषकर्मणामायुर्वर्जानामुत्कृष्टैव नियमतः, आयुषस्तूत्कृष्टा वा मध्या वा न तु जघन्या ॥११८३–८६॥

**मोहविवज्जुक्कोसट्ठितीयं[8] मोहस्स सेसयाणं[9] च ।**
**उक्कोस मज्झिमा वा कासइ य जहण्णिया होज्जे[10] ॥११८७॥**

**मोह०** गाहा । मोहनीयवर्जानामन्यतमस्योत्कृष्टायां मोहनीयस्य शेषाणां चोत्कृष्टा [मध्यमा] वा; कस्यचिद्वा जघन्येति ॥११८७॥

**[ ७७ द्वि० ] सम्मसुतदेससव्वव्वताण सामाइयाणमेक्कं पि ।**
**उक्कोसठिती[12] ण लभति भयाऽऽउए[13] पुव्वलद्धाइं ॥११८८॥**

---

१ पयडीणं को हे त । २ °ए पव° हे । ३ सतरो° जे । वीस अयरो° को । ४ °डीउ को हे । ५ सयरी मो° को हे त । ६ °स उक्को° त । ७ आयुस सा° हे । ८ °सयठि° को हे त । ९ °ईए मो° को हे त । १० सेसि° को हे त । ११ होज्जा को हे त । १२ ठिईए न को । १३ भयणा उण पु° को ।

**सम्मसुत॰** गाहा । यदाष्टानामपि कर्मणामुत्कृष्टा स्थितयो भवन्ति तदा सम्यक्त्वश्रुतचारित्रदेशव्रतानां सामायिकानां नैकमपि लभते । आयुषस्तूत्कृष्टस्थितित्वे सम्यक्त्वश्रुतसामायिकयोः पूर्वलाभः स्यात् ॥११८८॥

**सव्वजहण्णठितीओ वि ण लभते [1]जेण पुव्वपदिवण्णो ।**
**आयु[2]जहण्णठितीओ ण पवज्जंतो ण पदिवण्णो ॥११८९॥**

**सव्व॰** गाहा । सर्वजघन्यकर्मस्थितिरपि न लभते यतः पूर्वलब्धसम्यक्त्वादित्रयाः सूक्ष्मसम्परायादयः । आयुषस्तु जघन्यस्थितिर्न प्रतिपद्यते न पूर्वप्रतिपन्न इति । एतच्चान्तःकोटीकोटिस्थितिर्लभत इति विशेषग्रहणाद्गम्यते । एवं तावदलाभः सामायिकानाम् । ॥११८९॥ अथ लाभस्तत उच्यते—

**सत्तण्हं पगदीणं अ[3]ब्भंतरतो तु को[4]डीकोडीए ।**
**काऊण सागराणं जति लभति च[5]तुण्हमेगतरं ॥१०६॥११९० ॥**
**अंतिमकोडाकोडी[6]यं सव्वकम्माणमायुवज्जाणं ।**
**पलितासंखेज्जतिमे भागे खीणे हवति गंठी ॥११९१॥**

**सत्तण्हं** गाहा । **अंतिम॰** गाहा । यदा किल सर्वकर्मणामन्त्या कोटीकोट्योऽवतिष्ठन्ते तदा तत्पल्योपमासङ्ख्येयभागमतिक्रम्य ग्रन्थिराविर्भवति ॥११९०–९१॥

**गंठि त्ति सुदुब्भेतो कक्खडघणरूढगूढगण्ठि व्व ।**
**जीवस्स कम्मजणितो घणरागद्दोसपरिणामो ॥११९२॥**

**गंठि त्ति** गाहा । यथेह वज्रदारुविशेषस्य वा घनोऽतिगूढनिरूढो दुर्मोचो दुर्भेदश्च ग्रन्थिरेवमेवात्मनः कर्मविशेषप्रत्ययोऽतिरागद्वेषोदयपरिणामो ग्रन्थिरिति व्यपदिश्यते ॥११९२॥

**भिण्णम्मि तम्मि लाभो सम्मत्तादीण मोक्खहेतूणं ।**
**सो य दुलभो परिस्समचित्तविघातातिविग्घेहिं ॥११९३॥**

**भिण्णम्मि** गाहा । तत्र भिन्ने सम्यक्त्वादिलाभो भवति तद्भेदश्च मनोविघातपरिश्रमादिभिरतिदुर्लभः ॥११९३॥

**सो तत्थ परिस्सम्मति घोरमहासमरणिग्गताति व्व ।**
**विज्जा य सिद्धिकाले जध बहुविग्घा तधा सो वि ॥११९४॥**

**सो तत्थ** गाहा । स च किल तत्र विशेषेण परिश्राम्यति महासंग्रामशिरोगतवत् महासमुद्रतारिवत् । चित्तविघातादिविघ्नबहुलश्चासौ भवति महाविद्यासाधकवत् ॥११९४॥

---

१ जो ण **जे** । २ आउयज॰ **को हे** त । ३ अब्भिं॰ **को हे** । ४ कोडिको॰ **को त** । ५ चउण्हमन्नयरं **हे** । चउण्हमण्ण॰ **त** । ६ ॰डीए **को हे त** ।

**कम्मट्ठिई सुदीहा खविता जति णिग्गुणेण सेसं पि।**
**स खवेतु णिग्गुणो च्चिय किं थे पुणो दंसणादीहिं ॥११९५॥**

**कम्म०** गाहा। आह–यदि कर्मस्थितिरतिद्राघीयसी सम्यक्त्वादिगुणविकले-नैवानेन क्षपितेति मतिः, शेषकर्मापि सम्यक्त्वादिगुणशून्य एव क्षपयित्वा सेत्स्यति। किमिह सम्यग्दर्शनादिमोक्षहेतुपरिकल्पनया? ॥११९५॥

**[७८-प्र०]पाएण पुव्वसेवा परिमउयी साधणम्मि गुरुतरिया।**
**होति महाविज्जाए किरिया पायं सविग्घा य ॥११९६॥**
**तह कम्मठितीखवणे परिमयुयी मोक्खसाधणे गरुयी।**
**इध दंसणादिकिरिया दुलभा पायं सविग्घा य ॥११९७॥**

**पाएण** गाहा [२] ।उच्यते-महाविद्यासाधनवदेतद् द्रष्टव्यम्। यथा महाविद्यायाः पूर्वसेवा नातिगुर्वी तत्साधनक्रियाऽतिगरीयसी, सविघ्ना च प्रायेण। तद्वत् कर्म-स्थितिपरिक्षपणक्रिया पूर्वप्रवृत्तकरणात्मिका नातिगुर्वी। मोक्षसाधनक्रिया तु सम्यग्दर्शन-ज्ञानचारित्रात्मिकाऽतिगरीयसी दुःप्रापा, सविघ्ना च। न च तामन्तरेण मोक्षप्रसिद्धि-रस्ति ॥११९६-९७॥

**अधव जतो च्चिय सुबहुं खवितं तो णिग्गुणो ण सेसं पि।**
**स खवेति[4] लभति य जतो सम्मत्तसुतातिगुणलाभं ॥११९८॥**

**अधव** गाहा। अथवा यत एषा बह्वी कर्मस्थितिः, कर्म चानेन क्षपितमत एवायं हीयमानदोषोऽभिवर्द्धमानगुणश्चान्ते सम्यग्दर्शनादिगुणलाभमपि लभते। यथा शेषकर्मपरिक्षये सिद्धताऽवाप्यते तथा कर्मैकदेशक्षयोपशमादेः सम्यग्दर्शनादिगुणलाभ-स्ततश्च मोक्ष इत्यतो न शेषकर्मा गुणं क्षपयति ॥११९८॥

**करणं अधापवत्तं अपुव्वमणियट्टिमेव भव्वाणं।**
**इतरेसिं पढमं चिय भण्णति करणं ति परिणामो ॥११९९॥**

**करणं** गाहा। तत्र[5]त्यानां त्रिविधं करणं तद्यथाप्रवृत्तकरणं अपूर्वकरणम्, अनिवर्त्ति-करणं चेति। तत्र पूर्वप्रवृत्तम्, अप्राप्तपूर्वमपूर्वम्, निवर्त्तनशीलं निवर्त्ति, न निवर्त्यनि-वर्त्ति आसम्यग्दर्शनलाभान्न निवर्त्तते। अभव्यानामाद्यमेव। करणमिति परिणाम-विशेषः ॥११९९॥

---

१ किं व त। किं पुं हे। २ सारण॰ को। ३ कम्मट्ठिइख॰ हे को। ४ ॰खवेइ जओ लहए स॰ तं। खवेइ जओ लभए स॰ हे। ५ तत्र हत्या॰–इति प्रतौ

जा गंठी ता पढमं गंठिं समतिच्छतो अपुव्वं तु ।
अणियट्टीकरणं पुण सम्मत्तपुरक्खडे जीवे ॥१२००॥

**जा गंठी** गाहा । तत्र यावद् ग्रन्थिस्थानं तावदाद्यम्, ग्रन्थिस्थानमतिक्रामतोऽपूर्वकरणम्, सम्यग्दर्शनलाभाभिमुखस्याऽनिवर्त्तिकरणमिति ॥१२००॥

पल्लयगिरिसरि[1]तोवलपिपीलियापुरिसपधजरग्गहिता ।
कोद्दवजलवत्थाणि य सामाइयलाभदिट्ठंता ॥१०७॥१२०१॥

जो पल्लेऽतिमहल्ले धण्णं पक्खिवति थोवथोवतरं ।
सोधेति बहुबहुतरं[2] झिज्झति [3] तं थोव[4]कालेणं ॥१२०२॥
[७८–द्वि]तध[5] कम्मधण्णपल्ले जीवो[6] अणाभोगतो बहुतरायं ।
[7]सोधेन्तो थोवतरं [8]गेण्हंतो पावते गंठिं ॥१२०३॥

**पल्लय०** गाहा । **जो पल्ले** गाहा । **तध** गाहा । आह—उक्तं सर्वस्य संसारिणो योगवतः प्रतिसमयं कर्मणश्चयापचयौ । असंयतस्य च बहुतरस्य चयः, अल्पतरस्य चापचयः, यतोऽभिहितम्—

"पल्ले महतिमहल्ले कुम्भं पक्खिवइ सोहि(ह)ए नालिं ।
असंजए अविरए बहुबंधए णिज्जरइ थोवं ॥
पल्ले महतिमहल्ले कुम्भं सोहेति पक्खिवति णालिं ।
जो संजए पमत्ते बहुणिज्जरे बंधए थोवं ॥
पल्ले महतिमहल्ले कुंभं सोहेति पक्खिवे ण किंचि ।
जो संजयऽप्पमत्ते बहुणिज्जरे विबंधति ण किंचि ॥"

यतश्चैवं कथमसंयतमिथ्यादृष्टिरियतं(तः) कर्मणः स्थितेश्चापचेता भविष्यति, यतोऽस्य ग्रन्थिदेशप्राप्तिरिति ? उच्यते—प्रायोवृत्तिरेषा यदसंयतस्य बहुतरस्योपचयः, अन्यथोपचयानवस्था[ना]त् कर्मपुद्गलपरिणामानवस्थान[तः][9] अशेषपुद्गलग्रहणप्रसङ्गः, सम्यग्दर्शनाद्यलाभश्च । सन्ति च सम्यग्दर्शनादयः । तस्मादिह कस्यचिद् बन्धहेतुप्रकर्षात् पूर्वोपचितकर्मानुभूतिहेतुवैकल्याच्चोपचयप्रकर्षः । कस्यचिद्[10]बन्धानुभवहेतुसाम्यादुपचयापचये साम्यम् । कस्यचित्तु मन्दपरिणामतया बन्धहेतुवैकल्यादनुभ[11]वनहेतुप्रकर्षाच्चापचय-

१ °सरिउवले पिवीलि° को । सरिउवलपिवीलि° हे । सरितोवलापिवीलि° त । २ सिज्झ° जे । ३ 'तं' नास्ति को हे त । ४ थोवेण का° को हे त । ५ तध धम्म° त । ६ जीवोऽणा° को हे त । ७ सोहंतो को हे । ८ गिहंते हे । ९ °स्थानपुद्गलाशेषग्रहणपुद्गलग्रहणप्र°–इति प्रतौ । १० चिद्बचान्भ° इति प्रतौ । ११ °दनुहत्रनहे° –इति प्रतौ ।

प्रकर्षः । तद्यथा योऽतिमहति धान्यपल्येऽल्पतरं प्रक्षिपेद् बहुतरं चापचिनुयात्तदपचय-प्रकर्षात् कालान्तरेणोपक्षीयते धान्यम्, एवमेव कर्मधान्यपल्येऽनाभोगतो जीवो बहुतरं चापचिन्वन्नल्पतरं चोपचिन्वन् ग्रन्थिदेशमाप्नोति ॥१२०१–१२०३॥

**गिरिणतिवत्तणिपत्थरघडणोवम्मेण पढमकरणेण ।**
**जा गण्ठी कम्मेठितीखवणमणाभोगतो तस्स ॥१२०४॥**

**गिरि॰** गाहा । कथं पुनरनाभोगतस्तस्यापचय इति ? उच्यते–गिरिसरिदुपलवद्द-र्त्तनीपाषाणवद्वा । यथा गिरिसरित्पाषाणाश्च परस्परादिसन्निकर्षात् कालेनाऽनेका-कृतयो जायन्ते, न च तदभिप्रायोऽस्ति-'कथं वयमेवंप्रकारा भवेम' । तद्वत् पूर्वप्रवृत्त-करणप्रत्ययमनाभोगतः कर्मस्थितिक्षपणमाग्रन्थिदेशादिति ॥१२०४॥

**खितिसाहाविियगमणं[1] थाणूसरणं[2] ततो समुप्पतणं[3] ।**
**ठाणं[4] थाणुसिरे वा ओरुहणं वा मुइंगाणं ॥१२०५॥**
**खितिगमणं पिव पढमं थाणूसरणं वा करणमपुव्वं[5] ।**
**उप्पतणम्पिव[6] तत्तो जीवाणं करणमणियट्टिं ॥१२०६॥**
**थाणुं व[7] गंठिदेसो[8] गंठियसत्तस्स तत्थऽवत्थाणं ।**
**ओतरणम्पि व[9] तत्तो पुणो वि कम्मट्ठितिविवड्ढी[10] ॥१२०७॥**

**खिति॰** गाहा [३] । यथेह पिपीलिकानां क्षितिस्वभावगमनम्, स्थाण्वारोहणम्, ततश्च सम्भूतपक्षाणामुत्पतनं, स्थाणुशिरसि चावस्थानं, स्थाणोर्वा पुनः प्रत्यवसर्पण-मधः, तथेह पिपीलिकाक्षितिस्वभावगमनमिव पूर्वप्रवृत्तकरणं, स्थाण्वारोहणमिवापूर्वकरणम्, उत्पतनमिवानिवर्त्तिकरणं, स्थाणुरिव ग्रन्थिदेशः, तत्र च ग्रन्थिकसत्त्वावस्थानं युक्तम्, इह ग्रन्थिसहयोगाद् ग्रन्थिकः सत्त्वो जीवः, ग्रन्थिकश्चासौ सत्त्वश्च ग्रन्थिकसत्त्वः, ग्रन्थि-भेदनाशक्तो वा ग्रन्थ्यशक्तः, भेदनशब्दलोपात् । अथवा ग्रन्थिकः कुत्सायां कन् ग्रन्थिकश(स)क्तः शक्तश्चि(सक्तः श्लि)ष्टो लग्न इत्यनर्थान्तरं, स्थाणुप्रत्यवसर्पणमत्र पुनः कर्मस्थितिसंवर्द्धनम् ॥१२०५–१२०७॥

**जध वा तिण्णि मणूसा जंतऽडविपधं सभावगमणेणं ।**
**वेलातिक्कमभीता तुरंति पत्ता य दो चोरा ॥१२०८॥**
**दट्ठुं मग्गतदत्थे तत्थेगो मग्गतो पडिणियत्तो ।**
**बितिओ गहितो ततिओ समतिक्कंतुं[11] पुरं पत्तो ॥१२०९॥**

---

१ °ह्वितिक्ख° हे । २ °तिसहा° त । ३ °रणे जे ४ थाणं को त । ५ °मपु° हे । ६ °णम्मि व जे । °तयं पिव त । ७ थाणु व्व को हे । ८ °देसे को हे । ९ °णम्मि व जे । १० °विवु° को हे । ११ °क्कंतो को त ।

अडवी भव्वो मणूसा जीवा कम्मट्ठिती पधो दीहो ।
गंठी य भयत्थाणं[1] रा[७९-प्र०]गद्दोसा य दो चोरा ॥१२१०॥

भग्गो ट्ठितिपरिवुड्ढी[2] गहीतो पुण गंठितो गतो ततियो ।
सम्मत्तपुरं एवं जोएज्जा तिण्णि करणाणि[3] ॥१२११॥

जध० गाहा । दट्ठुं गाहा । अडवी गाहा । भग्गो गाहा । यथा केचित् त्रयः पुमांसोऽटवीमतिप्रपन्नाः स्वभावगत्या सुदीर्घमध्वानमतिक्रामन्तः कालातिपातभीरवो भयस्थानमाढौकमानाः शीघ्रगतयो गच्छन्तः पुरस्तादुभयतः समुत्खातखड्गपाणितस्करद्वयमालोक्य तत्रैकः प्रतीपमनुप्रयातोऽन्यस्ताभ्यामागृहीतोऽन्यश्च ताभ्याम नालिङ्गित एवेष्टं पत्तनमनुप्राप्तः । एवमिहाटवी संसारः । पुरुषत्रयोपमानास्त्रिविधाः संसारिणः । पन्था कर्मस्थितिर्रतिद्राघीयसी[4] । [भ]यस्थानं ग्रन्थिदेशः । तस्करद्वयं रागद्वेषौ । प्रतीपगामी ग्रन्थिदेशमेत्य पुनरनिष्टपरिणामः कर्मस्थितिसंवर्द्धकः । तस्करद्वयावरुद्धः प्रबलरागद्वेषद्वयोदयः ग्रन्थिकसत्त्वः । इष्टपत्तनानुप्रयाता सम्यग्दर्शनप्रापी । अत्र च पुरुषत्रयस्वभावगमनोपमितमाद्यं ग्रन्थिदेशप्रापक(कं) पूर्वप्रवृत्तकरणं, शीघ्रतरगामितयोपमितंमपूर्वकरणं[5], इष्टपत्तनप्रापकपुरुषोपमितमनिर्वर्त्तमिति[6] ॥१२०८-११११॥

उवदेसतो सयं वा लभति पधं कोयि ण लभते कोयि[7] ।
गंठित्थाणं[8] पत्तो सम्मत्तपधं तधा भव्वो ॥१२१२॥

उव० गाहा । आह—किं पुनरसौ सम्यग्दर्शनमुपदेशत एव लभते उतानुपदेशादपीति ? उच्यते--पथि प्रच्युतवदेतत् । यथेह कश्चित् पथि प्रच्युतः परिभ्रमन् स्वयमेव पन्थानं संलभते, कश्चित् परोपदेशात्, कश्चिच्च नैव लभते; तद्वदत्यन्तापनष्टसत्पथो जीवः संसाराटवीमनुपतन् कश्चिद् ग्रन्थिस्थानमतिक्रम्याऽनिवर्त्तिकरणमनुप्राप्य स्वयमेव सम्यग्दर्शनादि निर्वाणपत्तनपथं लभते, कश्चित् परोपदेशात् । कश्चिच्च ग्रन्थिमध्ये(भ्ये)त्य तदनुषक्तस्तत्प्रतिहतप्रतीपगामीव नैव लभते । तत्रैव भव्यस्य तिस्रोऽपि गतयः, अभव्यस्तु न लभत एवेति । ॥१२१२॥

भेसज्जेण सयं वा णासति जरओ ण णासते कोयि[7] ।
भव्वस्स गंठिदेसे मिच्छत्तमहाजरो[11]ऽपेवं ॥१२१३॥

१ भयट्ठा° हे त । २ °परिवु० त को हे । ३ ०णाइं को त । ४ °तिरितिद्रा–इति प्रतौ । ५ °मितं पू०–इति प्रतौ । ६ °त्तिंति –इतिप्रतौ । ७ कोई त को । ८ गंठिट्ठा° त हे । ९ नस्सइ त को हे । १० नस्सई को । नस्सए हे त । ११ °रो चेव त । °रां चेवं हे ।

**भेसज्जे०** गाहा । यथा वा कश्चिच्च ज्वरः स्वयमेवापैति; कश्चिद्भेषजोपयोगात्, कश्चिच्च नैवापैति; तद्वन्मिथ्यादर्शनमहाज्वरोऽपि कश्चित् स्वयमेवापैति, कश्चिदर्हद्वचनभेषजोपयोगात्, कश्चिच्च नैवापैति । ॥१२१३॥

**णासति सयं व परिकम्मतो व जध कोद्दवाण मतभावो ।**
**णासति तध मिच्छमतो सयं व परिकम्मणाए वा ॥१२१४॥**

**णासइ** गाहा । यथा वेह केषांचित् कोद्रवाणां मदनभावः स्वयमेव कालेनापैति, केषाञ्चिद्गोमयादिपरिकर्मतः, केषाञ्चिच्च नैवापैति; तद्वन्मिथ्यादर्शनभावोऽपि कश्चित् स्वयमेवापैति, कश्चिदुपदेशपरिकर्मतः, कश्चिन्नैवापैति ॥१२१४॥

**[1]अप्पुव्वेण तिपुंजं मिच्छत्तं कुणति कोद्दवोवमया ।**
**अणियट्टीकरणेण तु सो सम्मद्दंसणं लभति ॥१२१५॥**

**अप्पुव्वे०** गाहा । इह कोद्रवोदाहरणोपयोगः—इहापूर्वकरणेनायमात्मा मदनार्द्धशुद्धशुद्धकोद्रवानिव दर्शनं मिथ्यादर्शनादिभेदात्त्रिधा विभज्य(ज)ते ततोऽनिवर्त्तिकरणविशेषात्त्रयेऽपि सम्यक्त्वमेवानुपतति । एष तावद्भव्यः ॥१२१५॥

**तित्थंकरातिपूअं दट्ठूणॅण्णेण वा वि कज्जेण ।**
**सुतसामाइयलाभो होज्जाऽभव्वस्स गण्ठिम्मि ॥१२१६॥**

**तित्थं०** गाहा । अर्हदादिविभूतिसंदर्शनादभव्योऽपि कदाचिद् 'धर्मात् एतत्' इति निर्वाणमश्रद्धा(श्रद्दधा)नोऽपि स्वर्गादिफलमङ्गीकृत्य प्रयोजनान्तरतो वा ग्रन्थौ सन्तिष्ठमानः श्रुतसामायिकमात्रं लभते न सम्यग्दर्शनादि ॥१२१६॥ यदपूर्वकरणेन दर्शनत्रयविभागेनोदाहरणमुक्तं तद्विवरणमिदम्—

**मतणा दरणिव्वलिता णिव्वलिता य जध कोद्दवा तिविधा ।**
**[6]तध मिच्छत्तं तिविधं परिणामवसेण सो कुणति ॥१२१७॥**
**[७९-द्वि०] जध वेह किंचि मलिणं दरसुद्धं[7] सुद्धमंबु वत्थं च ।**
**एवं परिणामवसा[8] करेति सो दंसणं तिविधं ॥१२१८॥**
**सम्मत्तम्मि तु लद्धे पलितपुधंत्तेण सावओ होज्जा[10] ।**
**चरणोवसमखयाणं सागरसंखंतरा होन्ति ॥१२१९॥**

---

१ अपु° **हे** । २ °नाप्रमा° –इति प्रतौ । ३ °नमेदा°–इति प्रतौ । ४ दट्ठूणं णेण **जे** । ५ होज्ज अभ° **को हे** । ६ तह **को हे त** । तिध **जे** । ७ °द्धमसुद्ध° **त** । ८ °वसे **त** । °पुहुत्ते° **को** । १० होइ **को** ।

**मतणा॰** गाहा । **जध॰** गाहा । **सम्मत्तं** गाहा । एवं सम्यक्त्वलाभात् पल्योपमपृथक्त्वकर्मस्थितिपरिक्षये श्रावकत्वं प्राप्यते, ततः संख्येयेषु सागरोपमेष्वपेतेषु चारित्रम्, ततः संख्येयेषूपशामकत्वं ततः संख्येयेषु क्षपकत्वमिति ॥१२१७–१२१९॥

**एवं [1]अप्पडिपडिते सम्मत्ते देवमणुयजम्मेसु ।**
**अण्णतरसेढिवज्जं [2]एक्कभवेणं व सव्वाइं ॥१२२०॥**

**एवं॰** गाहा । एवमप्रच्युतसम्यग्दर्शनस्य देवमनुष्यजन्मनू(न्यु)क्तम् । यत्तेनापि हि जन्मना सर्वाणि प्राप्येरन्न तु श्रेणिद्वयं किं त्वेकैवौपशमिकी क्षायिकी वेति ॥१२२०॥

**अधुणा जस्सोदयतो ण [3]लभते दंसणातिसामइयं ।**
**लद्धं व पुणो [4]भंस्सति तदिहावरणं कसायादी ॥१२२१॥**

**अधुणा** गाहा । कषायादिग्रहणात् सम्यग्दर्शनस्य कषायादि मिथ्यादर्शनं च । श्रुतस्य ज्ञानावरणम् । चारित्रस्य चारित्रमोहनीयमेव ॥१२२१॥

**अधवा खयादितो केवलादि[5] तं जेसिं ते कति कसाया ।**
**को वा कस्सावरणं को व खयातिक्कमो कस्स ॥१२२२॥**

**अधवा** गाहा । अथोक्तं कैवल्यज्ञानलाभो नान्यत्र कषायक्षयादिति त इदानीमुच्यन्ते—कषायाः के, कियन्तः, को वा कस्य सामायिकस्यावरणम्, क्षयादिक्रमो वा कः कस्येति ? ॥१२२२॥

**पढमिल्ल[6]आण उदए णियमा संजो[7]अणाकसायाणं ।**
**सम्मदंसणलंभं भवसिद्धी[8]या वि ण लभंति ॥१०८॥१२२३॥**
**खवणं पडुच्च पढमा पढमगुणविघाइणो त्ति वा जम्हा ।**
**संजोअणा कसाया [9]भवातिसंजोअणातो[10] त्ति ॥१२२४॥**

**पढमि॰** गाहा । **खवणं** गाहा । अनन्तानुबन्धिनां क्षपणक्रमात् प्राथम्यम्, प्रथमगुणविघातित्वाद्वा । प्रथमगुणश्च सम्यक्त्वम् । कर्मभवसंयोजनात् संयोजनाः संयोजनाश्चते कषायाश्च संयोजनकषायाः । छन्दोमानपूरणात् संजोयणाकसायत्ति ।

---

१ अपरिवडिए हे । अप्परिव॰ को । २ एगभ॰ हे को । ३ लभइ हे । लभई को । ४ भण्णति । ५ ॰लाइं जं जे॰ हे त । ॰लाइं तं को । ६ मिल्लआ॰ जे । ७ संजोणा॰ को । ८ ॰द्धिया॰ को । ९ भावा॰ त । १० ॰णाउ त्ति हे ।

अथवा संयोजनाहेतवः कषायाः संयोजनाकषाया इति हेतुशब्दलोपात् ॥१२२३–१२२४॥

**कम्मं कसो[1] भवो वा कसमाओ सिं जतो कसाया तो[2] ।**
**कस[८०–प्र०]मायंयति व जतो गमयंति कसं कसाय त्ति ॥१२२५॥**

**कम्मं** गाहा । 'कष गतौ' इति कर्म कषाख्यम्, भवो वा, आयो लाभः प्राप्तिरित्यनर्थान्तरम्, कषं कषो वाऽऽयो येषां ते कषायाः । अथवा कषमायन्तीति कषायाः, कषं गमयन्तीत्यर्थः ॥१२२५॥

**आओ व उवादाणं तेण कसाया जतो कसस्साया ।**
**चत्तारि बहुवयणतो एवं बितियादयो वि मता ॥१२२६॥**

**आओ** गाहा । अथवा आयः किलोपादानं हेतुरित्यर्थः, कषस्यायाः कषायाः, कषहेतव इत्यर्थः । बहुवचनाभिधानाच्चत्वारः क्रोधादयः । एवं द्वितीयादयोऽपि । तदेषां प्रथमकषायाणामुदये भविष्यत्सिद्धिका अपि न सम्यक्त्वं लभन्ते ॥१२२६॥

**भवसिद्धियाऽवि भणिते णियमा ण लभंति[3] तयमभव्वा वि ।**
**अविसदे[4] व गहिता परित्तसंसारियादीया ॥१२२७॥**

**भव०** गाहा । भविष्यत्सिद्धिका अपि न लभन्त इत्युक्तेऽपिशब्दादभव्या नैव लभन्त इति गतमेतत् । अथवा अपिशब्दात् परीत्तसंसारादयोऽपि गम्यन्ते ॥१२२७॥

**[5]बितियकसायाणुदए अप्पच्चक्खाणणामधे[6]ज्जाणं ।**
**सम्मदंसण[7]लाभं विरताविरतिं ण तु लभंति ॥१०९॥१२२८॥**
**सव्वं देसो [8] जतो पच्चक्खाणं ण जेसिं[9] उदयम्मि ।**
**ते अप्पच्चक्खाणा सव्वणिसेधे मतोऽकारो ॥१२२९॥**

**बितिय०** गाहा । **सव्वं** गाहा । इह सर्वप्रत्याख्यानं देशप्रत्याख्यानं वा न येषामुदये लभ्यते [10]ते अप्रत्याख्यानाः । सर्वप्रतिषेधवचनोऽयमकारः ॥१२२८–१२२९॥

**सम्मदंसण[11]लाभं लभंति भविय त्ति वक्कसेसोयं ।**
**विरताविरतिविसेसणतुसद्दसंलक्खितोऽयं च[12] ॥१२३०॥**

---

१ कसं को हे त । २ ते को । ३ °ति गतिम° जे । ४ °ण विग° जे । ५ बीयक° को हे ६ °धेयाणं को हे । ७ °लभं को हे त । ८ वि त । ९ जेसिमुद° को । जेसिमुदएणं हे । १० °ते भवप्र°–इति प्रतौ । ११ °लंभं को हे । १२ वा त ।

**सम्म०** गाहा। एषामुदये भव्या 'सम्मद्दंसणलाभं' किं? लभेरन्निति वाक्यशेषः। अयं च वाक्यशेषो विरत्यविरतिनिषेधविशेषणतुशब्दोपलक्षितः। कथं? विरताविरता विरतिं ण तु लभंति। तुशब्दात् सम्यग्दर्शनलाभमेव लभेरन्निति गम्यते ॥१२३०॥

**ततियकसायाणुदये पच्चक्खाणावरणणामधेज्जाणं।**
**देसेक्कदेसविरतिं चरित्तलंभं ण तु लभंति ॥११०॥१२३१॥**
**सव्वं पच्चक्खाणं वेरेन्ति[1] ते जण्णं[2] देसमेत्तेणं[3]।**
**पच्चक्खाणावरणा आ मज्जातीसदत्थेसु ॥१२३२॥**

**ततिय०** गाहा। **सव्वं** गाहा। आवृण्वन्तीत्यावरणाः, प्रत्याख्यानस्यावरणाः प्रत्याख्यानावरणाः। आह—नैषामुदये प्रत्याख्यानमस्तीति तत्प्रतिषेधादप्रत्याख्यानाः, इहापि चावरणशब्दात् प्रत्याख्यानप्रतिषेध इति न एषां प्रतिविशेषः। उच्यते—ननूक्तं तत्र नञः सर्वनिषेधवचनत्वात् सर्वप्रत्याख्यानविघातिनस्ते। इह पुनराङो मर्यादेवा(देषद)र्थे वचनान्न सर्वनिषेधः। किं तर्हि? सर्वविरतेरेव निषेधो गम्यते, न देशविरतेः। यस्मादाह—'देसेक्कदेसविरतिं', किं? लभेरन्निति वाक्यशेषः। अयमपि च वाक्यशेषश्चारित्रनिषेधविशेषणतुशब्दोपलक्षितः। तत्राङ् मर्यादायां तावत् आ विरति प्रत्याख्यानावरणा न देशविरतेरिति प्रत्याख्यानावरणाः। ईषदर्थेऽपि—प्रत्याख्यानस्येषद्वारणाः प्रत्याख्यानावरणाः, यतो देशप्रत्याख्यानेऽपि विरतिरेव भूयसी नाऽविरतिरिति[4]। यतश्च तन्निमित्ता न विरतिरतः तन्मात्रावरणाः प्रत्याख्यानावरणाः ॥१२३१–३२॥

**णासंतस्सावरणं ण सतोऽ[८०–द्वि]भव्वादिविरमणपसंगा[5]।**
**पच्चक्खाणावरणा तम्हा तस्संभवावरणा ॥१२३३॥**

**णासंत०** गाहा। आह—किमेते विद्यमानमावृण्वन्ति प्रत्याख्यानमुताऽविद्यमानम्? उच्यते—[ना]सतः खरविषाणस्येवावरणमस्तीत्यतो नाविद्यमानम्। न च विद्यमानम्, अभव्यादीनामपि विरमणप्रसङ्गात्। परिशेषात् प्रत्याख्यानपरिणतेरावरणाः प्रत्याख्यानावरणाः परिणतिशब्दलोपात् ॥१२३३॥

**उदए विरतिपरिणती ण होति जेसिं खयातितो होती।**
**पच्चक्खाणावरणा त इह जधा केवलावरणं ॥१२३४॥**

१ विरें त। २ जण्णु जे। ३ °मेएणं को हे त। ४ नाविरतिरतिश्च—इति प्रतौ। ५ °संगो जे।

**उदए** गाहा । इह यदुदये न विरतिपरिणतिरात्मनो भवति, क्षयोपशमादितश्च भवति, ते प्रत्याख्यानावरणाः, केवलावरणवत् । यथेह यदुदयात् केवलपरिणामापत्तिरात्मनो न भवति, क्षयाच्च भवति तत् केवलावरणमुच्यते, तद्वत् प्रत्याख्यानावरणा अपीति । केचित् केवलमपि विद्यमानमेवाव्रियत इति मन्यन्ते तच्च न, अभव्यादिकेवलप्रसङ्गात् । आवरणादकेवलप्रसङ्गात्—आव्रियते केवलं चेति विरोधात् । स्वात्मदर्शनप्रसङ्गात् स्थगितप्रदीपवत् । आवरणपरिक्षयेऽपि च तदनन्तगुणावरणसद्भावादनुत्पत्तिप्रङ्गात्, यतः सर्वजीवावरणपुद्गलेभ्योऽप्येकाकाशप्रदेशपुद्गलानन्तगुणतेति ॥१२३४॥

**मूलगुणाणं लंभं ण लभति मूलगुणघातिणो उदए ।**
**संजलणाणं उदए ण लभति चरणं अधक्खातं ॥१११॥१२३५॥**
**सम्मत्तसमेताइं महव्वताणुव्वताइं मूलगुणा ।**
**मूलं सेसाधारो बारस तग्घातिणो एते ॥१२३६॥**

**मूल०** गाहा । **सम्मत्त०** गाहा । इह सम्यक्त्वं महाव्रताणुव्रतानि च मूलगुणाः, तदुत्तरगुणाधारत्वात् । एषामलाभो भवति मूलघातिनामुदये । मूलगुणघातिनश्च द्वादशानन्तानुबन्ध्यादयः ॥१२३५–१२३६॥

**णिसिभत्तविरमणं पि हु णणु मूलगुणो कहं ण गहितं तं ।**
**वयधारिणो च्चिय तयं मूलगुणो सेसैयस्सितरो ॥१२३७॥**
**आहारविरमणातो तवो व्व तत्र एव वा जतोऽणसणं ।**
**अधव महव्वतसंरक्खणत्तणातो समितयो व्व ॥१२३८॥**

**णिसि०** गाहा । **आहार०** गाहा । आह—ननु रात्रिभोजनविरमणमपि मूलगुणः । स किमुत्सृज्यते ? उच्यते—व्रतिन एव हि तन्मूलगुणोऽव्रतस्य उत्तरगुण एव, आहारविरमणात्तपोवत् । इतश्चोत्तरगुणः, तपोविशेषत्वादनशनवत् । कथं च तपोविशेषः ? अनशनत्वाच्चतुर्थादिवत् । इतश्चोत्तरगुणो महाव्रतसंरक्षणात् समितिवत् ॥१२३७–१२३८॥

**तध वि तयं मूलगुणो भण्णति मूलगुणपालयं जम्हा ।**
**मूलगुणग्गहणम्मि य तं गहितं उत्तरगुणो[4] व्व ॥१२३९॥**

**तध वि** गाहा । तथापि व्रतिनस्तन्मूलगुण एव शब्द्यते, समस्तमूलगुणान्न-(नु)पालनात् प्राणातिपातविरमणवत् । मूलगुणग्रहणाच्च तदविरुद्धमेव उत्तरगुणवदिति साक्षादनभिधानात् ॥१२३९॥

---

१ °न्तरण° –इति प्रतौ । २ सेसिय° त । ३ °क्खत्त° हे । ४ °ण व्व कोहे ।

जम्हा मूलगुण च्चिय ण होन्ति तव्विरहितस्स पडिपुण्णा।
[८१-प्र०] तो मूलगुणग्गहणे तग्गहणमिहऽत्थतो णेयं ॥११४०॥
जति मूलगुणो मूलव्वतोवकारि त्ति तं तवादीया।
तो सव्वे मूलगुणा जति त्र ण ते[1] तं पि मा होतू[2] ॥१२४१॥
सव्वव्वतोवकारिं[3] जध तं ण तधा तत्रातयो वीसुं।
जं ते तेणुत्तरिया होंति गुणा तं च मूलगुणो[4] ॥१२४२॥

जम्हा गाहा। जति गाहा। सव्वव्वतो० गाहा। आह-यदि मूलगुणोपकारित्वान्मूलगुणः। नन्वेवं तपः समितयो भावनादयश्च मूलगुणाः प्राप्नुवन्ति। उतैते मूलगुणोपकारित्वेऽपि न मूलगुणास्तदपि मा भूत्; भवतैव चापदिष्टं—महाव्रतसंरक्षणादुत्तरगुणः समितिवदिति। तदिदानीं तत्संरक्षणादेव मूलगुण इति विरुद्धम्। उच्यते—किमत्र विरुद्धम्? ननूक्तमुभयधर्मकमिदं—व्रतिनो मूलगुणोऽव्रतस्योत्तर इति। यथा चास्य सर्वव्रतोपकारिता, न तथा तपोविशेषादीनामतोऽभिहितं व्रतिनस्तद् मूलगुणः सर्वव्रतोपकारित्वात् प्राणातिपातादिविरमणवत्। इहैकमपि व्रतमन्तरेणाव्रतत्वात् पृथक्प्राणातिपातादीनां सर्वव्रतोपकारित्वाद्यथा मूलगुणास्तथा रात्रिभोजनविरमणशून्यस्यापि [अ?]व्रतत्वात् सर्वव्रतोपकारि तत्। ततश्च मूलगुण इति ॥१२४०-१२४२॥

ईसिं सयराहं वा संपाते वा परीसहादीणं।
जलणातो संजलणा णाऽहक्खातं[5] तदुदयम्मि ॥१२४३॥

ईसिं गाहा। ईषत् सपदि परीषहादिसंपातज्वलनात्तदुदयेऽथाख्यातलाभो [न] भवति ॥१२४३॥

अकसायमऽहक्खातं[6] जं संजलणोदए णँ तं तेणं।
लब्भति लद्धं व पुणो भस्सति सव्वं ततुदयम्मि[7] ॥१२४४॥

अकसा० गाहा। अकषायमथाख्यातं यतस्तदुदये न लभ्यते, पूर्वलब्धमपि च प्रच्यवते ॥१२४४॥

ण हु णवरिमधक्खातोवघातिणो सेसचरणदेसं पि।
घातेन्ति ताणमुदए होंति जतो सातियारं तं ॥१२४५॥

ण हु गाहा। नाऽथाख्यातमात्रोपघातिन एव संज्वलनाः। किं तर्हि? शेषचारित्रदेशोपघातिनोऽपि, तदुदयेऽतिचारात्। ॥१२४५॥ यस्मादाह—

१ तो को हे। २ होज्जा को हे। हुज्जा त। ३ °वकारी को। °वगारी° हे। ४ °गुणा त। ५ °णावक्खा° जे। ६ °मवक्खा° जे। ७ °दये तयं तेण त। ८ °णो कस्सति जे। भण्णइ त।

**सव्वे [1]वि य अतियारा संजलणाणं तु उदयतो होंति ।**
**मूलच्छेज्जं पुण होति बारसण्हं कसायाणं ॥११२॥१२४६॥**

**अतियारा [2]च्छेतंता सव्वे संजलणहेतवो होन्ति[3] ।**
**सेसकसायोदयदो मूलच्छेज्जं वतारुहणं ॥१२४७॥**

**सव्वे वि** गाहा [२] । इह सर्वेऽतीचाराश्च्छेदपर्यन्तप्रायश्चित्तशोध्याः संज्वलनोदयतः । छेदंतेण पच्छित्तेण अन्तो येसिं ते छेदंता, एकस्यान्तशब्दस्य लोपः । शेषकषायाणां द्वादशानामुदये मूलच्छेदः[5] समस्तचारित्रोच्छेद इत्यर्थः । तद्विशुद्धये च प्रायश्चित्तं पुनः व्रतानुरोपणम् ॥१२४६–१२४७॥

**[८१–प्रा०] अधवा संजममूलच्छेज्जं ततियकलुसोदये णियतं ।**
**सम्मत्तातीमूलच्छेज्जं पुण बारसण्हं पि ॥१२४८॥**

**अधवा** गाहा । अथवा द्वादशानामुदये मूलच्छेद्यमिति सम्भवतः समायोजनीयम् । तत्र प्रत्याख्यानावरणोदये तावन्मूलच्छेद्यं चारित्रापगमः, सम्यक्त्वादिमूलच्छेद्यं तु द्वादशानामप्युदये ॥१२४८॥

**मूलच्छेज्जे सिद्धे पुव्वं[7] मूलगुणघातिगहणेणं ।**
**इध कीस पुणो [8]ग्गहणं अतियारविसेसणत्थं ति ॥१२४९॥**

**पयतमधक्खातं ति य अतियारे तम्मि चेव मा जोए ।**
**तो मूलच्छेज्जमिणं सेसचरित्ते णियोएति ॥१२५०॥**

**मूल०** गाहा [२] । आह–मूलगुणघातिनामुदये न मूलगुणलाभ इत्युक्तं तदुदये एव मूलच्छेद्यमपि सिद्धम्[9] । किमिह मूलच्छेद्यग्रहणम् ? उच्यते–अतीचारविशेषणार्थमिदं यतः "संजलणाणं उदये ण लभति चरणं अधक्खातं" [गा० १२३५]इत्यथाख्यातम् । प्रकृतमनुवर्त्तते ततः "सव्वे वि य अतियारा संजलणाणं तु उदयतो होंति" [गा० १२४६]त्ति प्रकृतस्याथाख्यातस्यैवातिचाराः स्युरतो मूलच्छेद्यग्रहणात् पुनःशब्दविशेषणाच्च शेषचारित्रे गम्यन्ते–यस्यैव मूलच्छेद्यं तस्यैवातीचारा अपीति ॥१२४९–५०॥

**बारसविधे कसाए खविते उवसामिते व जोएहिं ।**
**लब्भति चरित्तलंभो तस्स विसेसा इमे पंच ॥११३॥१२५२॥**

१ विय हे । २ °रा छे° को हे । ३ होंती को । ४ शब्दालो°–इति प्रतौ । ५ दां स°–इति प्रतौ । ६ °येतु–इति प्रतौ । ७ पुव्वद्धे मू° को हे । ८ गह° को हे । ९ °द्धे–इति प्रतौ ।

**खविते उवसमिते वा[1] वासद्देणं खयोवसमिते वा ।**
**बारसविधे कसाए पसत्थझाणादिजोएहिं[2] ॥१२५२॥**

**बारस०** गाहा । **खविते** गाहा । वाशब्दात् क्षयोपशमिते वेति । ॥१२५१–५२॥

**खीणा णिव्वातहुतासणो व्व[3] छारपिहितो[4] व्व उवसंता ।**
**दरविज्झातविहाडितजलणोवम्मो[5] खयोवसमो[6] ॥१२५३॥**

**खयतो वा समतो व खयोवसमतो व तिण्णि लब्भंति ।**
**सुहुमाऽधक्खाताइं खयतो[7] समतो व णऽण्णत्तो ॥१२५४॥**

**खीणा** गाहा । **खय०** गाहा । तत्र सामायिकादेस्त्रयस्यापि लाभस्तावत् प्रायः क्षयोपशमात्, श्रेणिद्वयेऽवतिष्ठमानस्य प्राक् सूक्ष्मसम्परायलाभाद्, उपशमात् क्षयाद्वा सम्भवतः प्राग्लाभस्साम्प्रतो वेति श्रेणिद्वयान्तर्भावात् तदपेक्षत्वाद्वा सूक्ष्मसम्पराययथाख्याते न क्षयोपशमात् ॥१२५३–५४॥

**लब्भति चरित्तलाभो खयातितो बारसण्ह णियमोऽयं ।**
**[८२–प्र०]ण तु पंचविधणियमणं पंच विसेसे[9]त्ति सामण्णं ॥१२५५॥**

**जं तिण्णि बारसण्हं लब्भंति खयातितो कसायाणं ।**
**सुहुमं पण्णरसण्हं चरिमं पुण सोलसण्हं पि ॥१२५६॥**

**लब्भति** गाहा । **जं** गाहा । द्वादशानां क्षयादितश्चारित्रं चारित्रलाभ एवेति नियमः, [न] पञ्चविधस्यापीति । किं तर्हि ? यतस्ततः सम्भवतो लब्धस्येमे विशेषाः पञ्चेति । सामान्यमिदम्, यतः सामायिकादित्रयं द्वादशानां क्षयादितो लभ्यते, सूक्ष्मसम्परायं पञ्चदशानां संज्वलनलोभवर्जानां, अथाख्यातं षोडशानामपीति ॥१२५५–५६॥

**सामायिय त्थ पढमं[10] च्छेतोवट्ठावणं भवे[11] बितियं ।**
**परिहारविसुद्धीयं सुहुमं तध संपरायं[12] च ॥११४॥१२५७॥**

**तत्तो य अधक्खातं खातं सव्वम्मि जीवलोगम्मि ।**
**जं चरितूण सुविहिता वच्चन्तेऽ[13]यरामरं ठाणं ॥११५॥१२५८॥**

---

१ °समिए वास° हे । २ °हिं को हे । ३ व हे । ४ °हिउ व्व को । °हिय व्व हे । ५ °म्मा को हे त । ६ °मा को हे त । ७ °महवक्खा हे । ८ खयओवस° त । ९ °स त्ति को हे । १० °मं छे° को हे । ११ बीयं को हे त । १२ °रागं जे । °रायम्मि ॥ त । १३ वच्चन्ति अणुत्तरं मोक्खं जे ।

**सव्वमिणं सामइयं छेदातिविसेसतो पुण[2] विभिण्णं ।**
**अविसेसितसामइयं[3] [4]थितमिह सामण्णसण्णाए ॥१२५९॥**

**सामा०** गाहा । **तत्तो य** गाहा । **सव्व०** गाहा । सर्वमप्येतत् [अ]विशेषतः सामायिकम् । एतदेव हि छेदादिविशेषैर्विशेष्यमाणम् अर्थतः संज्ञातश्च नानात्वं लभते । तत्राद्यं विशेषणाभावात् सामान्ये संज्ञायामेवावतिष्ठते सामायिकमिति ॥१२५७–५९॥

**सावज्जजोगविरति त्ति, तत्थ सामाइयं दुधा तं च ।**
**इत्तरमावकधं [5]चिय पढमं पढमंतिमजिणाणं ॥१२६०॥**
**तित्थेसु[6]मणारोवितवतस्स सेहस्स थोवकालीयं ।**
**सेसाणमावकधियं तित्थेसु विदेहगाणं च ॥१२६१॥**

**सावज्ज०** गाहा । **तित्थेसु०** गाहा । तत्र सावद्ययोगविरतिमात्रं सामायिकम् । तच्चेत्वरं यावत्कथिकं च । तत्र स्वल्पकालमित्वरं तदाद्यचर[7]माहत्तीर्थयोरेवानारोपितव्रतस्य शैक्षस्य । यावत्कथाऽऽत्मनस्तावत्कालं यावत्कथं यावज्जीवमित्यर्थः । यावत्कथमेव यावत्कथिकं 'आवकहियं' ति प्राकृताभिधानात् तन्मध्यमार्हत्तीर्थेषु विदेहवासिनां चेति ॥१२६०–६१॥

**णणु जावज्जीवाए इत्तिरियं पि गहितं मुयंतस्स ।**
**होति पतिण्णालोवो जधावकहियं मुयंतस्स ॥१२६२॥**

**णणु** गाहा । आह—ननु 'करोमि भदन्त सामायिकं यावज्जीवम्' इतीत्वरमपि [8]प्राग्वद् यावदायुरागृहीतमुपस्थापनायामुत्सृजतः प्रतिज्ञालोपो यावत्कथिकपरित्यागवत् ॥१२६२॥

**णणु भणितं सव्वं चिय साम[9][८२–द्वि०]इयमिणं विसुद्धितो भिण्णं ।**
**सावज्जविरतिमइयं को वतलोवो विसुद्धीए ॥१२६३॥**

**णणु** गाहा । उच्यते—ननूक्तं सर्वमेवेदं [अ]विशेषतः सामायिकं सावद्ययोगविरतिसामान्यात् छेदादिविशुद्धिविशेषैर्विशेष्यमाणमन्यथात्वं लभते । को हि विशुद्ध्यन्तरमाश्रयतः प्रतिज्ञालोपः ? ॥१२६३॥

---

१ सामइए को । सामाइयं हे । २ पुणो भिन्नं को हे । ३ °सियमाइमयं हे । ४ °ठि° को हे त । ५ पिय जे । ति य हे त । ६ °सुसमारो° त । ७ °चरणमर्हती°–इति प्रतौ० । ८ प्राग्वादायुरापुराग्र°–इति प्रतौ । ९ सामा° को हे ।

उण्णिक्खमतो भंगो जो पुण तं चिय करेति सुद्धतरं ।
सण्णामेत्तंविसिट्ठं सुहुमं पित्र तस्स को भंगो ? ॥१२६४॥

उण्णि० गाहा । प्रव्रज्यापरित्याग एव तद्भङ्गः स्यात् । यः पुनस्तदेव शुद्धतरमापादयति संज्ञामात्रविशिष्टमत्र कः प्रतिज्ञालोपः ? सूक्ष्मसम्परायोपादानवत् । यथा यावत्कथं सामायिकं विशुद्धिविशेषात् सूक्ष्मसम्परायसामायिकावाप्तौ न लुप्यते तथेत्वरमपि छेदोपस्थापनविशुद्धिविशेषादिति ॥१२६४॥

परियायस्सुच्छेतो अत्तोवट्ठावणं वतेसुं च ।
छेतोवट्ठावणमिह तमणतियारेतरं दुविधं ॥१२६५॥

परि० गाहा । यत्र पूर्वपर्यायस्य छेदो महाव्रतेषु चोपस्थापनमात्मनस्तच्छेदोपस्थापनमुच्यते । तच्चानतिचारमितरच्च सातिचारमित्यर्थः ॥१२६५॥

सेहस्स णिरतियारं तित्थंतरसंकमे व तं होज्ज ।
मूलगुणघातिणो सातियारमुभयं च ठितकप्पे ॥१२६६॥

सेहस्स गाहा । तत्रानतिचारमित्वरसामायिकस्य यदारोप्यते, यद्वा तीर्थान्तरप्रतिपत्तौ यथा पार्श्वस्वामितीर्थाद्वर्द्धमानस्वामितीर्थं संक्रमतः । मूलगुणघातिनो यत्पुनर्व्रतारोपणं तत्सातिचारम् । उभयं चैतत् स्थितकल्पे नेतरत्र ॥१२६६॥

परिहारेण विसुद्धं सुद्धो व तओ जहिं विसेसेणं ।
तं परिहारविसुद्धं परिहारविसुद्धियं णाम ॥१२६७॥

परिहार० गाहा । परिहारो यस्तपोविशेषस्तेन विशुद्धं परिहारविशुद्धम्, परिहारो वा विशेषेण विशुद्धो यत्र तत्परिहारविशुद्धम्, परिहारविशुद्धकं चेति स्वार्थप्रत्ययोपादानम् ॥१२६७॥

तं दुविकप्पं णिव्विस्समाणणिव्विट्ठकाइयवसेणं ।
परिहारियाऽणुपरिहारियाणं कप्पट्ठितस्स वि य ॥१२६८॥

तं दुवि० गाहा । तदपि द्वेधा निर्विश्यमानकं निर्विष्टकायिकं च । तत्र निर्विश्यमानमासेव्यमानं प्राप्यमाणं चेति । अथवा तदनुष्ठातारो निर्विश्यमानकास्तत्सहयोगादितस्तदपि निर्विश्यमानकम् । निर्विष्टः कायो यैस्ते निर्विष्टकायाः, स्वार्थिक-

१ °मित्त° को हे । २ °स्सच्छे° त । °स्सय छे° हे को । ३ जत्तो° जे । जत्थो° को हे त । ४ °कर° त । ५ च हे । न को । ६ वा हे । ७ °रियस्स क° को हे त ।

प्रत्ययोपादानान्निर्विष्टकायिकाः, तत्सह्योगादितो निर्विष्टकायिकम्, तस्य च वोढारः परिहारिकाश्चत्वारः, अनुपरिहारिकाश्चत्वारः, कल्पस्थित[१]श्चेति नवको गणः। तत्र परिहारिकाणां निर्विश्यमानकमनुपरिहारिकाणां निर्विष्टकायिकं कल्पस्थितस्य च ॥१२६८॥

**परिहारो पुण परिहारियाण सो गिम्हसिसिरवासासु ।**
**पत्तेयं तिविकप्पो चउत्थयाती तवो णेयो ॥१२६९॥**

**गिम्हसिसिरवासासुं च[२]उत्थादीणि बारसंताइं ।**
**अड्ढोक्कंतीय[३] जहण्णम[४]ज्झिमुकोसयतवाणं ॥१२७०॥**

**परि०** गाहा। **गिम्ह०** गाहा। परिहारिकाणां परिहारो जघन्यादिभेदेन चतुर्थादि त्रिविधं तपः ग्रीष्म-शिशिर-वर्षासु यथासङ्ख्यम्—जघन्यं चतुर्थं षष्टमष्टमं च, मध्यमं षष्ठमष्टमं दशमं च, उत्कृष्टमष्टमं दशमं द्वादशं च ॥१२६९-७०॥

**सेसा तु णियतभत्ता पा[८३-प्र०]यं भत्तं च ताणमायामं ।**
**होंति णवण्ह[५] वि णियमा न[६] कप्पए सेसयं सव्वं ॥१२७१॥**

**सेसा** गाहा। शेषाः पञ्चापि नियमभक्ताः प्रायेणेति न तेषामुपवस्तव्यमिति नियमः। उक्तं च—सर्वेषामाचाम्लमेव ॥१२७१॥

**परिहारियाणुपरिहारियाण कप्पट्ठियस्स वि य भत्तं ।**
**छच्छम्मासा उ तवो अट्ठारसमासिओ कप्पो ॥१२७२॥**

**परि०** गाहा। एवं परिहारिकाणां षण्मासं तपः। तत्प्रतिचरणं चानुपरिहारिकाणाम्। ततः पुनरितरेषां षण्मासं तपःप्रतिचरणं चेतरेषां निर्विष्टकायानामित्यर्थः। कल्पस्थितस्यापि षण्मासमित्येवं मासैरष्टादशभिरेष कल्पः परिसमापितो भवति ॥१२७२॥

**कप्पसमत्तीइ[७] तयं जिणकप्पं वा उवेंति गच्छं वा ।**
**ठियकप्पे च्चिय नियमा दो पुरिसजुगाइं ते [८]होज्जा ॥१२७३॥**

**कप्प०** गाहा। कल्पपरिसमाप्तौ यत्र या गतिरेषां भूयस्तमेव कल्पं प्रतिपद्येरन्—जिनकल्पं वा गणं वा प्रत्यागच्छेयुः। स्थितकल्पे चैते पुरुषयुगद्वयं भवेयुः नेतरत्रेति ॥१२७३॥

---

१ तस्येति-इति प्रतौ। २ °त्थयाईणि को हे त। ३ °तीइ को त। अड्ढापक्कंतीए हे। ४ °मज्झ° को। ५ °ण्हं हे। ६ न कप्पए इत्यारभ्य च्चियनियमा-[गा०१२७३] इत्यन्तं जेप्रतौ नास्ति। ७ °तीए को हे। ८ होंति को हे। हुंति त।

[1]कोधातिसंपराओ तेण जतो संपरीति संसारं ।
तं सुहुमसंपरायं[2] सुहुमो जत्थावसेसो सो ॥१२७४॥

**कोधाति०** गाहा । संपर्येति संसारमेभिरिति साम्परायाः क्रोधादयः, लोभांशावशेषतया सूक्ष्मसम्परायम् ॥१२७४॥

[3]सेढी विलग्गतो तं विसुज्झमाणं ततो चयंतस्स ।
तध संकिलिस्समाणं परिणामवसेण विण्णेयं ॥१२७५॥

**सेढी** गाहा । तच्च श्रेणिमारोहतो विशुद्ध्यमानकमुच्यते । ततश्च प्रच्यवमानस्य संक्लिश्यमानकमिति ॥१२७५॥

अधसद्दो जाधत्थे [4]आङोभिविधीयं[5] कधितमक्खातं ।
चरणमकसायमुदितं तमहक्खातं[6] जधक्खातं ॥१२७६॥

**अध०** गाहा । अथेत्ययं याथातथ्येनाभिविधिना वा ख्यातमकषायत्वादनतिचारमित्यर्थः ॥१२७६॥

तं दुविकप्पं छतुमत्थकेवलिविधाणतो पुणेक्केक्कं ।
खयसमजसजोगाजोगि[7][8]केवलिविधाणतो दुविधं ॥१२७७॥

**तं दुवि०** गाहा । तच्च द्विविधं छद्मस्थ-केवलिविशेषात् । पुनरेकैकं द्विविधं क्षपकोपशमकविशेषात्[9], संयोगाऽयोगविशेषाच्चेति[10] ॥१२७७॥

भणितं खयोवसमतो अधुणोवसमेणं[11] लभति जध जीवो ।
सामइयं[12] तं भणति [८३-द्वि०] सो जं च खयोवसमपुव्वो ॥१२७८॥

**भणितं** गाहा । क्षयोपशमात् सामायिकलाभोऽभिहितः । अधुनोपशमा[13]दुपदिश्यते यतश्चासौ तत्पूर्व एवेति ॥१२७८॥

अधवा खयोवसमतो चरणतियं उवसमेण खयतो वा ।
सुहुमाधक्खाताइं तेणोवसमक्खया कमसो ॥१२७९॥

**अधवा** गाहा । अथवेह क्षयोपशमादुपशमात् क्षयाद्वा सामायिकत्रयमुक्तम् । सूक्ष्मसम्परायथाख्याते तूपशमात् क्षयाद्वा । तेन सामायिकलाभक्रमनियमादुभयलाभे चोपशमपूर्वत्वात् क्षयस्योपशमावसरः ॥१२७९॥

---

१ कोवा° को हे त । २ °रागं जे । ३ सेढिं को हे त । ४ अङो जे । आङो को । ५ विहीए को हे । विधीइ त । ६ तमवक्खा° जे । । तहमक्खा° को । ७ खयवस° हे । ८ °जोगि° त । ९ क्षायोपशमकावि० इति प्रतौ । १० संयो-इति प्रतौ । ११ णं को हे । १२ सामा° त । १३ °पगमा°-इति प्रतौ ।

**सेढिगतस्स व[1] सुहुमं सेढितो णिग्गतस्सऽह[2]क्खातं।**
**सा[3]ओवसमक्खयियां[4] पढमं तत्तो[5]वसमसेढी ॥१२८०॥**

**सेढि०** गाहा। अथवा श्रेण्यन्तर्भाविनः सूक्ष्मसम्परायमुक्तम्, तद्विनिर्गतस्य यथाख्यातम्, अतः श्रेणिलाभाच्चोपशमश्रेणिरादौ। अतस्सैव तावदपदिश्यते ॥१२८०॥

**अण दंस णपुंसग[6]इत्थिवेदछक्कं च पुरिसवेतं च।**
**दो दो एगंतरिते सरिसे सरिसं उवसमेति ॥११६॥१२८१॥**
**उवसामगसेढीए पट्ठवयो अप्पमत्तविरतो तु[7]।**
**पज्जवसाणे सो[8] वा होती पमत्तो अविरतो वा ॥१२८२॥**

**अण** गाहा [२]। इह मोहनीयस्यैवोपशमो नान्यस्य कर्मणः। तदुपशमश्रेणिप्रस्तोता चाप्रमत्तसंयत एव। तदन्ते त्वप्रमत्तप्रमत्तासंयतानामन्यतमः ॥१२८१–८२॥

**अण्णे भणंति अविरयदेसपमत्त[9]ऽप्पमत्तविरताणं।**
**अण्णतरो पडिवज्जति दंसणसमणम्मि तु णिय[10]ट्टी ॥१२८३॥**

**अण्णे** गाहा। अन्ये त्वाहुः–असंयतादीनामन्यतमः प्रतिपद्यते। स एव शमितदर्शनमोहनो निवर्त्तीति व्यपदिश्यते ॥१२८३॥

**भवमणुबन्धंति जतोऽणंतमणंताणुबंधिणोऽणे[11] त्ति।**
**ते चत्तारि वि समयं स[12]मेति अंतोमुहुत्तेणं ॥१२८४॥**

**भवम०** गाहा। अनन्तभवमनुबद्धुं शीलमेषामित्यनन्तानुबन्धिनः, अणग्रहणो वा गृह्यन्ते(?)। तानन्तर्मुहूर्तेन युगपत् प्रशस्तध्यानः श[13]मयति ॥१२८४॥

**तत्तो य दंसणतियं ततोऽणुदिण्णं जहण्णतरवेतं।**
**तत्तो[14] बितियं छक्कं ततो य वेतं सयमुदिण्णं ॥१२८५॥**

**ततो** गाहा। ततो मिथ्यादर्शनादित्रयम्, ततो वेदत्रयस्यानुदीर्णयोरधमतरम्, द्वितीयमतः, ततो हास्य-रत्यरति-शोक-भय-जुगुप्साषट्कं ततोऽनुभूयमानवेदम्, तद्यथा–पुमानादौ नपुंसकवेदम्, ततः स्त्रीवेदम्, ततो हास्यादिषट्कम्, ततः पुरुषवेदम्; [15]स्त्रीवेदकः प्राङ् नपुंसकवेदं ततः पुरुषवेदं ततः षट्कं ततः स्त्रीवेदम्; नपुंसकः प्राक् स्त्रीवेदं ततः पुरुषवेदं ततः षट्कं ततो नपुंसकवेदमिति ॥१२८५॥

---

१ °स्स सु° **हे**। २ °स्स वक्खा° **जे**। ३ सा योव° **जे**। सा उव° **हे**। ४ °क्खयओ **त को हे**। ५ तत्थोव° **को हे त**। ६ पुंसित्थीवे° **त को**। पुंसत्थी **हे**। ७ वा **त**। ८ से **त**। ९ °त्ताऽपम° **को हे त**। १० निवट्टी **जे**। ११ °णो तेणं **को**। १२ समिंति **त**। १३ समयन्ति–इति प्रतौ। १४ बीयं **हे**। विरयं **त**। १५ 'ततः' इत्यधिकं प्रतौ।

**मज्झिल्लकसायाणं [८४-प्र०] कोधातिसमाणजातिए दो दो ।**
**एक्केक्केणंतरिते संजलणेणं उवसमेति ॥१२८६॥**

**मज्झिल्ल०** गाहा । अप्रत्याख्यानप्रत्याख्यानावरणा मध्यमकषायाः । तेषां द्वौ द्वौ समानजातीयौ एकतः शमयति, ततः संज्वलनम् । तद्यथा अप्रत्याख्या[नप्रत्याख्या]-नावरणौ क्रोधावेकतः, ततः संज्वलनं क्रोधं ततोऽप्रत्याख्यान-प्रत्याख्यानावरणौ मानावेकतः, ततः संज्वलनं मानम्, एवं मायाद्वयमेकतः, ततः संज्वलनम्; ततो लोभद्वयमेकतः, [ततः] संज्वलनं लोभम्, एषां चोपशा(श)मकालोन्तर्मुहूर्त्त-मुक्तः । समस्तश्रेणिकालोऽप्यन्तर्मुहूर्त्तमेवेति ॥१२८६॥

**संजलणादीण समो जुत्तो संजोयणादयो जे[1] तु ।**
**ते पुव्वं चिय समिता णणु सम्मत्तातिलाभम्मि ॥१२८७॥**

**संजलणा०** गाहा । आह—यतः(अत्र ?)सञ्ज्वलन-हास्यादीनामुपशमो युक्तः, प्रागुदयसद्भावात्, संयोजनादिकषायाणां तु सम्यक्त्वादौ(दि)लाभकाल एव शमित-त्वादयुक्तः ॥१२८७॥

**आसि खयोवसमो सिं समोऽधुणा भणति को विसेसो सिं ।**
**णणु खीणम्मि उदिण्णे सेसोवसमे खयोवसमो ॥१२८८॥**

**आसि** गाहा । उच्यते—सम्यक्त्वादिलाभकाले हि क्षयोपशमोऽभिहितः, अधु-नोपशमो वर्ण्यते । आह—को वाऽनयोः क्षयोपशमोपशमयोर्विशेषः ? उच्यते—ननूदीर्णस्य [क्षयः, अनुदीर्णस्य] चोपशमः क्षयोपशमः ॥१२८८॥

**सो च्चेवं[2] णणूवसमो उदिते खीणम्मि सेसए समिते ।**
**सुहुमोदयता मीसे ण तूवसमिए विसेसोऽयं ॥१२८९॥**

**सो च्चेव** गाहा । आह—ननु स एवोपशमोऽपि, यत्रोदितमुपक्षीणमनुदितं चोपशान्तमिति । उच्यते—क्षयोपशमे ह्युदयोऽप्यस्ति, न त्वसावतिविघाताय, उपशमे तु नोदयः, अयं विशेषः ॥१२८९॥

**वेतेति संतकम्मं खयोवसमिएसु णाणुभावं सो[3] ।**
**उवसंतकसायो पुण वेतेति ण संतकम्मं पि ॥१२९०॥**

१ जो त । २ चेव को हे । ३ से को हे ।

**वेतेति** गाहा। क्षायोपशमिकेष्वनन्तानुबन्धिषु सत्कर्मानुभवति नानुभवककर्म। सत्कर्मेति प्रदेशकर्माऽऽह। उपशान्तकषायस्तु सत्कर्मापि नानुभवति, अयं विशेषः ॥१२९०॥

**संजोयणादियाणं णणूदयो संजतस्स पडिसिद्धो।**
**सच्चमिह सोणुभावं पडुच्च ण पएसकम्मं तु ॥१२९१॥**

**संजो०** गाहा। आह—ननु यतेः संयोजनादिकषायाणामुदयो निषिद्धः। उच्यते—सत्यम्, निषिद्धः। स पुनरनुभवनकर्म प्रति, न प्रदेशकर्म। इह तच्छमनमुपशमः ॥१२९१॥

**भणितं च सुते जीवो वेतेति णवाणुभावकम्मन्ति।**
**जं पुण पदेसकम्मं णियमा वेतेति तं सव्वं ॥१२९२॥**
**णाणुदितं [1]णिज्जीरति णासंतमुदेति जं त[८४-द्वि०]तोऽवस्सं।**
**सव्वं पदेसकम्मं वेदेतुं मुच्चते सव्वो ॥१२९३॥**

**भणितं** गाहा। **णाणु०** गाहा। सूत्रे चोक्तम्—अनुभावकर्मानुभूयते न वा, प्रदेशकर्म तु नियमत एवानुभूयते, यथे(था)ह—"एवं खलु गोयमा! मए दुविहे कम्मे पण्णत्ते। तं जहा—पएसकम्मे य अणुभावकम्मे य, तत्थ णं जं तं पएसकम्मं तं णियमा वेएइ, तत्थ णं जं तं अणुभावकम्मं तं [अत्थेगइया वेएंति]अत्थेगइया णो वेएन्ति।" यतो नानुदितमुपक्षीयते न चाविद्यमानमुदयते[2]। सर्वप्रदेशकर्मानुभूय सर्वो मुच्यते ॥१२९२–३॥

**किध दंसणातिघातो ण होति संजोअणादि वेतयतो।**
**मंदाणुभावताए जधाणुभावम्मि वि कहिंचि ॥१२९४॥**
**णिच्चोदिण्णम्पि[3] जधा सकलचतुण्णाणिणो तदावरणं।**
**ण विघाति मंदताए पदेसकम्मं तधा णेयं ॥१२९५॥**

**किध** गाहा। [**निच्चो०** गाहा]। आह—यदि यतेरपि संयोजनादिकषायोदयः कथमिहताननुभवतो दर्शनादिविघातो न भवति? उच्यते—मन्दानुभावतया न प्रदेशकर्मानुभवनमतिविघातकम्, यथेह क्वचिदनुभवनकर्मापि नातिविघाताय दृष्टम्। तद्यथा—नित्योदितमतिज्ञानावरणादिचतुष्टयं सकलचतुर्ज्ञानिनो न मत्यादिज्ञानविघाताय, मन्दानुभावत्वात्, तद्वत् प्रदेशकर्मापीति ॥१२९४–५॥

**किरियाये[4] कुणति रोगो मंदं पीलं जधाऽवणिज्जंतो।**
**किरियामेत्तकतं चिय पदेसकम्मं तधा तवसा ॥१२९६॥**

---

१ नज्जी त। २ °यतः इति प्रतौ। ३ ण्णम्मि जे। ४ याए को हे।

**किरिया०** गाहा । यथेह रोगो भेषजादिक्रियया विधिवदुपक्रम्यमाणोऽपगच्छन्नातिपीडाकृद् भवति, किन्तु क्रियामात्रकृताबाधहेतुरेव स्यात्, तद्वत् प्रदेशकर्मापि तपसाऽपनीयमानं तपोमात्राबाधहेतुरेव । कथम् ? इह निरयगतिनामादिप्रकृतयो नहि नारकादिभावेन यतिनाऽनुभूयन्ते, न चाननुभूय तद्विनिवृत्तिः, अतोऽवसीयते 'तपसा प्रदेशकर्मणोऽनुभूतिः' इति ॥१२९६॥

**दंसणमोहातीतो भणति अणियट्टिबातरो परतो ।**
**जाव तु सेसो संजलणलोभसंखेज्जभागो त्ति ॥१२९७॥[1]**

**दंसण०** गाहा । स च दर्शनमोहनीयोपशमानन्तरमनिवर्त्तिबादरव्यपदेशं लभते यावत् सञ्ज्वलनलोभसङ्ख्येयभागोऽवतिष्ठते ॥१२९७॥

**तदसंखेज्जतिभागं समए समए समेति एक्केक्कं ।**
**अंतोमुहुत्तमेत्तं तस्सासंखेज्जभागं पि ॥१२९८ ॥**
**लोभाणुं[2] वेतंतो जो खलु उवसामओ वं[3] खवओ वा ।**
**सो सुहुमसंपराओ अहक्खाता ऊणओ किंचि ॥११७॥१२९९॥**

**तद०** गाहा [२] । तस्य च प्रतिसमयमसङ्ख्येयभागमुपशमयन् समस्तमन्तर्मुहूर्त्तेन शमयति, तस्य चासङ्ख्येयभागमप्यणुमनुभवन् सूक्ष्मसम्परायोऽभिधीयते । स चोपशमकः क्षपको वाऽथाख्यातसंयतात् किञ्चिदून इति, लोभाणुशेषत्वात् ॥१२९८–१२९९॥

**उवसामगाधिगारे तस्समभागो त्ति खवगणिद्देसो ।**
**सुहुमसंपरायातीतो[4]ऽहक्खातो होति णिग्गं[८५–प्र०]थो ॥१३००॥**

**उव०** गाहा । इह चोपशमकाधिकारे क्षपकसूक्ष्मसम्परायग्रहणं तत्समानदेशत्वात् सूक्ष्मसम्परायातीतश्चासावुपशमकनिर्ग्रन्थोऽथाख्याताख्यश्च भवति॥१३००॥

**बद्धाउयें[5]पडिवण्णो सेढिगतो वा पसंतमोहो वा ।**
**जति कुणति [6]को वि कालं वच्चति तोऽणुत्तरसुरेसु ॥१३०१॥**

**बद्धाउ०** गाहा । स यदि बद्धायुः प्रतिपद्यते, तदवस्थश्च म्रियते, नियमतोऽनुत्तरविमानवासिषूत्पद्यते । श्रेणिप्रच्युतस्यानियमः ॥१३०१॥

---

१ अत्र को० मुद्रितमूले निम्नाङ्कितं गाथाद्वयमधिकं वर्तते —
दंसणतिगे पसंते करणतिगं कुणइ मोहसमणत्थं ।
आदिदुगंमि विसोही केवलमणियट्टिकरणस्स ॥१३०६॥
संखिज्जइमे तो सेसे लोभोवसमओ कमा कम्मे ।
जाव उ सेसो संजलणलोभसंखेज्जभागो त्ति ॥१३०७॥

२ °णू हे । ३ व्व जे । ४ तो अह° हे । ५ द्धाऊ प० को हे त । ६ कोइ का° को हे ।

**अणिबद्धाऊ होतुं पसंतमोहो मुहुत्तमद्धं तु ।**
**उदितकसायो णियमा णियत्तते सेढिपडिलोमं ॥१३०२॥**

**अणि०** गाहा । अथाबद्धायुरतोऽन्तर्मुहूर्त्तमुपशमनिर्ग्रन्थया(ता)मवाप्योदितकषायः श्रेणिप्रतिलोमं प्रच्यवते ॥१३०२॥

**उवसामं[2] पुवणीता गुणमहता जिणचरित्तसरिसं पि ।**
**पडिवातें[3]न्ति कसाया किं पुण सेसे सरागत्थे ॥११८॥१३०३॥**

**उव०** गाहा । प्रकृताभिधानादुपशम एवौपशामस्तमुपनीताः । केन ? 'गुणमहता' गुणैर्महान् गुणमहान् । कश्चासौ ? उपशम एवौपशमकः, जिनचारित्रतुल्यश्चासौ चारित्रतो यथाख्यातः । तमेवंगुणमपि सन्तं प्रतिपातयन्ति कषायाः । कुतः ? संयमात्, भवे वा भूयः । किं पुनरन्यान् रागवतः ? ॥१३०३॥

**दवदूमितंजणदुमो च्छारच्छण्णोऽगणि व्व पच्चयंतो[4] ।**
**[5]दाएति जह सरूवं तध स कसायोदए भुज्जो ॥१३०४॥**
**तम्मि भवे [6]णेव्वाणं ण लभति उक्कोसतो व संसारे[7] ।**
**पोग्गलपरियट्टद्धं [8]देसूणं कोइ[9] हिण्डिज्जा ॥१३०५॥**

**दव०** गाहा । **तम्मि** गाहा । यथेह दावानलानुरूपितोऽञ्जनद्रुमः पुनरुदकासेचनादिप्रत्ययलाभादङ्कुरादिरूपम्, यथा वेह भस्मच्छन्नोऽनलो वाय्विन्धनादिप्रत्ययतः स्वरूपमुपदर्शयति, अशेषानपनीतो वाऽऽमयोऽपथ्यभोजनादिप्रत्ययतः, [10]तद्वदेवासौ कषायोदयप्रत्ययात् पूर्वस्वरूपम् । कथमिति [ चेत् ], यतो न तस्मिन्नेव [भवे] मुच्यते कदाचित् चोत्कर्षतो देशोनमर्द्धपुद्गलपरिवर्त्तं संसारमनुबध्नीयात् ॥१३०४–५॥

**जति उवसंतकसाओ लभति अणंतं पुणो वि पडिवातिं[11] ।**
**ण हु भे वीससितव्वं[12] थोवे त्ति कसायसेसम्मि ॥११९॥१३०६॥**
**अणथोवं वणथोवं अग्गीथोवं कसायथोवं च ।**
**ण हु भे वीससितव्वं[13] थोवं पि हु तं बहुं होति ॥१२०॥१३०७॥**
**दासत्तं देति अणं अइरा मरणं वणो विसप्पन्तो ।**
**स[८५–द्वि०]व्वस्स दाहमग्गी[14] देन्ति कसाया भवमणंतं ॥१३०८॥**

---

१ °त्तमेत्तद्धं । **को हे** । त्तमित्तद्धं–**त** । २ °मं तुव° **त** । °मं उव° **को हे** । ३ वायंति **को हे त** । ४ °च्चइतो **त** । ५ दावेति **को हे** । ६ निव्वा° **को हे** । ७ °सारो **त** । सारं **को हे** । ८ देसो° **हे** । ९ को व हिं° **जे** । १० तद्वेदेवा –इति प्रतौ । ११ °वायं **को हे त** । १२ थेवे **हे** । १३ थेवं **त हे** । १४ दिंति **हे** ।

[1]ओवसमं सामाइयमुदितं खायियमतो पवक्खामि ।
सुहुममधक्खातम्पि य खयसेढिसमुब्भवं तं च ॥१३०९॥

जति गाहा । अण० गाहा । दासत्तं गाहा । औपशमिकमुक्तम् । इदानीं क्षायिकमुच्यते । सूक्ष्मसम्परायमथाख्यातं च । क्षयश्रेणिप्रत्ययं चैतत् । अतस्तामधुना वक्ष्यामः ॥१३०६–१३०९॥

अण-मिच्छ-मीस-सम्मं अट्ठ [2]णपुंसित्थिवेतछक्कं च ।
[3]पुंमवेतं च खवेती कोधायीए संजलणे य ॥१२१॥१३१०॥

पडिवत्तीए अविरतदेशपमत्तें[4]ऽप्पमत्तविरताणं ।
अण्णतरो पडिवज्जति सुद्धज्झाणोवगतचित्तो ॥१३११॥

अण० गाहा । पडि गाहा । क्षयश्रेणिप्रतिपत्तावसंयतादीना[म]न्यतमः शुद्धध्यानार्पितमनाः प्रतिपद्यते[5] । तत्रोत्तमसंहननः पूर्वविदप्रमत्तः शुक्लध्यानोपगतोऽपि प्रतिपद्यते, शेषा धर्मध्यायिनः ॥१३१०–११॥

पढमकसाए समयं खवेति अंतोमुहुत्तमेत्तेणं ।
तत्तो च्चिय मिच्छत्तं ततो य मीसं ततो सम्मं ॥१३१२॥

पढम० गाहा । एवं तत्रादावन्तर्मुहूर्त्तेनानन्तानुबन्धिनो युगपत् क्षपयति, ततो मिथ्यादर्शनं च, ततः सम्यग्मिथ्यादर्शनम्, ततः सम्यग्दर्शनम् ॥१३१२॥

बद्धाऊ पडिवण्णो पढमकसायक्खए जति मरेज्ज ।
[6]तो मिच्छत्तोदयतो [7]चिणेज्ज भुज्जो ण खीणम्मि ॥१३१३॥

बद्धाऊ गाहा । यदि कथञ्चिद्बद्धायुरेतां प्रतिपद्यतेऽनन्तानुबन्धिक्षये चोपरमेदतस्तान् कदाचिन्मिथ्यादर्शनोदयात् पुनरुपचिनुयान्न क्षीणमिथ्यादर्शनः॥१३१३॥

तम्मि मतो जाति दिवं तप्परिणामो य सत्तए खीणे ।
उवरयपरिणामो पुण पच्छा [8]णाणामतिगतीओ ॥१३१४॥

तम्मि० गाहा । तत्र चोपरतोऽवश्यमेव देवेषूपपद्यते । सप्तकपरिक्षये च तदनुपरतपरिणामस्तु तदानीमेव काले न चोपरमन्, नानामतित्वान्नानागतिः॥१३१४॥

---

१ उवसम्मं त । २ °पुंसत्थि हे । ३ पुंवे° त । ४ °त्ताऽप° को हे । ५ °द्यन्ते–इति प्रतौ । ६ ते जे । ७ विणे° जे त । विणि हे । ८ णाणागतिमतीओ जे । णाणामईगतिओ त । मइग° को मइगइ° हे ।

**खीणम्मि दंसणतिए किं होतु तओ[2] त्तिदंसणातीतो ।**
**भणति सम्मद्दिट्ठी सम्मत्तखए कतो सम्मं ॥१३१५॥**

**खीणम्मि** गाहा । आह—मिथ्यादर्शनादित्रयपरिक्षये किमसावदर्शनो जायते ? नेत्युच्यते । सम्यग्दृष्टिरसौ ॥ आह—सम्यग्दर्शनपरिक्षये कुतः सम्यग्दृष्टि[ः ? अ]तः— ॥१३१५॥

**णिव्वलितमतणकोद्दव[८६ प्र०]रूवं मिच्छत्तमेव सम्मत्तं ।**
**खीणं ण तु जो भावो सद्दहणालक्खणो तस्स ॥१३१६॥**

**णिव्वलि०** गाहा । उच्यते—निर्मदनीकृतकोद्रवोदाहरणा[त्] मिथ्यादर्शनमेवापनीतमिथ्यास्वभावं सम्यग्दर्शनमुच्यते । तदस्योपक्षीणम्, न तु यः तत्त्वश्रद्धानरूपः परिणामः ॥॥१३१६॥

**सो तस्स विसुद्धतरो जायति सम्मत्तपोग्गलक्खयतो ।**
**दिट्ठी व्व सण्हसुद्धब्भपडलविगमे मणुस्सस्स ॥१३१७॥**

**सो तस्स** गाहा । स तस्य तत्त्वश्रद्धानपरिणामोपनीतमिथ्यास्वभावः सम्यक्त्वपुद्गलपरिक्षयाच्छुद्धतरो जायते तदावरणकत्वे तदपगमात्, इह यद्यस्यावरणं तत्तदपगमेऽतिशयतः शुद्धिमाप्नोति यथा पुंसः श्लक्ष्णाभ्रपटलापगमे चक्षुर्दर्शनम् ॥१३१७॥

**जह सुद्धजलाणुगतं वत्थं सुद्धं जलक्खए सुतरं ।**
**सम्मत्तसुद्धपोग्गलपरिक्खए दंसणं ऽपेवं ॥१३१८॥**

**जह०** गाहा । यथा चेह सुधौतसंवरमुदकानुगतमशेषोदकशोषाच्छुद्धतरं जायते तद्व[द्] दर्शनावरणमपनीतमिथ्यामलमपि क्षायोपशमिकसम्यग्दर्शनाशेषशुद्धपुद्गलजलापगमाच्छुद्धतरं जायते ॥१३१८॥

**[11]सेसं णाणावगमे सुद्धतरं केवलं जधा णाणं ।**
**तध खाइयसम्मत्तं खयोवसमसम्मविगमम्मि ॥१३१९॥**

**सेसं[13]** गाहा । यथेह मत्यादिज्ञानापगमेऽपि क्षायिकज्ञानान्तरसद्भावादज्ञो न भवति, तद्वत् क्षायोपशमिकसम्यग्दर्शनेऽसत्यपि क्षायिकसम्यग्दर्शनान्तरसद्भावान्नादर्शनः ॥१३१९॥

---

१ होइ को हे त । २ तिदं° को हे त । ३ °त्तक्ख° हे । ४ °लिम° जे । ५ सुण्ह° त । ६ पड° को हे त । ७ मणूस° को हे त । ८ चेवं त । ९ °सपर°—इति प्रतौ । १० °णसोपनी°—इति प्रतौ । ११ इतः पूर्वमेका गाथा कोमुद्रितमूले अधिका । सा तु कोट्याचार्यैर्न गृहीता । तद्यथा—

तम्मि य तइय चउत्थे भवंमि सिज्झंति खइयसमत्ते ।
सुरनरयजुगलिसु गई इमं तु जिणकालियणराणं ॥१३२९॥

१२ णाणोव° को । १३ सेस० गाहा ।—इति प्रतौ ।

**णिव्वलितमतणकोद्दवभत्तं [1]तेल्लातिमीसितं मदए ।**
**ण तु सोऽवायो णिव्वलितमीसमदकोद्दवच्चाए ॥१३२०॥**
**तध सुद्धमिच्छसम्मत्तपोग्गला मिच्छमीसिता मिच्छं ।**
**होज्ज परिणामतो वा सोऽवायो [2]खाइए णत्थि ॥१३२१॥**

**णिव्व०** गाहा । **तध०** गाहा । यथेह निर्मदनीकृतकोद्रवोदनस्तैलादिसंसर्गप्रत्ययात् पुनर्मदयेन्नाऽप्रत्ययतः । न त्वसावपायोऽस्ति मदनीयार्द्धशुद्धकोद्रवत्यागे । तथापनीतमिथ्यात्वभावाः क्षायोपशमिकसम्यग्दर्शनपुद्गलाः पुनः प्रत्ययतो मिथ्यात्वभावमापद्येरन्नाऽप्रत्ययतः । न त्वसावपायोऽस्ति समस्तदर्शनमोहनीयपरिक्षये क्षायिकस्येति ॥१३२०–२१॥

**बद्धायू पडिवण्णो णियमा खीणम्मि सत्तए ठाति ।**
**इतरो[3] अणुवरतो च्चिय सयलं सेढिं समाणेति ॥१३२२॥**

**बद्धायू०** गाहा । स यदि बद्धायुः प्रतिपद्यते ततोऽनन्तानुबन्ध्यादिप्रकृतिसप्तकपरिक्षये नियमतोऽवतिष्ठते । अबद्धायुरनुपरत एव समस्तां श्रेणीं समापयति । ॥१३२२॥

**बितिअततिए कसाए अट्ठारंभेति समयमेसिं च ।**
**खमयं[4] [5]विमज्झभागं पयंडीयो सोलस[6] खवेति ॥१३२३॥**
**णरयतिरिया[८६–द्वि०]णुपुव्वीगतीओ[7] चत्तारि [8]चातिजातीओ ।**
**आतावं उज्जोवं थावर साधारणं सुहुमं ॥१३२४॥**

**तिण्णि महाणिद्दाओ अट्ठयंसेसं[9] ततोऽणुदिण्णाणं ।**
**वेताण जहण्णतरं तत्तो [10]बितियं ततो छक्कं ॥१३२५॥**

**तत्तो य ततियवेतं एक्केक्कं तो कमेण संजलणं ।**
**सव्वत्थ सावसेसे मज्झिल्ले लग्गति पुरिल्ले ॥१३२६॥**

**बितिअ०** गाहा । **णरय०** गाहा । **तिण्णि०** गाहा । **तत्तो** गाहा । दर्शनमोहनीयक्षयानन्तरमप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकं युगपदारभते । एषां च विमध्यभागं क्षपयन्निमाः षोडशप्रकृतीः क्षपयति । तद्यथा निरयगतिनाम निरया-

---

१ तिल्ला° **हे** । २ खइए **हे** । ३ °रोणु° **हे** । ४ खवयं **त** । ५ खमयम्मि मज्झ **को हे** । ६ पयडिओ सोलसं–**हे** । ७ °गईउ **को** । ८ °रि आदि° **को** । ९ अट्ठमसे° **को हे त** । १० बीयं **को हे त** ।

नुपूर्वीनाम तिर्यग्गतिनाम तिर्यगानुपूर्वीनाम, आदिजातयश्चतस्रः—एकेन्द्रियजातिनाम द्वीन्द्रियजातिनाम त्रीन्द्रियजातिनाम चतुरिन्द्रियजातिनाम, आतपनामोद्द्योतनाम, स्थावरनाम, साधारणनाम, सूक्ष्मनाम, तिस्रो महानिद्राः—निद्रानिद्रा प्रचलाप्रचला स्त्यानर्द्धिमिति, ततोऽप्रत्याख्याननामकषायाष्टकशेषम्, वेदत्रयस्यानुदीर्णयोर्वेदयोरधमवरं, ततस्तद् द्वितीयं, ततो हास्यादिषट्कं, ततः तृतीयवेदमुपशमक्रमवत्, ततः संज्वलनमेकैकम्। एषां च क्षयकालोऽन्तर्मुहूर्तः प्रत्येकम्, समस्तश्रेणिकालोऽप्यन्तर्मुहूर्त्तमेव। सर्वत्र च सावशेष एव च पाश्चात्ये पौरस्त्यमारभते। ॥१३२३–२६॥

**दंसणमोहक्खवणे णियट्टि अणियट्टिबातरो परतो।**
**जाव तु सेसो संजलणलोभसंखेज्जभागो त्ति ॥१३२७॥**

**दंसण०** गाहा। स च दर्शनमोहनीयक्षये निवर्त्तीति व्यपदिश्यते परतोऽनिवर्त्तिबादरो यावत् संज्वलनलोभसंख्येयभागावशेषः ॥१३२७॥

**तदसंखेज्जतिभागं समए समए खवेति एक्केक्कं।**
**तत्थ य सुहुमसरागो लोभाणू जावं[1] मेक्कोवि ॥१३२८॥**

**तद०** गाहा। तस्य च प्रतिसमयमेकैकमसंख्येयभागं क्षपयन् समस्तमन्तर्मुहूर्त्तेन क्षपयति। तत्र चैकभागावशेषेऽपि सूक्ष्मसम्परायोऽभिधीयते ॥१३२८॥

**खीणे खवगणियंठो [3]वीसमते मोहसागरं तरितुं।**
**अंतोमुहुत्त[4]मुदधिं तरितुं थाहे जधा पुरिसो ॥१३२९॥**

**खीणे** गाहा। क्षीणे तस्मिन्नपि क्षपकनिर्ग्रन्थतामवाप्य महासमुद्रप्रतरणपरिश्रान्त इवान्तर्मुहूर्त्तमात्रं विश्राम्यति ॥१३२९॥

**छतुमत्थकालदुचरिमसमए णिद्दं खवेति पयलं च।**
**चरिमे केव[5]लल्लाभो खीणावरणंतरायस्स ॥१३३०॥**

**छउ०** गाहा। ततः छद्मस्थकालद्विचरमसमये निद्राप्रचले क्षपयति। [6]चरमसमये च प्रक्षीणज्ञानदर्शनावरणान्तरायस्य केवलमुत्पद्यते ॥१३३०॥

**आवरणक्खयसमए णेच्छइयणयस्स के[८७–प्र०]वलुप्पत्ती।**
**तत्तोऽणंतरसमए ववहारो केवलं भणति ॥१३३१॥**

---

१ °संखि° को हे। २ जाव से को वि जे। जाव इक्कोवि त। ३ बिइस° त। ४ °मुदिइं त। ५ केवलि° त। ६ °ति। न चर°–इति प्रतौ।

**णाणं ण खिज्जमाणे खीणे[1] जुत्तं [2]जतो तदावरणो ।**
**ण य किरियाणिट्ठाणं कालेगत्तं जतो जुत्तं ॥१३३२॥**

**जति किरियाए ण खओ को हेतू तप्परिक्खए अण्णो ।**
**अध ताए किध काले अण्णत्थ तई खयो[3]ऽण्णत्थ ॥१३३३॥**

**किरियाकालम्मि खयो जति णत्थि तओ ण होज्ज पच्छा वि ।**
**जति[4]वऽक्किरियस्स खयो पढमम्मि त्रि किं[5]त्थ किरियाए ॥१३३४॥**

आव० गाहा [४] । यदि न क्रियाकाले परिक्षयः पश्चादपि न भविष्यति कुतोऽक्रियत्वात् पूर्वकालवत् । यदि चेहाऽक्रियस्यापि क्षयो किमन्येन[6] ? इतः पूर्वसमयेऽपि क्रिया मा भूत् ॥१३३१–१३३४॥

**जं णेज्जरिज्जमाणं णिज्जिण्णं ति भणितं सुते जं च ।**
**णोकम्मं[7] णिज्जीरति णावरणं तेण तस्समए ॥१३३५॥**

जं० गाहा । यतो हि निर्जीर्यमाणं निर्जीर्णमिति सूत्रेऽभिहितं "चलमाणे चलिए जाव णिज्जमाणे णिज्जिण्णे"त्ति अतः क्षीयमाणं क्षीणमेव, नानयोः कालभेदः, यतश्च कर्म वेद्यते नोकर्म निर्जीर्यत इति सूत्र एवापदिष्टमतः क्षयकालेऽनावरणस्य च केवलप्रसूतिरिष्यते ॥१३३५॥

**जति णाणमणावरणे त्रि णत्थि तो तं ण णाम पज्छा त्रि ।**
**जातं च अकारणतो तमकारणतो च्चिय [8]पदेज्जा ॥१३३६॥**

**जति** गाहा । यदि चाऽनावरणेऽपि न ज्ञानम्, अतः पश्चादपि न भविष्यति, विशेषहेत्वभावात् । उतानावरणत्वे पूर्वमभूतं पश्चाद् भवति । नन्वकारणा प्रभूतिरस्य । ततश्चाकारणप्रभूतत्वादकारण एव पातोऽपि स्यात् ॥१३३६॥

**णाणस्सावरणस्स य समयं तम्हा पगासतमसो व्व ।**
**उप्पातव्वयधम्मा तध णेया सव्वभावाणं ॥१३३७॥**

**णाणस्स** गाहा । तस्मादिह ज्ञानस्याऽऽवरणस्य च प्रकाश-तमसोरिव युगपदुत्पाद-व्ययावनुमन्तव्यौ, आत्मनश्च द्रव्यतयाऽवस्थानम्, तत्पर्यायत्वात्, ऋजुत्व-वक्रत्वाङ्गुलिवत्, सर्वभावानामप्येष धर्म इति ॥१३३७॥

---

१ खीणं त । २ ततो त । ३ °णत्थ जे। °योऽणत्थ हे । ४ वाऽकिरि° हे । ५ किंव किं° त । कीस, किं° को हे । ६ किमन्यतेतः–इति प्रतौ । ७ निज्जरिज्जइ को । निज्जरिइ हे । ८ पडिज्जा त ।पडेज्जा हे को

उभयावरणातीतो केवलवरणाणदंसणसभावो ।
जाणति पासति य जिणो [1]सव्वं णेयं सताकालं ॥१३३८॥
[८७–द्वि०] संभिण्णं पासंतो लोगमलोगं च सव्वतो सव्वं ।
तं णत्थि जं ण पासति भूतं भव्वं भविस्सं [2]वा ॥१२२॥१३३९॥
बाहिं जधा [3]तधंतो संभिण्णं सव्वपज्जवेहिं वा ।
अत्तपरणिव्विसेसं सपरप्पज्जायतो वा वि ॥१३४०॥
संभिण्णग्गहणेण व दव्वमिह सकालपज्जवं गहितं ।
लोगालोगं सव्वं ति सव्वतो [4]खेत्तपरिमाणं ॥१३४१॥

**उभया०** गाहा । **संभिण्ण०** गाहा । **बाहिं०** गाहा । **संभिण्ण०** गाहा । अथवेह संभिन्नग्रहणमागृह्यते कालभावौ च तत्पर्यायत्वात् ताभ्यां समन्ताद् भिन्नं संभिन्नं लोकालोकं च सर्वत इति क्षेत्रमेतावच्च ज्ञेयं यद् द्रव्यादिचतुष्टयम् ॥१३३८–१३४१॥

तं पासंतो भूतातिं जं ण पासति तओ तयं णत्थि ।
पंचत्थिकायपज्जय[5]माणं णेयं जतोऽभिहितं ॥१३४२॥

**तं पासं०** गाहा । न च द्रव्यादिभ्यो भूतादिकालविशिष्टेभ्योऽन्यद् ज्ञेयमस्ति यदुपलभ्येत, पञ्चास्तिकायपर्यायबहिर्भावादिति॥१३४२॥

तवणियमणाणरुक्खं आरूढोऽयं जिणो अमितणाणी ।
[7]एत्तो स परंपरओ [8]एत्तो जिणपवयणुप्पत्ती ॥१३४३॥

**तव०** गाहा। अयं स जिनस्तपो-नियम-ज्ञानमयमारूढो वृक्षम्, एतस्मात् सामायिकादिश्रुतमाचार्यपारम्पर्येणाऽऽयातम्, एतस्माच्च जिनप्रवचनोत्पत्तिरिति ॥१३४३॥

णिज्जुत्तिसमुत्थाणप्पसंगतो जाव पवयणुप्पत्ती ।
पासंगियं गतमिदं[9] वोच्छामि [10]इतो उवग्घातं ॥१३४४॥

**णिज्जुत्ति०** गाहा । निर्युक्तिसमुत्थानप्रसङ्गतः केवलज्ञानादिवृक्षारोहणादारभ्य यावज्जिनप्रवचनोत्पत्तिरिति तत् प्रासङ्गिकमुक्तम् । अतः प्रकृतमुपोद्घातं वक्ष्यामः । ॥१३४४॥

---

१ °णो णेयं सव्वं **को हे** । २ च **को हे त** । ३ तहिंतो **त** । ४ खित्त° **को हे** । ५ पज्जा° **त** । ६ °माण **त** । ७ इत्तो **त** । ८ इत्तो **त** । पत्तो **जे** । ९ °मियं **को हे** । °मिणं **त** । १० अतो **त** । अओ **हे** ।

अच्छतु ताबुग्धातो का पुण जिणपवयणप्पसूति[1] त्ति ।
तं [2]केत्तियाभिधाणं पवयणमिह को विभागो से[3] ॥१३४५॥
एतं पसंगसेसं [4]वोत्तुमुवग्घातवित्थरं [6]वोच्छं ।
तो सेसदाराइं कमेण तस्संगहो चेमो ॥१३४६॥

**अच्छतु** गाहा । **एतं** गाहा । आह–तिष्ठतु तावदुपोद्घातः, यथेयं जिनप्रवचनोत्पत्तिः, तद्वा जिनप्रवचनं कियदभिधानम् ? अभिधानविभागो वाऽस्य कः ?–इत्येतत् प्रसङ्गशेषमभिधायोपोद्घातविस्तरं वक्ष्यामः, ततोऽवशेषद्वाराणीति । तत्संग्रहश्चायम् ॥१३४५–४६॥

[८८–प्र०]जिणपवयणउप्पत्ती पवयणएगट्ठिया विभागो य ।
दारविधी य णयविधी वक्खाणविधी य अणुओगो ॥१२३॥१३४७॥
*पासंगियमाइतियं दारविहि त्ति [7]विहिओउवग्घाओ ।
अणुओगदारं पुण चउत्थमिट्ठं नयविहि त्ति ॥१३४८॥

**जिण०** गाहा । **पासं** गाहा । अत्र जिनप्रवचनोत्पत्तिः प्रवचनैकार्थाभिधानानि तद्विभागश्चेति तत्त्रयमप्येतत् प्रासङ्गिकम् । द्वारविधिरिति चतुर्थमनुयोगद्वारम् । ॥१३४७–४८॥

* सीसायरियपरिक्खा वक्खाविहि त्ति कहणमज्जाया ।
सुत्तप्फासियर्जुत्ती सुत्ताणुगमोऽयमणुओगो ॥१३४९॥

**सीसा०** गाहा । शिक्षा(ष्या)चार्यपरीक्षाविधौ व्याख्यानविधिः सूत्रस्पर्शिकनिर्युक्तिः सूत्रानुगमश्चानुयोग इति ॥१३४९॥

किं पुण चउत्थदारं णयविधिमभिधाय तोऽणुयोगो त्ति ।
चतुदाराऽसंगहिता वक्खाणविधि व्व किं गहिता ॥१३५०॥

**किं पुण०** गाहा । आह–किं पुनश्चतुर्थमनुयोगद्वारं नयविधिमभिधायानुयोगोऽभिधीयते ? कश्चायं व्याख्यानविधिर्नामेति चतुरनुयोगद्वारातिरिक्तः ? ॥१३५०॥

बंधाणुलोमताए [10]केयिं ण जतो तई कमेणं पि ।
तीरति णिबंधितुं जे तेणेयं बुद्धिपुव्व त्ति ॥१३५१॥

**बंधा०** गाहा । तत्र केचिन्मन्यन्ते बन्धानुलोमानुवृत्त्याऽनुयोगनयविधिविपर्ययः । तच्च न यतैः क्रमेणापि शक्यतेऽभिधातुं, यथा–दारविधी वक्खाए विधिरणुओगे णयविही य । तस्माद् बुद्धिपूर्वो विपर्ययः ॥१३५१॥

---

१ सूय त्ति त । २ किंत्ति को हे । ३ सो को हे । ४ वुत्तुं हे । ५ °वघा° त । ६ वुच्छं त । ७ विहिउं को ह । ८ °यणि ज्जुत्ति को । * ने-प्रतौ नास्ति गाथाद्वयम् । १० केई को हे त । ११ नयनक०–इतितौ प्र० ।

**अंतम्मि उवण्णसितुं पुव्वमणुगमस्स जं णए भणति ।**
**तं जाणावेति [2]समं वच्चंति णयाणुयोगो य ॥१३५२॥**

**अंतंमि०** गाहा । यतश्चतुरनुयोगद्वारक्रमतोऽन्ते नयविधिमुपन्यस्यानुगमादावाह तत् ज्ञापयति नयानुगमावनुसूत्रं युगपदनुधावतः ? यतः को हि नयमतशून्योऽनुगमः ? किन्त्वशक्यत्वान्न युगपदुन्यासः—इत्यनुयोगद्वारचतुष्टयोपन्यासेऽन्ते नयविधिः, इहानुगमादाविति यौगपद्योपदर्शनार्थ[म्] ॥१३५२॥

**सुत्ताणुगमावसरे गुरुसीसाणुग्गहोवदेसत्थं ।**
**वक्खाणविधिं जंपति मूलद्दाराणधिकतं पि ॥१३५३॥**

**सुत्ता०** गाहा । इह सुश्राव्यं सुव्याख्यानं च कथं शास्त्रं भवेदित्यतश्चतुरनुयोगद्वाराऽनधिकृतमपि सूत्रानुगमादौ व्याख्यानविधिमभिधत्ते ॥१३५३॥

**अधवा [3]साहिकत च्चिय वक्खाणंगं[८८–द्वि०] ति जं ततोऽणुगमे ।**
**जं जं वक्खाणंगं तं तं [4]सव्वं जतोणुगमो ॥१३५४॥**

**अहवा०** गाहा । अथवा स व्याख्यानविधिरधिकृत एवेह द्रष्टव्योऽनुगमान्तर्भावात् । कथं पुनरस्यानुगमान्तर्भावः । व्याख्यानाङ्गत्वात् । यतो यद्यद् व्याख्यानाङ्गं तत्तदनुगम इति । व्याख्यानविधिरिति वः पुंसकिरुपसर्गपूर्वः पुंसीति वचनात् पुंल्लिगम्, इह तु प्राकृताभिधानाद्रूढितः स्त्रीलिङ्गमुक्तम् ॥१३५४॥

**सुत्ताणुगमादीए वक्खाणविधी जतो तदंगं सा ।**
**जं च सुतावसरे [5]च्चिय सफलाइं गवातिणा ताइं ॥१३५५॥**

**सुत्त०** गाहा । यतश्च सूत्रानुगमादौ व्याख्याविधिरुक्तोऽतश्च तदङ्गमसौ । यच्च सूत्रव्याख्यानावसर एव गवादिदृष्टान्तसाफल्यं युक्तमिति ॥१३५५॥

**जति साऽणुगमंगं चिय दारविधीए ततो किमातीए ।**
**[6]ओतारेतुं भण्णति उक्कमकरणे गुणो को णु ? ॥१३५६॥**

**जति** गाहा । आह—यद्यसावनुगमाङ्गमेवातः किमवतार्य द्वारविधिरादावुच्यते ? [7]को ह्युत्क्रमकरणे गुणलाभः ? ॥१३५६॥

**दारविधी वि महत्था तत्थ वि वक्खाणविधिविवज्जासो ।**
**मा होज्ज तदातीए वक्खाणविधिं णिरूवेति ॥१३५७॥**

**दार०** गाहा । उच्यते—द्वारविधिरपि बहुवृत्तान्तः सूत्रवत् । ततः अत्रापि व्याख्याविधिविपर्ययो मा भूत्तदादौ निरूप्यते ॥१३५७॥

---

१ भणाई **को हे त** । २ सम्मं **को** । ३ सादिं **जे** । ४ सव्वो **जे** । ५ °सर च्चिं **जे** । ६ उयारे° **हे** । ७ नोद्युत्क°—इति प्रतौ ।

**एत्थेव गुरू सीसं सीसो [1]य गुरुं परिच्छितुं पच्छा।**
**वोच्छिति सोच्छिति व सुहं मोच्छिति व सुदिट्ठपेयालो ॥१३५८॥**

**एत्थेव** गाहा। अत्रैव द्वारविधावाचार्यो जिज्ञासितगुण-दोषो गुणवते शिष्याया- ऽस्यानुयोगं वक्ष्यति, शिष्यश्च गुणवदाचार्यसन्निधावेव श्रोष्यति, मोक्ष्यति वा दोषवन्तम्, आचार्यश्च शिष्यमिति ॥१३५८॥

**साणुगमंगं पि इधं जति भण्णति किण्णं[2] कीरति इधेव।**
**दाएति पयत्ततरं वक्खाणविधीये[3] सुत्तम्मि ॥१३५९॥**

**सा०** गाहा। आह–स यदि व्याख्यानविधिरनुगमाङ्गमपीहावतार्योच्यते संग्रह- गाथायामपीहैव किं न क्रियते? उच्यते–सूत्रव्याख्यानाऽऽदराऽऽधानार्थमिह विशेषेण सूत्र- व्याख्यायामाचार्यः शिष्यो वा गुणवानन्वेषणीयः ॥१३५९॥

**अणुओगातिविभागे वक्खाणविधी वि तप्पसंगेणं।**
**जंपंति केई तेसिं [4]वत्तु सोतुं व को जोग्गो ॥१३६०॥**

**अणु०** गाहा। केचिदाचक्षते–अनुयोगादिविभागद्वार एव व्याख्याविधिरपि प्रसङ्गतोऽभिधीयते यथैषामनुयोगादीनां कोऽभिधातुं योग्यः श्रोतुं चेति शिष्या- चार(र्य)विचारः ॥१३६०॥

**संगहगाधाए [5]पुण [6]अणियोगादीये बेन्ति दाएन्ता।**
**जो वण्णितोऽणुओगो सोऽयं स विधी जदत्थं ति ॥१३६१॥**

[**संगह०** गाहा] संग्रहगाथायां पुनरनुगमादावुपदर्शयति। यथा यस्तु विभागद्वारे अनुयोगोऽभिहितः सोऽयमिदानीमुच्यते पदार्थः स व्याख्यानविधिरिति ॥१३६१॥

**[८९–प्र०] सुयमिह [7]जिणपावयणं तस्सुप्पत्ती पसंगतोऽभिहिता।**
**जिणगणधरवयणातो इमाइं तस्साऽभिधाणाइं ॥१३६२॥**

**सुय०** गाहा। इह यदुक्तं केयं जिनप्रवचनोत्पत्तिरिति? [गाथा० १३४५] ननू- [क्त]मर्हद्वचनं जिनप्रवचनम्। अस्य च निर्युक्तिसमुत्थानप्रसङ्गतः [गा० १०६६] एवोत्पत्तिरभिहिता जिन-गणधरेभ्यः। यत् पुनरुक्तं 'तत्रा जिनप्रवचनं कियदभिधानम्' अभिधानविभागो वाऽस्य कः [गा० १३४५]? इति। ॥१३६२॥ अत्रोच्यते–

---

१ व **जे**। २ किण्णु **जे**। ३ विहीं य **को हे त**। ४ वोत्तुं **को**। वुत्तुं **हे**। ५ पुणो **हे**। ६ अणुओगाईए **को हे**। अणुयोगाइइ **त**। ७ जिणप्प° **त**। °जिणप° **को हे**।

**एगट्ठियाइं[1] तिण्णि तु पवयण सुत्तं तधेव अत्थो य ।**
**एक्केक्कस्स [2]तु एत्तो णामा एगट्ठिया पंच ॥१२४॥१३६३॥**

**जमिह पगतं पसत्थं पधाणवयणं[3]व पवयणं तं च ।**
**सामण्णं सुतणाणं विसेसतो सुत्तं[4]मत्थो य ॥१३६४॥**

**एगट्ठिया०** गाहा । **जमिह** गाहा । इह यस्मात् प्रगतं प्रशस्तं प्रधानमादौ वा वचनं प्रवचनमिति । तच्च सामान्यमेव श्रुतज्ञानम्, तदेव हि विशेषतो विभज्यमानं सूत्रमर्थश्च ॥१३६३–४॥

**सिंचति खरति जमत्थं तम्हा सुत्तं णिरुत्तविधिणा वा ।**
**[5]सूचेति [6]सवति [7]सुव्वति [8]सिव्वति [9]सरते य जेणत्थं ॥१३६५॥**

**सिंचति** गाहा । तत्र "षिच क्षरणे" इति, सिञ्चति क्षरत्यर्थात्मानमिति सूत्रम् । अथवा नैरुक्तेन विधिना सूचनादिभिः सूत्रमुच्यते ॥१३६५॥

**अविवरितं सुत्तं पिव सुट्ठितवावित्ततो[10]सुवुत्तं ति ।**
**जो सुत्ताभिप्पाओ सो अत्थो अज्जते जम्हा ॥१३६६॥**

**अवि०** गाहा । अविवृ(त्रि)यमाणमर्थतः सुप्तमिवाऽऽस्ते सुषुप्तपुरुषवत् । तथेह सुस्थितत्वाद् व्यापित्वाच्च सूक्तमुच्यते, प्राकृताभिधानात् [11]सुत्तमिति, तथाऽर्यतेऽसावित्यर्थः, गम्यतेऽनुस्रियत इति यावत् । स च सूत्राभिप्रायः॥१३६६॥

**सह पवयणेण जुत्ता णं[12] सुतत्थेगत्थता परोप्परतो ।**
**जं [13]सुत्तं वक्खेयं अत्थो जं तस्स वक्खाणं ॥१३६७॥**

**सह** गाहा । आह–सूत्राऽर्थयोः प्रवचनेनैं[14] सहैकार्थता युक्ता, तद्विशेषत्वात्, न तु तयोरेव परस्परतः, यतः सूत्रमिति व्याख्येयमुच्यते तदर्थश्च व्याख्यानमिति ॥१३६७॥

**जुज्जति [15]व विभागातो तिण्ह वि भिण्णत्थता ण चेतं[16]रधा ।**
**एगत्थाणं पि पुणो किमिहेगत्थाभिधाणेहिं ॥१३६८॥**

**जुज्जति** गाहा । अथवेह विभागसद्भावात्[17] त्रयाणामप्येषां भिन्नार्थतैव युज्यते, अन्यथा ह्येकार्थत्वे सति पुनरेकार्थाभिधानमनर्थकम् ॥१३६८॥

---

१ °याणि हे । २ य को हे त । ३ च हे । ४ °त्त अत्थो° जे । ५ सूएइ को हे । ६ सुव° त । ७ सिव्व° जे । ८ सिज्ज °जे । ९ सिर° त । १० °त्तउ व सुत्तं हे । °त्तओ व सुत्तं को त । ११ सूत्र-इति प्रतौ । १२ °त्ता सुत° त । १३ सुयं हे । १४ °ने सहै° -इति प्रतौ । १५ च हे १६ चेहर° त हे । १७ °वाश्रया°-इति प्रतौ ।

मउलं फुल्लं ति जधा संकोयंविकासमेत्तभिण्णाइं।
अत्थेणाभि[८९-द्वि]ण्णाइं कमलं सामण्णतो चेक्कं[2] ॥१३६९॥

अविवरितं तध सुत्तं विवरितमत्थो त्ति बोधकालम्मि।
किंचिम्मत्तविभिण्णा सामण्णं पवयणं णेयं ॥१३७०॥

मउलं गाहा। अवि० गाहा। उच्यते यथेह मुकुलमुत्फुल्लमिति चैतयोः सङ्कोच-विकासपर्यायाभ्यां भेदः, सामान्यार्थतया वाऽभेदः कमलमिति, न चैषां पुनरेकार्थविभागो न युज्यते; तद्यथा—आद्यस्य मुकुलं कुड्मलं वृन्दमित्यादि, द्वितीयस्य फुल्लं विकचं विकोशं विकसितमित्यादि, तृतीयस्य कमलं पङ्कजमरविन्दमित्यादि; तथेहाविवृतमर्थतो मुकुलकल्पं सूत्रमुच्यते, तदेव हि प्रबोधितं सत् फुल्लकमलकल्पमर्थविशेषः, श्रुतसामान्यमूरीकृत्य प्रवचनमिति। न चैषामेकैकशः पुनरेकार्थाभिधानमयुक्तम् ॥१३६९–७०॥

सामण्णविसेसाणं जध वेगाऽणेगता ववत्थाए।
तदुभयमत्थो य जधा वीसुं बहुपज्जयौ ते य ॥१३७१॥

एवं सुत्तत्थाणं एगाणेगत्थता ववत्थाए।
पवयणमुभयं च तयं तियं च बहुपज्जवं वीसुं ॥१३७२॥

सामण्ण०गाहा। एवं गाहा। यथा चेह न सर्वथा सामान्यमन्यद् विशेषेभ्यः, न च विशेषमात्रम्, तथा न विशेषाः सामान्यादन्याः, न च सामान्यमात्रम्, किं तर्हि? व्यवस्थातः सामान्यापेक्षा विशेषाः, विशेषापेक्षं च सामान्यम्, उभयं चार्थाभिधानादवरुध्यते, न चैषामेकैकशः पर्यायाभिधानमयुक्तम्। तद्यथा—सामान्यं सत्ता भाव इति, तथा विशेषो भेदः पर्याय इति, द्रव्यं वस्तु अर्थ इति, तथेह सूत्राऽर्थप्रवचनानामेकानेकार्थता व्यवस्थातोऽनुयोजनीया, पुनरेकैकशश्च पर्यायवचनविभागः ॥१३७१–७२॥

अधवा सव्वं णामं वंजणसुद्धियणयस्स भिण्णत्थं।
इतरस्साऽभिण्णत्थं संववहारो य तदवेक्खो ॥१३७३॥

---

१ °विबोहमित्त° को। °विबोहमेत्त° हे। २ चेगं को हे। ३ °वरी° हे। ४ °ज्जवा को हे। ५ °गट्ठया हे। ६ °ज्जयं को हे। ७ °नद°-इति प्रतौ। ८ °स्स अभि° हे।

**अधवा** गाहा। अथवा व्यञ्जनशुद्धिकनयाभिप्रायात् सर्वमेव हि भिन्नार्थं नाम। कुतः? शब्दभेदेऽर्थभेदात् घट-पटाद्यभिधानवत्। इतरनयाभिप्रायादभिन्नार्थं वस्तुनोऽनेकपर्यायत्वाच्छक्रेन्द्र-पुरन्दरादिवत्। अथवा तत्प्रत्ययहेतुसंव्यवहारदर्शनाद् घट-कुट-कुम्भाभिधानवत् प्रायोवृत्त्या च व्यवहारनयापेक्षया लोकसंव्यवहारः ॥१३७३॥

**संववहारत्थाए तम्हा जेणेगता ण णिच्छयतो।**
**तो जुत्ताइं तेसिं वीसुं पज्जायणामाइं ॥१३७४॥**

**संवव०** गाहा। तस्माद् यतः संव्यवहारनयाभिप्रायेणाभिधानैकार्थता निश्चयेनाऽनेकार्थता तस्माद् व्यवहारतः प्रवचनादित्रयस्य पुनरेकार्थाभिधानता युक्तेति ॥१३७४॥

**सुअधम्म तित्थ मग्गो पावयणं पवयणं च एगट्ठा।**
**सुत्तं तंतं गंथो पाढो सत्थं च एगट्ठा ॥१२५॥१३७५॥**
**बोधो सुतस्स धम्मो सुतं व धम्मो स जीवपज्जाओ।**
**सुगतीयें संजमम्मि य धरणातो वा सुतं धम्मो ॥१३७६॥**

**सुअ०** गाहा। **बोधो** गाहा। तत्र श्रुतस्य धर्मः श्रुतधर्मः। धर्मः स्वभावः। स बोधः, बोधस्वभावत्वाच्छ्रुतस्य। अथवा श्रुतं च तद्धर्मश्च स जीवस्येति श्रुतधर्मो जीवपर्यायः। अथवा सुगतौ संयमसमाधौ वा धारणाद्धर्मः श्रुतमुच्यते ॥१३७५-७६॥

**तित्थं ति पुव्वभणितं संघो जो णाण-चरणसंघातो।**
**इध पव[९०-प्र०]यणं पि तित्थं तत्तोऽणत्थंतरं जेण ॥१३७७॥**

**तित्थं ति** गाहा। तीर्थमित्युक्तं प्राक् [गा०१०२३-४३]। सङ्घः इहेदानीम्। सङ्घोपयोगानन्यत्वात् प्रवचनं तीर्थमुच्यते ॥१३७७॥

**मज्जिज्जति सोधिज्जति जेणाता पवयणं ततो मग्गो।**
**अधवा सिवस्स मग्गो मग्गणमण्णेसणं पंथो ॥१३७८॥**

**मज्जिज्ज०** गाहा०। "मृजू शुद्धौ" मृज्यतेऽनेनात्मेति मार्गः, अथवा मार्गणं मार्गोऽन्वेषणं पन्थाः शिवस्येति ॥१३७८॥

**पेगयाइ अभिविहीइ यँ पवयणं पावयणमाइवयणं वा।**
**सिवपावयवयणं वा पावयणं पवयणं भणियं ॥१३७९॥**

---

१ °रत्था° को हे। २ जम्हा को। ३ पाठो हे। ४ °गईइ त। °गईए को हे। ५ सुतो जे। ६ सज्जीव°-इति प्रतौ। ७ जत्तो° जे। ८ जेणत्ता त। जेणं तो को हे। ९'पगयाइ' इत्यादि गाथाद्वयं नास्ति जेप्रतौ। १० °हीए प° को हे। ११ °यणपा° त।

